स्पदानामपि देहेन्द्रियमनसां प्रतिभासतोऽहङ्कारास्पदत्वेन तदविवेकात्, तेन च शुद्धेऽप्यात्मनि दुःखित्वाद्यभिमानात् शास्त्रीयेण च ब्रह्मात्मैक्यज्ञानेन समूलस्य तस्य निवृत्तेः,

न्यायरत्नावली ।

स्पदानामात्मभिन्नतया दृढतया ज्ञातानाम् । प्रतिभासतोऽहङ्कारास्पदत्वेन उक्तमनोवृत्तेः पूर्वं प्रतीयमानात्मतादात्म्यवत्त्वेन । अविवेकात्—उक्तमनोवृत्तिरूपविवेकज्ञानसमुच्छेद्यसकलभ्रमनिदानानाद्यज्ञानकल्पनात् । तथा च आत्मानात्मनोरत्यन्तविरुद्धस्वभावत्वेऽपि तादात्म्यप्रतीतेरनुभूयमानत्वात्तदन्यथानुपपत्त्या तदुपपादकमनाद्यज्ञानं कल्प्यते । यदा तूक्तमनोवृत्त्युत्पत्ति(१)स्तदुत्तरं सकलदृश्यानामाभासीकृतानां प्रारब्धभोगशेषं क्षपयता जीवन्मुक्तेन मिथ्यात्वदृश्यत्वादिहेतुनाऽऽत्मभिन्नत्वेन ज्ञायमानत्वेऽपि न शास्त्रवैयर्थ्यशङ्का । शास्त्रस्याप्याभासीकृतत्वेन वैयर्थ्यस्येष्टत्वादिति भावः । आत्मानात्मनोस्तादात्म्याध्यासे स्थिरीभूते तद्धर्माणामपि मिथः संसर्गाध्यासः प्रतीयते तस्य तन्नियतत्वादित्याशयेनाह—तेन चेति । अनात्मतादात्म्याध्यासेन चेत्यर्थः । तृतीयार्थो ज्ञापकहेतुता दुःखित्वाद्यभिमानं प्रति बोध्या । युगपदेव धर्मितादात्म्यधर्मसंसर्गयोरध्यासेन कारकहेतुत्वासम्भवात् । शुद्धे—अनात्मधर्मदुःखादिना परमार्थतो हीने । समूलस्य—मूलीभूताज्ञानसहितस्य । तस्य—उक्ताध्या-

नारायणी ।

णामपि दृष्टभिन्नानामिति यावत्(२) । प्रतिभासतः—गौरोऽहं काणोऽहं कर्तास्मीत्यादिभ्रमात् । अहङ्कारास्पदत्वेन—अहमितिधीविषयत्वेन । तदविवेकात् (३)आत्मन इतरभिन्नत्वेनाज्ञानात् । तेन च

---

(१) अत्र तदुत्तरमित्यस्य स्थाने तदोत्तरमित्यावश्यकं यदाशब्दानुरोधात् । अथवा तदा शब्दोऽध्याहार्यः ।

(२) दृश्यत्वेनेत्यत्र तृतीयार्थौ ज्ञानज्ञाप्यत्वं द्रष्टृभेदे साध्येऽन्वेति, तथाच शास्त्राद्यावद् दृग्दृश्यविवेको न भवति तावत् । इत्यधिकः पाठः खपुस्तके ।

(३) तस्य आत्मनः अविवेकात् इतरभिन्नत्वेनाज्ञानादित्यर्थः ।

न्यायरत्नावली।

सस्य। निवृत्तेः—उच्छेदात्।

ननु कोऽयमुच्छेदः ?। न ध्वंसः। तस्य हि सत्यत्वे अद्वैतश्रुतिविरोधः। मिथ्यात्वे चरममनोवृत्त्युत्पत्त्युत्तरमुत्पन्नस्य तस्य समुच्छेदकाभावेन उच्छेदाभावात् 'विद्वान्नामरूपाद्विमुक्त' इत्यादिश्रुतिविरोधः। अथोक्तध्वंसस्य सत्यत्वेऽपि श्रुतेर्न विरोधः, तया भावाद्वैतबोधनादिति चेन्न। असङ्कुचिताद्वैतस्य श्रुत्यर्थतया प्रतीयमानत्वात्। अत्रोच्यते। दृश्याधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वानाधिकरणत्वं दृश्योच्छेदः। शास्त्रीयचरमतत्त्वज्ञानोत्पत्तिक्षणे च दृश्याधिकरणक्षणपूर्वत्वं नास्ति, तदुत्तरतादृशक्षणस्याप्रसिद्धत्वात्। तत्पूर्वत्वस्य क्षणान्तरे प्रसिद्धस्यापि तत्रासम्भवात्। नानाजीवपक्षे तज्जीवीयचरमतत्त्वज्ञानक्षणे तज्जीवीयदृश्याधिकरणकालपूर्वत्वाभावो वाच्यः। जीवान्तरीयदृश्याधिकरणकालपूर्वत्वसत्त्वात्।

ननु दृश्यपूर्वत्वाभाव एव निवेश्यतां किं दृश्याधिकरणकालनिवेशेनेति चेन्न। दृश्यपूर्वत्वं दृश्यप्रागभावकालवृत्तित्वम्। तथा च तदभावो न दृश्योच्छेदशब्दार्थः(१)। चरमतत्त्वज्ञानक्षणवृत्तिदृश्यानामाग्रिमकालानुवृत्तिवादिनां तार्किकादीनां मतेऽपि तादृशोच्छेदव्यवहारसम्भवात्, अविद्याद्यनादिदृश्यानां तादृशोच्छेदव्यवहारासम्भवाच्च, तेषां प्रागभावाप्रसिद्धेः। ननु क्षणप्र-

नारायणी।

अज्ञानेन च। (२)दुःखित्वाद्यभिमानात् दुःखित्वादिभ्रमात्(३)।

(१) दृश्यपूर्वत्वाभाव इत्यस्य दृश्यप्रागभावकालवृत्तित्वाभाव इत्यर्थः। तथाच दृश्यप्रागभावरूपस्य तस्य दृश्यरूपत्वमेव समायास्यतीति।

(२) शुद्धेपि सर्वधर्मातीतेपि। आत्मनि सर्वाधिष्ठाने साक्षिणि। इत्यधिकः पाठः।

(३) आदिना कर्तृत्वादिभ्रमपरिग्रहः। दुःखमेव साक्षाद्बन्ध इति ज्ञापयितुं दुःखस्य कण्ठरवेणोक्तिः। इत्यधिकं खपुस्तके।

न्यायरत्नावली।

वेशो ऽयर्थः, व्याप्तिविशेषबलेन क्षणस्यैव तादृशपूर्वत्वाभावस्स्वीक्रियते, तत्त्वप्रमाक्षणो यो यो भवति स तत्त्वाज्ञानतत्प्रयुक्तदृश्यकालपूर्वत्वाभाववान्, तत्त्वप्रमोत्पत्तिद्वितीयक्षणः तादृशाभाववानिति वा व्याप्तेः, तत्त्वज्ञानस्य क्षणिकत्वस्वीकारे आद्यः, कस्यापि न क्षणिकत्वमिति पक्षे द्वितीय इति चेत्। सत्यम्। तथापि तादृशव्याप्तिसूचनाय क्षणपदमिति बोध्यम्। अथैवमुच्छेदस्य निर्वचनेऽपि तत्र ज्ञानस्याजनकत्वेन ज्ञानेनेति तृतीयानुपपत्तिरिति चेन्न। तृतीयायाः प्रकृते ज्ञापकहेतुबोधकत्वात्। एतत्समानार्थकश्रुतयोऽप्येवं व्याख्येयाः।

नारायणी।

शास्त्रीयेण–तत्त्वमस्यादिवाक्यजनितेन। ब्रह्मात्मैकत्वज्ञानेन–ब्रह्मात्मनोः तत्त्वंपदार्थयोरखण्डरूपाभेदाऽर्थज्ञानेन। समूलस्य तस्य–अज्ञानरूपमूलसहितस्याहङ्काराद्यध्यासस्य। निवृत्तेः–नाशात्। नाशश्चाग्रे निरूपणीयः(१)। अयं भावः। श्रुतिस्मृतिपुराणादिषु समस्तोपाध्यनवच्छिन्नानन्तानन्दैकरसमद्वितीयमात्मतत्त्वं पठ्यते इति नाहंप्रत्ययस्य सोपाधिकार्थस्यात्मतत्त्वावगाहित्वं वक्तुं शक्यम्, स्वतःप्रमाणश्रुत्यादिविरोधात्। अहमिहैवास्मि सदन इत्यादिप्रतीतेर्भ्रमत्वावश्यकत्वाच्च आत्मनो व्यापकत्वात्। नापि तादृशप्रतीतीनां गौणत्वं वक्तुं शक्यम्, भेदाग्रहात्(२)। अतोहंप्रत्ययत्वाविशेषात् गौरोहं कर्तेत्यादिप्रत्यया अपि भ्रमरूपा एवेति सङ्क्षेपः।

(१) स्वाभिमतैक्यज्ञानस्य ग्राह्याभावानवगाहित्वेपि मणिमन्त्रादिन्यायेनैव सकलतादृशभ्रमनिवर्तकत्वं श्रुतिस्मृतिप्रमाणादिति भावः। अत्रैतन्मते अन्तःकरणधर्मस्य आत्मन्यसम्बन्धान्न तन्नाश उद्देश्यः सम्भवतीति तु न वाच्यम्, साक्षादसम्बन्धेपि कारणतादात्म्याध्यासवशादाध्यात्मिकतत्सम्बन्धाङ्गीकारात्। समूलस्य तस्येत्यनेन पुरुषव्यापारो हेतुरुच्छेदे। पुरुषार्थत्वं तु दुःखनिवृत्तेः स्वत इष्यमाणत्वादिति ज्ञापितम्। यद्यप्येतन्मते स्वप्रकाशब्रह्मसम्पत्तिरेव मोक्षः न तु दुःखाभावः, तथापि मोक्षे दुःखाभाव आवश्यकः स चोद्देश्योपि भवतीत्यत्र तथोक्तः, अविद्यानिवृत्तेस्तु दुःखनिदाननिवृत्तित्वेन गौणमेव पुमर्थत्वं न मुख्यमिति भावः। व्यक्तीभविष्यति चेदमुपरिष्टात्। इत्यधिकः पाठः खपुस्तके।

(२) शास्त्रजन्यविवेकज्ञानात् पूर्वं नाहं गौरो नाहं बधिरो नाहं कर्ता नाहं भोक्ता चेति भेदस्याग्रहादित्यर्थः।

न्यायरत्नावली।

अथैवमपि ज्ञाने इच्छानुपपत्तिः, मनोवृत्तिरूपस्य ज्ञानस्य (१)सुखदुःखाभावान्यत्वात्तत्साधनान्यत्वाच्चेति चेन्न। नितरां निरुध्य मनो निदिध्यासनादिना यतमानतया मुमुक्षुपुरुषे जायमानाया दुःखधारायाः निरतिशयात्मसुखाभिव्यक्तिनिदानत्वेन दुःखत्वेनागणनीयायाश्चरममनोवृत्तिसमुदयक्षणमारभ्य विच्छिन्नाया ध्वंसरूपत्वस्य चरमवृत्तौ सम्भवात्। यस्योत्पत्तिक्षणे हि यद्विच्छिद्यते, तत्पूर्वं च वर्तते, स एव मनःपरिणामस्तस्य ध्वंसः। यथा एकक्षणान्तरितोत्पत्तिकसमानविषयकज्ञानेच्छादिस्थले, तादृशोत्तरपरिणामस्य पूर्वपरिणामध्वंसरूपत्वौचित्यात्। तदन्यस्य ध्वंसस्य स्वीकारे तत्स्वरूपतद्धेतुत्वादिकल्पने गौरवात्। अभिव्यज्यमानात्मसुखव्याप्यत्वाच्च चरमवृत्ताविच्छा। यो हि यदा यदिच्छति स कदाचित्तद्व्याप्यमपीच्छतीति सर्वानुभवसिद्धम्। युक्तं चैतत् यस्मिन् सत्यवश्यमिष्टाभावस्तत्र द्वेषस्येव, यस्मिन् सत्यवश्यमिष्टं तत्रेच्छाया अनुभवात् चरमतत्त्वज्ञाने इच्छा। इष्टव्याप्यमपि हि लोकैरिष्यत इति सर्वानुभवसिद्धम्। अत एव विपदोऽपि स्वकीयाः श्रीकृष्णभगवद्दर्शनव्याप्यतया कामिताः कुन्त्या। तदुक्तं श्रीभागवते—

> विपदस्सन्तु नश्शश्वत्तत्र तत्र जगद्गुरो!।
> भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम्॥ इति।

युक्तं चैतत्। यस्मिन् सत्यवश्यमिष्टसम्बन्धस्तस्यापीष्टत्वौचित्यात्। अत एव "मोक्षः पुनरात्यन्तिकी दुःखनिवृत्तिरित्युक्त्वा काम्यश्च दुःखाभावः दुःखस्य स्वभावतो हेयत्वात्। सुखार्थं तथाऽयमिति चेन्न। दुःखाभावस्य सुखाहेतुत्वात्। अथ सुखव्या-

(१) सुखदुःखेति। सुखदुःखाभावयोर्वा सुखसाधने दुःखाभावसाधने वा इच्छा भवति, मनोवृत्तिरूपज्ञानस्य तदभावात्तत्र इच्छाभाव इति तात्पर्यम्।

प्यत्वात्स तथेति चेन्न । तस्य तदव्याप्यत्वादि"त्युक्तमुदयनाचार्यै-र्बौद्धाधिकारे । सुखव्याप्यत्वस्य काम्यत्वाप्रयोजकत्वे अथेत्यादिशङ्कानुपपत्तेः । तस्मात्सुखत्वादिवत्सुखादिव्याप्यत्वमपीच्छाप्रयोजकम् ।

वस्तुतस्तु अस्मद्दर्शने सुखमात्मैव । चन्दनादियोगजन्यमनोवृत्तेस्तत्र व्यञ्जकत्वमात्रम् । तस्य च न केवलरूपेण काम्यता, सिद्धत्वात् । नापि भानाविषयत्वेन, तस्य स्वप्रकाशत्वेन भानाविषयत्वात् । नाप्यावरणाभावविशिष्टतया, आवरणस्य तत्र कल्पितत्वेन तदभावस्यावरणकालेऽपि सत्त्वेन सिद्धत्वात् । किन्तु स्वावरणविरोधिमनोवृत्तिविशिष्टतया । यद्यप्यनवच्छिन्नानन्दरूपेण आत्मा मूलाज्ञानेन संसारकाले सदैवावृतः, तथाप्यवच्छिन्नसाक्ष्यानन्दाद्यावरणावस्थाविशेषस्य चन्दनादियोगजन्यमनोवृत्त्या समुच्छेदात्तस्याः स्वपूर्वकालीनसाक्ष्यानन्दाद्यावरणं प्रति विरोधित्वेन तद्विशिष्टतया काम्यत्वम् । एवं चरममनोवृत्तेरनवच्छिन्नात्मानन्दावारकमूलाज्ञानविरोधित्वात्तद्विशिष्टतया काम्यता । आवारकाज्ञानविरोधित्वं तु आवारकाज्ञानतत्प्रयुक्तदृश्ययोरुक्तोच्छेदवान् यः क्षणः तत्र वर्तमानत्वम् । यद्यपि साक्ष्यानन्दे कालान्तरावच्छेदेनावारकाज्ञानस्य एतत्कालीनमनोवृत्त्युत्पत्त्यव्यवहितपूर्वम् आवारकत्वाभावात् अज्ञानानामनादित्वेऽपि कदाचिदेव कस्यचिदज्ञानस्यावारकत्वमिति सिद्धान्ते स्वीकारात् कालान्तरावच्छेदेनावारकाज्ञाने एतत्कालीनमनोवृत्तिर्न विरोधिनी, तथापि या मनोवृत्तिः स्वोत्पत्त्यव्यवहितपूर्वकाले यादृशानन्दावारकाज्ञानस्य विरोधिनी तद्विशिष्टतया तादृशानन्दस्य काम्यतेत्युक्तौ न दोषः । तथा च तत्त्वज्ञाने इच्छानुत्पादेऽपि तद्विशिष्टरूपेण अनवच्छिन्नानन्दे इच्छासम्भवात् तादृशानन्दरूपेष्टप्रयोजकत्वज्ञानात् श्रवणादौ प्रवृत्तिः ।

वस्तुतस्तु मन्मतेऽपि तार्किकादिमत इव सुखत्वजातिमत्त्वेनैव

न्यायरत्नावली।

काम्यता, न तु तादृशवृत्तिमत्त्वेन, गौरवात्। उक्तजातिस्तु तादृश-वृत्त्युपहितात्मनि स्वीक्रियते। असत्त्वापादकाज्ञानाविषयत्वप्रयोजकाविशिष्टाचिति ज्ञानत्वजातिरिव, कैवल्यदशायामात्मनि ज्ञानत्वस्येव, सुखत्वस्यासत्त्वेऽपि तदुपलक्षितप्रकाशसत्त्वान्न दोषः। पद-वाच्यतावच्छेदकमात्रस्य तदानीमस्वीकारात् सर्वथापि मुमुक्षोस्तत्र प्रवृत्तिरुपपद्यते।

अथैवमपि तत्त्वधीकालपर्यन्तमनुवर्तमानः संसारबन्धस्तत्त्व-ज्ञानोत्पत्त्युत्तरकाले क्व गत इति प्रश्ने किमुत्तरं भवद्दर्शने इति चेत्। दर्शनान्तरे यदुत्तरम्। अथ दर्शनान्तरे आत्यन्तिको दुःखध्वंसस्तत्त्वज्ञानेन जायत इति चेत्, किं तावता दुःखं तु क्व गतम्। अथ न कुत्रापि गतम्, तत्त्वज्ञानोत्तरं तु कुतो न प्रमीयते इति चेत्, ध्वंसाधिकरणकालस्य प्रतियोग्यधि-करणत्वाभावनियमस्वीकारादिति चेत्, सत्यम्। सखे न खेदं तदा याहि। तत्त्वज्ञानोत्पत्तिक्षणस्य दुःखाधिकरणकालपूर्वत्वाभा-वनियमोऽपि नापलापितुं शक्यते तद्वत् अस्मदीयदर्शनेऽपि प्रमायाः स्वसमानविषयकाज्ञानतत्प्रयुक्तदृश्यविरोधित्वनियमः, शुक्त्यादि-प्रमायां तथा दर्शनात्।

अथ तत्त्वज्ञानस्य संसारनाशहेतुत्वे सत्येवेदमुपपद्यते, नाश-जनकस्य प्रतियोगिविरोधित्वनियमात्, अन्यथा व्याप्तिग्राह-कतर्कानवतारादिति चेन्न। घटदुःखादीनां तत्तत्कालाविशिष्ट-कपालात्मादिकमेव नाश इति प्राभाकरादिमतेऽपि मुद्गरपा-ततत्त्वज्ञानादीनां घटदुःखादिविरोधित्वस्वीकारात्। यदि तेषां तन्न स्यात्, तदाऽग्रेऽपि घटाद्यनुवृत्तिस्स्यात् इत्यादितर्कावताराच्च। एकाज्ञानपक्षे शुक्त्यादिप्रमाया उक्तविरोधित्वाभावात् अदृष्टान्तत्वेऽपि व्यतिरेकव्याप्तिग्रहसम्भवात् सम्भवत्येव प्रमाया उक्तविरोधित्वानु-मानम्। 'विद्वान्नामरूपाद्विमुक्त' इत्यादिश्रुतिप्रामाण्याच्चोक्तवि-

तस्मादज्ञातज्ञापकत्वात्सप्रयोजनकत्वाच्चात्मतत्त्वप्रतिपा-

न्यायरत्नावली।

रोधित्वमिति दिक्।

ननु जीवन्मुक्तिस्वीकारपक्षे तत्त्वज्ञानस्य नोक्तविरोधित्वमिति चेन्न। अप्रामाण्यज्ञानाद्यनास्कन्दितत्वेनेव भ्रमव्याप्यमुज्यमानादृष्टाद्यभावेनापि तत्त्वज्ञानस्य विशेषणीयत्वात् तादृशस्य दर्पणादिसान्निधानस्य समकालीने तत्त्वज्ञाने प्रतिबिम्बादिभ्रमविरोधित्वादर्शनादज्ञानतज्जन्यभ्रमयोरुच्छेदेऽपि भ्रमसंस्काराधीनभयकम्पादिकार्यदर्शनेन तत्त्वज्ञानाधीनदृढसंस्कारसहिततत्त्वधीविशेषस्यैव उक्तविरोधित्वानियमाच्च। स्वसमानविषयकाज्ञानतत्सम्बन्धतदधीनदृश्यसत्यत्वधीविरोधित्वनियमस्तु तत्त्वधीमात्रस्य न व्याहत इति दिक्। उपसंहरति—तस्मादिति।

नन्वात्मभिन्नवस्तुमात्ररूपस्य समूलबन्धस्य तदुपहितात्मज्ञानेन नोच्छेदः, ज्ञानस्य स्वविषयानिवर्तकत्वात्। 'तमेव विदित्वातिमृत्युमेती'त्यादिश्रुत्याऽऽत्ममात्रविषयकज्ञानस्यैव बन्धनिवर्तकत्वोक्तेश्च। तादृशज्ञानं च न प्रत्यक्षम्, आत्मनो बहिरिन्द्रियायोग्यत्वात्। तस्य स्वप्रकाशत्वेन सुखादीनां स्वप्रकाशसाक्षिमात्रभास्यत्वेन च मनसो बहिरिन्द्रियाद्यसहकृतस्य ज्ञानाकरणत्वाच्च। 'औपनिषदं पुरुषं पृच्छामी'त्यादिश्रुत्या उपनिषद्वाक्यमात्रबोध्यत्वोक्तेश्च। नापि शाब्दम्। परोक्षज्ञानस्य प्रत्यक्षाध्यासानिवर्तकत्वात्।

अत एव नानुमितिः। तत्र हि अनात्मरूपे पक्षे आत्मनः संसर्गो

नारायणी।

फलितार्थमुपसंहरति तस्मादिति। तस्माच्छास्त्रजप्रमातः पूर्वमध्यासानुगुणाज्ञानकल्पनात् अज्ञातज्ञापकत्वात् अज्ञानविषयतावद्विषयकत्वात्। तथा चाहंप्रत्ययस्य केवलात्मविषयत्वाभावादात्मनः सन्दिग्धत्वापूर्वत्वादिसम्भवात्तत्र प्रमाणं सच्छास्त्रं सार्थकमेवेति भावः। अत एव प्रयोजनसद्भावादपीत्याह सप्रयोजनकेति। भ्रमनिवृत्तिरूपप्रयोजनस-

न्यायरत्नावली ।

विषयः ? अथवाऽऽत्मरूपे ?। नाद्यः । तादृशज्ञानस्य बन्धानिवर्तक-त्वात् । नान्त्यः । अत्यन्ताभेदे संसर्गासम्भवात् । तद्घटस्तद्घट इत्यादिज्ञानस्याप्रमात्वेन तद्घटादिव्यक्तिभिन्नवस्त्वनुयोगिकसंसर्गेण तद्घटादिव्यक्तिविशिष्टज्ञानत्वं तद्घटादिव्यक्तिप्रमात्वमित्यस्यावश्यवा-च्यत्वात् । तद्व्यक्तौ तादात्म्यसम्बन्धेन तद्व्यक्तिविशिष्टज्ञानस्यानुवाद-रूपत्वेनाप्रमात्वाच्च । स्वकारणीभूताद्घट इति ज्ञानविषयादधिकं घटे द्रव्यत्वसंसृष्टाभेदं विषयीकुर्वतो हि ज्ञानस्य प्रमात्वं युक्तम् । तद्व्यक्तौ तद्व्यक्तिस्वरूपं तद्व्यक्तितादात्म्यं विषयीकुर्वता तु ज्ञानेन स्वकारणीभूततद्व्यक्तिरितिज्ञानाविषयादधिकं किं विषयीकृतम्, येन धारामध्यगज्ञानवदप्रमा न स्यात् ।

ननु विशेषणतावच्छेदकप्रकारकज्ञानादेः विशिष्टवैशिष्ट्यबुद्धौ हेतुत्वस्य मीमांसकैरस्वीकारात्, स्वीकारेऽपि कार्यभूतज्ञानस्य विषयतायाः कारणीभूतज्ञानविषयताया विलक्षणत्वेन च नानुवादकत्वमिति चेन्न । विलक्षणाया अपि विषयतायाः नैष्फल्येन ज्ञानेऽनुवादतुल्यत्वस्य दुर्वारत्वात् । न हि 'घटो घट' इति ज्ञानस्य स्वीकारे तस्य संशयादिनिवृत्तिरूपं फलमस्ति । 'घटो घटो नवे'त्यादिज्ञानस्याहार्यत्वेन तन्निवृत्तेरफलत्वात् । जीवत्वेश्वरत्वोपलक्षितयोः ऐक्याज्ञाननिवृत्तिस्तु तादृशैक्यस्य निर्विकल्पकादेव । तच्च नानुमितिः । तस्याः किञ्चिद्धर्मविशिष्टपक्षसाध्यावगाहित्वनियमात् । तस्मादभेदे सत्यपि उपाधिभेदप्रयुक्तो वा, विशिष्टकेवलभावप्रयुक्तो वा यत्र विशेषणविशेष्यव्यक्त्योर्भेदः; तत्रैवाभेदसंसर्गस्य प्रमा । यथा घटो द्रव्यं विशिष्टसत्ता शुद्धसच्चेत्यादौ । अत एव घटाभावो घटाभाववानित्यादौ एकत्वादिविशिष्टघटाभावत्वादिरूपेणैव घटाभावादेर्विशेष्यता ।

नाप्युपमितिः । 'स गौरनेन गवयेन सदृश'

दतं न व्यर्थम् । तस्य चात्मतत्त्वस्य 'तत्त्वमस्यहं ब्रह्मास्मी' त्यादिवेदान्तमहावाक्यमेव प्रमापकम् ।

न्यायरत्नावली ।

इत्याद्युपमितिस्थल इव प्रकृते सदृशवस्तुद्वयावगाहने मतान्तरे पदवाच्यत्वावगाहने च अनात्मविषयकत्वापत्तेः । नाप्यर्थापत्तिः । आत्मनि तत्संसर्गं विना कस्याचिदर्थस्यानुपपन्नत्वाभावात् । संसर्गस्यात्मरूपत्वे अनात्मरूपत्वे वा पूर्वोक्तदोषापत्तेश्च । नाप्यनुपलब्धिकरणकम् । तस्याभावमात्रे प्रमात्वात् । स्वाभावाभावत्वेनाभावग्राहकत्वेऽपि अनात्मात्रिषयकत्वतादवस्थ्यात् । प्रमेयस्यात्मत्वे अनात्मत्वे वा पूर्वोक्तदोषापत्तेश्च । तस्मान्नोक्तज्ञानोत्पत्तिसम्भव इत्यत आह—तस्य चेति । ब्रह्मात्मैक्यस्य चेत्यर्थः । आत्मतत्त्वस्य साक्षिस्वरूपस्य । प्रमापकं प्रत्यक्षप्रमाकरणम् । शब्दकरणकमपि आत्मज्ञानं प्रत्यक्षमेव, साक्ष्यभिन्नविषयकत्वात् । घट-

नारायणी ।

द्भावाचेत्यर्थः । न व्यर्थं न पुरुषार्थसाधनरहितम् । (१)

नतु तथापि शास्त्रं व्यर्थं तस्य परोक्षज्ञानजननस्वाभाव्यात् परोक्षज्ञानस्य चापरोक्षाध्यासाप्रतिक्षेपकत्वात्, अन्यथा श्वैत्याद्यनुमानादिनापि पीतः शङ्ख इत्यादिभ्रमस्य निवृत्त्यापत्तिस्तत्राह तस्य चेति । ब्रह्मात्मैकत्वलक्षणस्याखण्डार्थस्येत्यर्थः । आदिना 'प्रज्ञानं ब्रह्म' 'अयमात्मा ब्रह्मे'-त्यादिपरिग्रहः । प्रमापकं—साक्षात्काररूपप्रमाया जनकम् । ज्ञानस्य वस्तुमाहात्म्यकृतमेव परोक्षत्वमपरोक्षत्वं च नतु प्रमाणस्वभावकृतम्, ब्रह्म च 'यत्साक्षादपरोक्षात्' ब्रह्मेति श्रुतेः स्वतोऽपरोक्षमेवातस्तद्गोचरं वाक्यजन्यं ज्ञानं दशमस्त्वमसीत्यादाविवापरोक्षमेवेति सङ्क्षेपः(२) ।

---

(१) नारम्भानर्हमिति वा । यद्यप्येतन्मते भ्रमनिवृत्तेरात्मस्वरूपतया नोद्देश्यत्वं सम्भवति सिद्धत्वज्ञानस्य प्रतिबन्धकत्वात् तथापि परोक्षसिद्धत्वज्ञानेप्यपरोक्षसाध्यकत्वभ्रमजन्यप्रवृत्तितः प्रातीतिकसाध्यत्वरूपफलत्वस्याबाधेनोद्देश्यत्वं सम्भवत्येवेत्यग्रे स्फुटीभविष्यति । इत्यधिकः पाठः खपुस्तके ।

(२) अयमत्रात्यन्तमधिकः पाठः खपुस्तके । यथाः—

न च दशमस्त्वमसि इत्यादौ वाक्यात्पदार्थोपस्थितौ मानसः संसर्गबोधः, वाक्यसहकृतेन चक्षुषैव वा साक्षात्कार इति वाच्यम् । तथा सत्याद्ये सर्वेस्विन्नपि वाक्ये तथास-

म्भवेन शब्दप्रमाणमात्रोच्छेदापत्तिः, द्वितीये वाक्यान्वयव्यतिरेकिविरोधप्रसङ्गः।
चालोकादेरिव अन्वयव्यतिरेकौ तौ न करणत्वसाधकाविति वाच्यम्। तथासति व्यास
दशायां सत्यपीन्द्रियसम्बन्धे प्रत्यक्षादर्शनान्मन एव सर्वत्र प्रमाणं चक्षुरादि तु सहका
कारणमिति कल्पनायाः सम्भवात् सर्वत्र प्रमाणमात्रोच्छेदापत्तिः। सिद्धमतः शब्द एव त
करणं तज्जन्यं चापरोक्षमेव, तदन्तरं साक्षात्करोमीति प्रतीतेः। एवं कृतेपीत्यभिप्रेत्यैवा
वाक्यमेवेत्येवकारः। अनेनेन्द्रियकरणकं ज्ञानं प्रत्यक्षमितिप्रत्यक्षलक्षणानुरोधात् भावन
सहकृतेन मनसैवापरोक्षप्रमा भवति वाक्यात्तु प्रथमतः परोक्षप्रमैव भवति करणस्वाभा
व्यादिति योगिनां मतनिरासः। इन्द्रियकरणकमेव ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणानुरोधे
मनसैव तस्यापरोक्ष्यमित्यभ्युपगमे 'यन्मनसा न मनुते' इति श्रुतिविरोधः। भावना
न्यत्वे तस्य कामातुरस्य कामिनीं भावयतो व्यवहितकामिनीसाक्षात्कारस्येवाप्रामाण्यप्रसङ्गश्च

ननु भावनाजन्यत्वं न तत्राप्रामाण्यप्रयोजकं किन्तु वाधितविषयत्वम्, शुक्तिरजतादि
भ्रमेषु भावनां विनापि जातेषु वाधितविषयत्वेनैवाप्रामाण्यनिश्चयात्, ब्रह्मसाक्षात्कारे त
बाधितविषयत्वात्प्रामाण्यं भावनाजन्यत्वेपि न व्याहन्यते, नापि भावना सर्वत्र दोषः, ये
भावनारूपदोषजन्यत्वेनाप्यप्रामाण्यं स्यादिति चेत्। सत्यम्। तथापि परोक्षज्ञानमूलकभावन
या अपरोक्षधीजनकत्वबाधस्य वह्न्यनुमितिमूलकभावनायां दृष्टत्वान्न भावनाकोटिभिरे
साक्षात्कारो भवति किन्तु शब्दादेव, तदर्थस्यापरोक्षत्वादिति भावः। तत्र विषयगतापरो
क्षत्वं–स्वाकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताकत्वशून्यत्वे सति योग्यत्वम्।
धर्माधर्मयोः प्रत्यक्षवारणाय विशेष्यदलम्। रूपी घट इत्यादिप्रत्यक्षस्थले सङ्ख्यापरिमाणादे
प्रत्यक्षत्ववारणाय सत्यन्तदले स्वाकारवृत्त्युपहितेति प्रमातृविशेषणम्। तथाच रूपसङ्ख्या
दीनामेकदेशस्थत्वेन तदवच्छिन्नचैतन्यानामैक्याद्रूपावच्छिन्नचैतन्यस्य प्रमात्रभेदे सङ्ख्या
द्यवच्छिन्नस्यापि प्रमात्रभिन्नतया सङ्ख्याद्यवच्छिन्नसत्ताया रूपप्रमातृचैतन्यसत्तातिरिक्त
त्वाभावेपि न सङ्ख्यादीनां रूपाद्याकारवृत्तिदशायां प्रत्यक्षत्वं तदानीं सङ्ख्याद्याकारवृत्त्यभा
वेन सङ्ख्यादिसत्तायाः सङ्ख्याद्याकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तत्वाभावात्। प्रमा
त्रभिन्नत्वमपहाय तादृशशून्यत्वोक्तिस्तु बाह्यविषये वस्तुतः प्रमात्रभेदस्य 'अहमिमं पश्या
मि' इति भेदानुभवबाधितत्वात्। तादृशशून्यत्वं च ब्रह्मचैतन्ये स्वत एवास्ति चैतन्यां
शस्यैकत्वेनैवैकसत्ताकत्वात्। बाह्ये त्विन्द्रियसन्निकर्षादिबलेनान्तःकरणं यदा वहिर्निःसरति
तदा विषयचैतन्यप्रमातृचैतन्ययोरेकदेशस्थत्वेनैक्यात्स्वावच्छिन्ने ब्रह्मचैतन्येऽध्यस्तं विष
यादिकं प्रमातृचैतन्य एवाध्यस्तं भवति, आरोपितस्याधिष्ठानभूतविषयचैतन्याभिन्नप्रमातृ
चैतन्यसत्तामात्रत्वात्, आरोपितपदार्थस्याधिष्ठानसत्तातिरिक्तसत्ताया अनङ्गीकारात्। अत
एवानुमित्यादिस्थले न वह्न्यादेः प्रत्यक्षत्वं तत्रान्तःकरणस्य बहिर्निर्गमनाभावेन विषयचै
तन्यप्रमातृचैतन्ययोरेकत्वाभावेन प्रमातृचैतन्यस्याधिष्ठानत्वाभावात् वह्न्यादेस्ततः पृथक्
सत्ताकत्वात्।

अथवा निवृत्ताज्ञानत्वमपरोक्षत्वं तच्च चितोऽज्ञानविषयताशून्यत्वे सति चिद्रूपत्वम्, दृश्यानान्त्वज्ञानविषयतानवच्छेदकत्त्वे सति दृश्यत्वम्। तत्राद्ये विशेष्यदलं वक्ष्यमाणयुक्त्या स्वतोऽज्ञानाविषयस्य घटादेः सर्वदाऽपरोक्षव्यवहारवारणाय। विशेषणदलं त्वज्ञाननाशकवृत्तेः पूर्वमपि साक्षिणोऽपरोक्षव्यवहारवारणाय। द्वितीये विशेष्यं विकल्पोल्लिखिते तुच्छेऽतिव्याप्तिवारणाय। सत्यन्तमाकाशादेः प्रत्यक्षत्ववारणाय। चिदाचितोर्द्वयोरपि कथितप्रकाराज्ञानशून्यत्वं तु प्रमासामग्र्यैव प्रमाकाले भवति 'तरति शोकमात्मवित्, विद्वान्नामरूपाद्विमुक्तः' इत्यादि श्रुतिभिः ज्ञानसमकालं मुक्त इति वृद्धोक्तिभिश्चाज्ञाननाशस्य ज्ञानसमकालिकत्वप्रतिपादनेन प्रमासामग्र्या एवाज्ञानानाशकत्वज्ञापनात्। सा च सामग्री इन्द्रियसन्निकर्षादिरूपा, योग्यत्वंपदार्थाभेदपरशब्दादितात्पर्यनिश्चयरूपा च। प्रमया तु प्राकट्यं विषयस्येति न प्रमाया अपि वैयर्थ्यमिति सङ्क्षेपः। ज्ञानस्यापरोक्षत्वं तु तादृशापरोक्षयोरन्यतराश्रयविषयकत्वम्। अथवा ज्ञानस्यापरोक्षत्वं तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वम्। अतीतसुखादिस्मृतावतिव्याप्तिवारणाय वर्तमानत्वं विषयविशेषणम्। धर्मादिशाब्दबोधेऽतिव्याप्तिवारणाय योग्येति। सुरभि चन्दनमित्यादौ सौरभादेः प्रत्यक्षत्ववारणाय तत्तदिन्द्रियेति सङ्क्षेपः। अथवा सामान्यतो ज्ञातस्य विशेषतो ज्ञानार्थं मननापरपर्यायो विचारः तदनु निदिध्यासनं च सामान्यज्ञानमेव तत्तु निर्गुणत्वादिना प्रमाणायोग्यस्य कुतस्तत्राह—**तस्य चेति**। **प्रमापकं** शाब्दपरोक्षप्रमाजनकं निदिध्यासनं प्रति श्रवणस्य कारणताज्ञापनाय वाक्यमेवेत्येवकारः। श्रुतिभिरेवावगतस्य भावनासहकृतेन मनसाऽऽपरोक्ष्यम् 'मनसैवानुद्रष्टव्य'मिति श्रुतेरिति भावः। न च 'यन्मनसा न मनुते' इति श्रुतिविरोधः, भावनां विना मनोगम्यं न भवतीति तदर्थत्वात्। अन्यथा औपनिषदत्वमपि न स्यात् 'यतो वाचो निवर्तन्ते' इति श्रुतेः। तस्माद्यथा औपनिषदत्ववागगम्यत्वयोर्द्वयोरप्यविरोधाय शक्त्या वाचो निवर्तन्ते इत्येवार्थो न तु सर्वथा निवर्तन्ते एवेति तथा प्रकृतेपि 'मनसा न मनुते' 'मनसैवानुद्रष्टव्यम्' इति द्वयारविरोधाय भावनां विना न कदाचिन्मनसा जानाति भावनायान्तु जानात्येवेत्यर्थः तथैवोपलब्धेरिति भावः। एतेन परोक्षत्वापरोक्षत्वयोः प्रमाणस्वभावकृतत्वेपि न हानिः, मनोरूपेन्द्रियजन्यत्वेन ब्रह्मज्ञानस्यापरोक्षत्वाभ्युपगमात्। एवं भावनाजन्यत्वेन व्यवहितकामिनीसाक्षात्कारवन्नाप्रामाण्यमपि, अबाधितार्थत्वेन प्रामाण्यसम्भवात्।

अयमत्रनिष्कर्षः। शाब्दापरोक्षत्ववादिमते 'मनसैवानुद्रष्टव्य' मित्यत्र कर्तृत्वं तृतीयार्थो न करणत्वं 'यन्मनसा न मनुते' इति श्रुतिविरोधात्, औपनिषदसमाख्याविरोधाच्च। तथा च साधनचतुष्टयसम्पदनन्तरं श्रुतिकरणकमनःकर्तृकदर्शनविषय आत्मेति तत्रार्थः। योगजापरोक्षवादिमते तु शब्दादेव परोक्षं न मानान्तरात्, [औपनिषदसमाख्याविरोधात्] अपरोक्षं तु भावनासहकृतान्मनस एव, केवलस्य व्यभिचारित्वेन करणत्वासम्भवेपि योगसहकृतस्यायोग्यपरमाण्वादिप्रत्यक्ष इव कारणत्वे बाधकाभावात्। 'निदिध्यासितव्य'

न्यायरत्नावली।

चाक्षुषादीनामपि प्रत्यक्षत्वं नेन्द्रियकरणकत्वादिरूपम्, सुखादि-प्रत्यक्षे आत्मसाक्षिमात्ररूपे अव्याप्तेः। किन्त्वज्ञानविषयतासामान्यशून्यविषयकत्वम्। घटादिकं च यद्यपि जडत्वात् सर्वदैवाज्ञानाविषयः, तथापि तत्र चाक्षुषादिवृत्त्यभावकाले तदवच्छिन्नचितोऽज्ञानविषयत्वात्तत्तादात्म्यापन्ने घटादावप्यज्ञानविषयत्वव्यवहारः। अत एव चाक्षुषादिवृत्त्यभावकालीने घटादिपरोक्षज्ञाने न प्रत्यक्षव्यवहारः। चाक्षुषादिवृत्तिकालीने तु घटादेरपरोक्षज्ञाने प्रत्यक्षत्वव्यवहारो निष्प्रत्यूहः। विद्यमानसुखादौ तु साक्षी सर्वदैव प्रत्यक्षः। सुखादितादात्म्यापन्नस्य साक्षिणः सर्वदैवाज्ञानाविषयत्वात्, ब्रह्मात्मैक्याकारमनोवृत्तिकाले च ब्रह्मात्मैक्यस्याज्ञानाविषयत्वात्तद्विषयकत्वेनोक्तवृत्तेः प्रत्यक्षतेति न कोऽपि दोष इति भावः।

ननु वृत्तिः प्रत्यक्षरूपा सती अज्ञाननाशिका, प्रत्यक्षत्वं च तस्या अज्ञानाविषयाविषयकत्वम्, तथा चाज्ञाननाशात् पूर्वमज्ञानाविषयत्वस्य विषयेष्वभावात् वृत्तेरज्ञाननाशकत्वानुपपत्तिरिति चेन्न। न हि वृत्तिरज्ञाननाशिका, किन्त्वज्ञानाधिकरणक्षणवृत्तिवृत्तेरेवाज्ञाननाशकत्वात्(१)

नारायणी।

वाक्यबोधकरीतिस्तु सङ्क्षेपेण प्रदर्श्यते।
पदयोस्तु समानाधिकरणत्वं पदार्थयोः॥
विशेषणविशेष्यत्वं लक्ष्यलक्षणतापि च।
सम्बन्धः सोयमित्यादाविव तस्माद्विरुद्धकम्॥
त्यक्त्वा विरुद्धं तत्रैव विशिष्टपरमात्मनोः।
स्वरूपं लक्षयत्येकं तत्त्वमस्यादिका श्रुतिः॥
उपक्रमादिलिङ्गेन नैव भिन्नार्थिका ततः॥

अयमर्थः। पदयोर्भिन्नप्रवृत्तिनिमित्तयोरेकस्मिन्नर्थे प्रवृत्तिरूपं सामा-

इत्यादिना भावनायाः कारणत्वप्रतिपादनाच्च। तत्र प्रथममते श्रवणमनननिदिध्यासनानां क्रमेणाप्रामाण्यशङ्काऽसम्भावनाविपरीतभावनानां निवृत्तिः फलम्, द्वितीयमते तु ज्ञानं प्रत्येव द्वारद्वारिभावेन हेतुत्वमिति विवेकः। व्यक्तीभविष्यति चेदमुपरिष्टात्।

(१) किन्त्वज्ञानाधिकरणक्षणवृत्तिः वृत्तेरेवाज्ञाननाशकत्वादिति सर्वत्र पाठः स विरुद्ध एव भातीत्ययमस्माभिर्निवेशितः।

न्यायरत्नावली ।

तत्रापि इन्द्रियजन्या वृत्तिः स्वसमानविषयकाज्ञाननाशः । आत्मविषयका तु शब्दजन्यापि । तथा च यादृशाज्ञानाभावो यद्वृत्त्युत्पत्तिक्षणावधि प्रतीयते, सा वृत्तिः तदज्ञाननाश इति तु निष्कर्षः । वृत्तिविशेषस्याज्ञानविशेषनाशकत्वे तु तदुत्पत्तिक्षणे तद्वृत्तितदज्ञानयोः प्रत्ययस्यानुभवविरुद्धस्यापत्तेः । न हि युगपदेकस्मिन्विषये ज्ञातत्वाज्ञातत्वे केनाप्यनुभूयेते । यदि तु घटाद्यवच्छिन्ना चिच्छुद्धचितो न भिन्ना (१)तथा च ब्रह्मसाक्षात्कारोत्तरं घटाद्याकारवृत्त्यभावकाले अज्ञानाविषयशुद्धचित्तादात्म्यस्य घटादौ सत्त्वात् अपरोक्षव्यवहारापत्तिरित्युच्यते, तदा चितः अपरोक्षत्वमज्ञानाविषयचिद्रूपत्वम् । विशेष्यमात्रस्योक्तौ तत्त्वज्ञानात् पूर्वमपि आत्मब्रह्मणोरैक्यं साक्षात्करोमीति धीस्स्यात् । विशेषणमात्रस्योक्तौ घटादौ सर्वदा अपरोक्षव्यवहारस्स्यात् । दृश्यानामपरोक्षत्वं त्वज्ञानाविषयतानवच्छेदकत्वविशिष्टदृश्यत्वम् । तादृशापरोक्षत्वयोरन्यतराश्रयविषयकत्वं ज्ञानस्यापरोक्षत्वम् ।

नारायणी ।

नाधिकरण्यम्, पदार्थयोः परस्परोद्देश्यविधेयभावेन परस्परभेदव्यावर्तकत्वात् व्यावर्त्यव्यावर्तकभावरूपो विशेषणविशेष्यभावः, पदयोः पदार्थयोश्च विरुद्धविशिष्टत्वांशपरित्यागेनाविरुद्धनिष्कृष्टधर्मिमात्रेण सह लक्ष्यलक्षणभावः, पदप्रत्यगात्मनोः प्रतिपाद्यप्रतिपादकभावरूपः, पदार्थप्रत्यगात्मनोस्तु उपपाद्योपपादकभावरूपश्चेति सम्बन्धत्रयस्य सोयं पुरुष इत्यादिवाक्येष्विव तत्त्वमस्यादिवाक्येष्वपि सद्भावात् । तेन श्रुतीरपि निष्कृष्टयोरैक्यरूपं शुद्धं स्वरूपं बोधयति । तथाहि यथा सोयं पुरुष इति वाक्ये स इति तत्पदस्य तद्देशतत्कालवैशिष्ट्यं प्रवृत्तिनिमित्तम् अयंशब्दस्यैतत्कालैतद्देशवैशिष्ट्यं भिन्नप्रवृत्तिनिमित्तयोः|सोयंशब्दयोरेकस्मिन्पुरुषपदोपस्थापितपिण्डे तात्पर्यम् । सोयमयं स इति च विशेषणविशेष्य-

(१) अत्र "तथाच घटाद्याकारवृत्त्यभावकाले अज्ञानाविषयशुद्धचित्तादात्म्यस्य घटादौ सत्त्वात् ब्रह्मसाक्षात्कारोत्तरमपरोक्षव्यवहारापत्तिरित्युच्यते" इतिपाठो गपुस्तके परन्तु तत्त्वे ग्रन्थासङ्गतेरत्र घपुस्तकीयो निवेशितः ।

न्यायरत्नावली।

ननु उक्तवाक्यादपि नोक्तज्ञानस्योत्पत्तिसम्भवः, उक्तवाक्यान्तर्गततत्त्वमादिपदार्थापरिचयात्। मानान्तरप्रमिते हि पदार्थे गृहीतसङ्केतसम्बन्धस्य पदस्य ज्ञानेन उपस्थापिते सति वाक्यार्थः प्रमीयते। तत्त्वमादिपदानां चार्था न मानान्तरेण प्रमिताः। जगत्कारणत्वादिविशिष्टचिद्रूपस्य तत्पदवाच्यस्य हि नानुमानेन ज्ञानम्। 'आद्यकार्यं सकर्तृकम् कार्यत्वात् यद्यत्कार्यं तत्तत् सकर्तृकम्, यथा घट' इत्याद्यनुमानस्याप्रयोजकत्वात्। यदि हि कार्यसामान्ये कर्ता कारणं स्यात् तदा कार्यत्वं कर्तृजन्यत्वरूपसकर्तृकत्वव्याप्यं स्यात्। यदा तु घटादिकार्येऽपि न कुलालादिः कारणम्, कुलालादिक्रियादेरवश्यं कारणत्वस्य वाच्यत्वेन कुलालादेः तत्पितृवदन्यथासिद्धत्वात्, तदा आद्यकार्ये कर्तुः कारणत्वस्य का कथा। आरम्भवादस्वीकारेण आद्यकार्यस्य क्रियासंयोगादिप्रयोज्यत्वासम्भवात्। 'आत्मन आकाशस्सम्भूत' इत्यादिश्रुत्यनुसारेण महत आकाशादेरेव प्रथममुत्पत्तेः उक्तश्रुतेस्स्तावकत्वेन न स्वार्थे प्रामाण्यम्। तत्प्रामाण्यत्वादिनो देवताधिकरणस्य अस्वीकारिणि 'न कदाचिदनीदृशं जग'दिति मीमांसकसिद्धान्ते सृष्टिप्रलयाभावेन आद्यकार्यस्यैवा-

नारायणी।

भावः, विशिष्टशक्तयोः सोयंशब्दयोर्विरुद्धविशिष्टांशत्यागेन पुरुषेण सह लक्ष्यलक्षणभावश्च। तथा तत्त्वमस्यादिवाक्येष्वपि जगत्कर्तृत्वादिवैशिष्ट्यं तत्पदस्य प्रवृत्तिनिमित्तम्, त्वंपदस्यावस्थात्रयवत्त्वम्। भिन्नप्रवृत्तिनिमित्तयोः तत्त्वंपदयोरेकस्मिन् शुद्धे तात्पर्यम्, तत्त्वं त्वं तदिति विशेषणविशेष्यभावः, विरुद्धार्थधर्मत्यागेन शुद्धेन सह लक्ष्यलक्षणभावश्चेति विशिष्टयोस्तत्त्वंपदाभ्यां शक्त्योपस्थापितयोर्भिन्नयोरभेदायोगेन लक्षणया बोधितयोः शुद्धपदार्थयोरैक्यं सामानाधिकरण्यमर्यादया प्राप्तमप्युपासीतेति पदकल्पनाभ्रमनिरासद्वाराऽसीत्यादिपदेन दृढीक्रियते। एवमन्यत्रापीति दिक्। नच तत्त्वमसीति वाक्यस्य तस्य त्वमसीत्यर्थ इति वाच्यम्। 'एकमेवाद्वितीय' मित्युपक्रमस्य 'ऐतदात्म्यमिदं सर्वम्' इत्युपसं-

वाक्यं च पदार्थज्ञानद्वारैव ज्ञापकमिति तत्त्वंपदा-
र्थयोः प्रकृतवाक्यार्थानुकूलयोरन्यतोऽसिद्धत्वात्तावपि

न्यायरत्नावली।

लीकत्वात्। उक्तान्यथासिद्धिमस्वीकृत्य कुलालादिहेतुत्वं च स्वीकृत्य तद्दृष्टान्तमात्रेणाद्यकार्ये कर्तृजन्यत्वस्वीकारेऽपि बहुजनाश्रयप्रासादादिदृष्टान्तेन पृथिव्यादेर्नानाकर्तृकत्वानुमानापत्तेश्च। अत एव कार्योत्पत्त्यन्यथानुपपत्तिरपि नेशस्य जगत्कारणत्वे मानम्। तथा च तत्पदवाच्यस्यानुभूतत्वेन तत्सम्बन्धित्वेन शुद्धब्रह्मणस्तत्पदलक्ष्यस्य सुतरामननुभूतत्वान्न तत्पदेनोपस्थितिसम्भवः। त्वम्पदवाच्यस्य तु जाग्रदाद्येकैकावस्थाविशिष्टरूपेण साक्षिणा गृहीतत्वेऽपि अवस्थात्रयविशिष्टस्य त्वम्पदमुख्यार्थस्य त्वम्पदलक्ष्यस्य शुद्धजीवस्वरूपस्य चाननुभूतत्वेन न त्वम्पदेनोपस्थितिसम्भव इति तत्त्वम्पदलक्ष्यार्थयोरैक्यं कथं बोध्यमित्यत आह—वाक्यं चेति। ज्ञापकं—पदार्थयोरैक्यादिज्ञापकम्। तत्त्वम्पदार्थयोः—पदाभ्यां वाच्ययोर्लक्ष्ययोश्च। प्रकृतवाक्यार्थानुकूलयोः—तत्त्वमसीति वाक्यार्थबुद्धौ प्रयोजकीभूतोपस्थितिविषययोः। वाच्योपस्थितिद्वारकलक्ष्योपस्थितेरेव लक्ष्यघटितवाक्यार्थबोधे हेतुत्वात्। अन्यतः—श्रुतिभिन्नप्रमा-

नारायणी।

हारादिलिङ्गविरोधात्। कौशीतक्यां तत्त्वमसीत्यात्माऽवगम्य इत्युक्त्वा तत्त्वमसिवाक्यस्य 'अहं ब्रह्मास्मी'त्यर्थप्रदर्शनाच्चेत्यन्यत्र विस्तरः।

ननु तत्त्वंपदार्थयोर्मानान्तरगम्यत्वमस्ति न वा? आद्ये मानान्तरानधिगत स्वरूपापूर्वत्वलिङ्गभङ्गप्रसङ्गः। अन्त्ये शास्त्रादपि तद्बोधासंभवः। मानान्तरेण प्रमिते पदार्थे गृहीतवृत्तिकस्य पदस्य ज्ञानेनोपस्थापिते सति वाक्यार्थबोधस्यानुभवसिद्धत्वात् न तयो रूपाद्यभावान्मानान्तरगम्यत्वं संभवति वक्तुं वा युक्तं सिद्धान्तभङ्गप्रसङ्गादित्यत आह—वाक्यं चेति। पदकदम्बात्मकं वाक्यं चेत्यर्थः। पदार्थज्ञानद्वारैव—वृत्त्या पदजन्यपदार्थोपस्थितिद्वारैव, ज्ञापकं-वाक्यार्थप्रमापकम्। तत्त्वंपदार्थयोः—तत्त्वंपदाभ्यां वाच्ययोर्लक्ष्ययोश्च, प्रकृतवाक्यार्थानुकूलयोः-प्रकृतवाक्यार्थबुद्धिप्रयोजकीभूतोपस्थितिविषययोः। अन्यतोऽसिद्धत्वात्–उपनिषद्भिन्न-

शास्त्रेणैव प्रमातव्यौ, यूपाहवनीयादिपदार्थवत् । तत
श्च 'यतो वा इमानि भूतानि जायन्ते, येन जातानि

न्यायरत्नावली ।

णात् । शास्त्रेणैव-श्रुत्यैव । यूपेत्यादि । यथा यूपपदार्थोद्देशेन तक्षणादिसंस्कारकर्मविधायकस्य 'यूपं तक्षती'त्यादिवाक्यस्य पर्यालोचनात्तक्षणादिजन्यसंस्कारविशिष्टकाष्ठं यूपपदवाच्यमिति निर्णीय 'यूपे पशुं बध्नाती'त्यादिवाक्याद् यूपसंसर्गो बुध्यते, यथा वा 'वसन्ते ब्राह्मणोऽग्नीनादधीत' 'नक्तं गार्हपत्यमादधाति दिवाऽऽहवनीय' मित्यादिवाक्यपर्यालोचनेन दिवाधानादिसाध्याग्न्यादिराहवनीयादिपदवाच्य इति निर्णीय 'आहवनीये जुहोति 'गार्हपत्ये पत्नीस्संयाजयन्ती'त्यादिवाक्यादाहवनीयादिसंसर्गो बुध्यत इत्यर्थः । भूतानीति । उत्पन्नानीत्यर्थः । तेन पञ्चभूतान्यस्य गुणक्रियादेर्दृग्दृश्यतादात्म्येक्षणादेश्च ब्रह्महेतुकत्वलाभः । जायन्ते-उत्प

नारायणी ।

मानतोऽप्रमितत्वात् । तावपि-तत्त्वंपदवाच्यलक्ष्यावपि, शास्त्रेणैव-वाक्यशेषरूपश्रुत्यैव । जन्यत्वं तृतीयार्थः । प्रमातव्यौ-प्रमार्हौ, श्रुतिप्रमाणमात्रजन्यप्रमाविषयाविति यावत् । तथाच मानान्तरतो ऽप्रमितत्वेपि वाक्यशेषैरेव प्रमिते तत्त्वंपदार्थे गृहीतवृत्तिकस्य तत्पदादेर्ज्ञानेनोपस्थापने सति वाक्यार्थबोधसंभवान्नानुपपत्तिरिति भावः । तत्र दृष्टान्तमाह यूपेति । यथा यूपे पशुं बध्नातीति वाक्यात् यूपे पशुबन्धनसंसर्गे प्राप्ते यूपपदार्थाकाङ्क्षायामन्यतोऽप्राप्तं यूपपदार्थं 'यूपं तक्षती'ति वाक्यं यूपोद्देशेन तक्षणादिसंस्कारविशेषविशिष्टं काष्ठं यूप इति वाक्यमर्यादया प्रमापयति एवम् 'आहवनीये जुहोति' इति वाक्येनाहवनीये होमसंसर्गे प्राप्ते आहवनीयपदार्थाकाङ्क्षायामन्यतोऽप्राप्तमाहवनीयपदार्थम् 'वसन्ते ब्राह्मणोऽग्नीनादधीत' 'नक्तं गार्हपत्यम्' 'दिवा आहवनीय'मितिवाक्यं दिवाऽऽधानादिसामग्रीविशिष्टोऽग्निराहवनीय इति प्रमापयति । एवं गार्हपत्यादिकमपि । आदिपदात् स्वर्गादिपरिग्रहः । एतेन यूपाहवनीयादेः केवलस्य प्रत्यक्षयोग्यत्वेपि न हानिः स्वर्गादेस्तथात्वादिति दिक् । उपपादनफलमाह—ततश्चेति । मानान्तरेण प्रमितार्थस्य वाक्यशेषैरेव प्रमित्यङ्गीकारादेवेत्यर्थः । यतो वेत्यादि । 'यतो वा इमानि भूतानि जायन्ते येन

जीवन्ती'त्याद्याः सृष्ट्यादिश्रुतयस्तत्पदवाच्यार्थस्य समर्पिकाः। 'सत्यं ज्ञानमनन्त'मित्यादयस्तु लक्ष्यार्थस्य। एवं

न्यायरत्नावली।

द्यन्ते। जातानि—दृश्यतया प्रादुर्भूतानि दृश्यानीति यावत्। जीवन्ति—सत्तास्फूर्तिमर्यादादिकं प्राप्तानि। प्रयन्तीति शतृप्रत्ययान्तं लयं लभमानानीत्यर्थः। तथा च यतो ब्रह्मणो हेतोः कार्यं सर्वमुत्पद्यते, दृश्यानि सर्वाणि यतः सत्तास्फुरणादि लभन्ते, लीयमानानि च सर्वाणि प्रलयकाले यत्प्रविशन्ति, तद्ब्रह्मेत्यर्थः। पञ्चमीतृतीययोर्हेतुसामान्यार्थकत्वेऽपि लीयमानकार्याधारत्वोक्त्योपादानत्वं लभ्यते। 'तदैक्षत बहुस्यां प्रजायेये'ति 'सोऽकामयत तदात्मानं स्वयमकुरुते'ति ईक्षणकामनाकृतीनां जगत्कारणनिष्ठतया निर्देशाद्ब्रह्मणो जगत्कर्तृतालाभः। 'येने'त्याद्येकवचननिर्देशात् 'य एको जालवानीशत ईशनीभि'रित्यादिश्रुतेश्च जगज्जन्मादिहेतोरेकत्वमिति बोध्यम्। तत्पदवाच्यार्थस्येति। तत्त्वमसीति वाक्यप्रवृत्तेः पूर्वं सृष्ट्यादिवाक्यस्य प्रकृतत्वात् प्रक्रान्तवाचितत्पदस्य सृष्ट्यादिकारणं वाच्यमिति भावः। इत्यादयस्तु लक्ष्यार्थस्येति।

नारायणी।

जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे, त्याद्याः सृष्टिस्थितिप्रलयबोधिकाः श्रुतयः। श्रुत्यर्थस्तु यतः यस्मादुपादानात् वै एव इमानि प्रत्यक्षाद्यवगतानि नामरूपात्मकानि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि जायन्ते उत्पद्यन्ते येन निमित्तभूतेन जातानि उत्पन्नानि जीवन्ति वर्धन्ते यत्प्रयन्ति यत् ब्रह्म लयसुषुप्त्यादौ वासनारूपेण गच्छन्ति अभिसंविशन्ति बाधेन ज्ञानकाले तन्मात्रस्वरूपाणि भवन्ति तद्विजिज्ञासस्व तद्विचारय विचार्यमाणे यत्सृष्ट्यादिकर्तृ तद्ब्रह्मेत्यर्थः। तत्पदवाच्यार्थस्य—तत्पदशक्यार्थस्य ब्रह्मणः, समर्पिकाः—प्रमापिकाः। एवं प्रमिते विशिष्टे गृहीतशक्तिकेन तत्पदेन लक्षणया शुद्धोपस्थितौ कारणीभूतानुभवजनकं वाक्यमाह—सत्यमिति। 'सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां सोऽश्नुते सर्वान्कामान्' इत्याद्याः श्रुतय इत्यर्थः। लक्ष्यार्थस्य—तत्पदलक्ष्यस्य लक्षणया तत्पदबोध्य-

जाग्रत्स्वप्नसुषुप्त्यादिश्रुतयः(१) 'तद्यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं चे'त्याद्यास्त्वंपद

न्यायरत्नावली ।

'ब्रह्मविदाप्नोति पर'मित्यनेन शुद्धब्रह्मज्ञानस्य मोक्षहेतुत्वे उक्ते किं तद्ब्रह्मेत्याकाङ्क्षायां सत्यमित्यादिवाक्यस्य प्रवृत्तत्वेन तत्पदलक्ष्यशुद्धब्रह्मपरत्वमिति भावः ।(२) कूले–नद्यास्तीरे, अन्तौ–कर्मफलपरिपाकरूपौ, अनुसञ्चरति–अनुगच्छति, स्वप्नान्तं–स्वप्नभोगरूपमन्तम्, बुद्धान्तं–जाग्रद्भोगरूपमन्तम्। बुद्धान्तं चेत्याद्या इत्यत्राद्यशब्देन 'तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ सल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं

नारायणी ।

स्येति यावत् प्रमापिका इति शेषः । श्रुत्यर्थस्तु यः पुरुषधौरेयः ब्रह्म व्यापकं सत्यं कालत्रयाबाध्यं ज्ञानं ज्ञानस्वरूपं अनन्तं न विद्यते अन्तो यस्येति परिच्छेदत्रयरहितं गुहायां पञ्चकोशाख्यायां निहितं साक्षित्वेन स्थितं जानाति सर्वान् कामान् सर्वानानन्दान् अश्नुते अनुभवति सः। 'ब्रह्मविदाप्नोति पर'मित्यादिना शुद्धस्यैव प्रक्रान्तत्वात्सत्यादिवाक्यं शुद्धतात्पर्यकमिति भावः।

तत्पदार्थस्योभयविधस्य बोधिकामुक्त्वा त्वंपदवाच्यसमर्पिकामाह-तद्यथेति । 'तद्यथा महामत्स्य उभे कूलेऽनुसंचरति पूव चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसंचरति स्वप्नान्तं च बुद्धान्तं च। आदिना 'तद्यथा श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः पक्षौ संहत्य सल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावती' त्याद्याः श्रुतयः । अयमर्थः । तत्

(१) तद्यथा महामत्स्य इत्याद्यास्त्वंपदवाच्यार्थस्येति पाठः घपुस्तके । तद्यथा महामत्स्य इत्याद्या जाग्रत्स्वप्नसुषुप्त्यादिश्रुतय इति खपुस्तके । घपुस्तके न्यायरत्नावल्यामेषा श्रुतिः संपूर्णा पठिता मूले त्वंश एवास्या इति ।

(२) इति भावः इत्यस्यानन्तरं बुद्धान्तं चेत्यादिः तथा २९ पृष्ठेऽग्रेश्रुतिसङ्ग्रह इत्यनन्तरं कूले नद्या इत्यादिपाठः गपुस्तके, घपुस्तके तु तद्यथा इत्याद्या श्रुतिरेवात्र टीकायां दृश्यते, मूले त्वंश एवास्याः । अस्माभिस्तु मूलानुरोधात् स्थानपरिवर्तनं कृतमिति ।

न्यायरत्नावली।

कामयते न कञ्चन स्वप्नं पश्यती'ति श्रुतिसङ्ग्रहः। सुपर्णः शीघ्रगतिः श्येनः विपरिपत्य विशेषेण नानादेशेषु पतित्वा श्रान्तो भूत्वा पक्षौ संहत्य संयुक्तीकृत्य सल्लयाय नीडाय ध्रियते नीडप्राप्त्यर्थं यतते। अन्ताय उपरतावस्थारूपान्तप्राप्त्यर्थं धावति यतते।

ननु जाग्रदाद्येकैकावस्थाविशिष्टस्यापि त्वम्पदवाच्यतासम्भवे- नावस्थात्रयविशिष्टस्य सा कथमुक्ता। एवं जन्माद्येकैकहेतुत्ववि- शिष्टस्यापि तत्पदवाच्यतासम्भवेन जन्मस्थितिसंहाररूपत्रयहेतोरेव सा कथमुक्ता। न च 'स वा अयमात्मा ब्रह्म' इत्यादि वाक्यस्य 'तद्यथा महामत्स्य' इत्याद्यवस्थात्रयाविशिष्टजीवबोधकवाक्योत्तरं वि- द्यमानत्वाज्जीवबोधकपदानां महावाक्यस्थानामवस्थात्रयविशिष्ट- चिदेव मुख्योऽर्थः, एवं तत्त्वमस्यादिवाक्यस्य जन्मादिहेतुब्रह्मबो- धकवाक्योत्तरं सत्त्वात् तादृशं ब्रह्मैव ब्रह्मबोधकपदमुख्यार्थं इति वाच्यम्। श्रुतिष्वप्यवस्थात्रयस्य जन्मादित्रयस्य च कथं निर्देश इति पर्यनुयोगात् एकैकघटितस्यैव वाच्यतेत्यभिप्रायेणापि उक्त- श्रुतिसङ्गतेश्च। न च जन्मलयहेतुत्वस्याविद्यायामपि सम्भवेनाति- प्रसक्त्या स्थितिहेतुत्वमावश्यकम्, एवं विशेषविज्ञानाभावरूपसुषु- प्तेरपि घटादावतिप्रसक्तत्वेन न मुख्यार्थतावच्छेदकत्वम्, (१)ये एव हि तत्त्वम्पदयोर्मुख्यार्थोपलक्षिते स्वरूपे, तयोरेवैक्यं महावाक्येन बोधनीयमिति वाच्यम्। स्थितिहेतुत्वस्य ब्रह्मण्येव सत्त्वात्तदन्यवै- यर्थ्यात् घटादौ सुषुप्तिव्यवहाराभावेन उपरतमनस्कत्वस्य तद्भि-

नारायणी।

तत्र स्वप्नबुद्धान्तयोः संचरन्नप्यात्माऽसङ्गत्वात्कर्तृतद्धर्मैरवशीकृत एव, यथा लोके महामत्स्यो नादेयस्रोतसाऽवशीकृत एव पूर्वं च परं चेत्युभे कूले तटावनुक्रमेण संचरति ताभ्यां भिन्नः सन्, एवमेवायं पुरुष उपाधिभिन्नः सन्नुपाधिनाऽवशीकृत एव अन्तौ कर्मफलपरिपाकावनुसंचरति। स्वप्नान्तं

(१) एवं हि तत्त्वंपदयोररिति पाठः घपुस्तके।

न्यायरत्नावली ।

शिष्टानन्दसामान्यानुभवितृत्वस्य वा सुषुप्तित्वात् 'आनन्दभुक् चेतोमुखः प्राज्ञ' इति श्रुत्या तथा बोधात्, जाग्रदाद्यन्यतरमात्रस्यानतिप्रसक्तत्वाच्च । न च जन्मादित्रयहेतूनां ब्रह्मविष्णुरुद्राणां जाग्रदाद्यवस्थावतां विश्वतैजसप्राज्ञानां (१)चैकस्वरूपमिति लाभाय श्रुतिषु त्रयमुक्तम्, अन्यथा हि जन्ममात्रहेतुत्वस्य एकवाक्येनोक्तौ प्रदेशान्तरयोर्वाक्याभ्यां स्थितिसंहारयोरेकैकहेतुत्वोक्तौ जन्मादित्रयहेतूनां त्रयाणामैक्यं न लभ्येत, एवं विश्वतैजसप्राज्ञानामप्येकप्रदेशानुक्तौ नैक्यं लभ्येत, तथा च त्रयाणां त्रिभिरैक्यस्य महावाक्याल्लाभेऽपि स्वरूपत्रयस्य सत्यत्वापत्त्या अद्वैतश्रुतिविरोध इति कल्पतरूक्तं युक्तमिति वाच्यम् । 'एकमेवाद्वितीय'मित्यादिना ब्रह्मणः, 'असङ्गो ह्ययं पुरुषः सलिल एको द्रष्टा अद्वैतो भवती' त्यादिना च जीवस्य निरङ्कुशाद्वैतस्वरूपबोधनात् तदर्थमुक्तप्रयासस्यानौचित्यादिति चेन्न । अत्रोच्यते । जन्मादिहेतुत्वानां जाग्रदाद्यवस्थानां च एकैकमात्रस्योक्तौ महावाक्यस्थतत्त्वम्पदाभ्यामेकैकमात्रोपलक्षितस्वरूपयोरैक्यं बोध्येत, तथा च तयोरेव भेदभ्रमो निवर्तेत । न तु हेतुतात्रयोपलक्षितेशस्वरूपादवस्थात्रयोपलक्षितजीवस्वरूपस्य भेदभ्रमो निवर्तेत । न हि 'छत्री कुण्डली वासस्वी यः स श्यामः स्थूलश्चैत्रो ने'ति भ्रमः छत्री श्याम इति वाक्यजन्यज्ञानेन निवर्तते । निवर्तते तु चैत्र इत्यन्तोक्तवाक्यजन्यज्ञानेन । तादृशज्ञानयोस्तद्व्यक्तिमात्राविषयत्वात् (२)अविशेषेऽपि सामग्रीविशेषजन्यज्ञानस्यै-

नारायणी ।

स्वप्नभोगरूपम्, बुद्धान्तं जाग्रद्भोगरूपम्, सुपर्णः गरुडजातिः, श्येनः शरभजातिः, विपरिपत्य नानादेशेषु पतित्वा, अतः खिन्नः सन् पक्षौ संहत्य

(१)—मप्येकप्रदेशेनुक्तौ नैक्यं लभ्येत एवं त्रयाणामित्यादि पाठभेदः घपुस्तके ।

(२) अत्र यद्यपि तादृशज्ञानयोस्तद्व्यक्तित्वाविशेषात् अविशेषेपि इत्यादिपाठः सर्वत्रोपलभ्यते, किन्तु विषयत्वाविशेषेपीति समस्तेन भाव्यम् । लेखकदोषादेवं जातमिति लक्ष्यते ।

वाच्यार्थस्य समर्पिकाः । 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः, न दृष्टेर्द्रष्टारं पश्ये'रित्यादयस्तु ल-

न्यायरत्नावली ।

वोक्तभ्रमानिवर्तकत्वेन सर्वानुभविकत्वात् । तस्मात् त्रितयोपलक्षितस्वरूपयोरैक्यविषयकस्य मूलाज्ञानस्य तादृशैक्यज्ञानं विनोच्छेदासम्भवात्तं विना च तादृशाज्ञानमूलकभेदभ्रमोच्छेदासम्भवात्तादृशज्ञानमावश्यकम् । तच्च त्रितयाविशिष्टोपस्थितिपूर्वकशुद्धोपस्थितिजन्यमेवेति तादृशोपस्थित्यर्थमेकस्मिन्नेव वाक्ये त्रितयोक्तिरावश्यकीति बोध्यम् ।

योऽयमित्यादि । बृहदारण्यके (१)चतुर्थाध्याये तृतीयब्राह्मणे 'एष ब्रह्मलोक' इत्यादिवाक्येन शुद्धजीवब्रह्मणोरैक्यस्य वक्ष्यमाणत्वेन तदुपयुक्तस्वप्रकाशजीवस्वरूपमादित्यचन्द्राग्निवाचामभावे जीवस्य व्यवहारप्रयोजकं ज्योतिः किमिति प्रश्नपूर्वकेणैव 'आत्मैवास्य ज्योतिर्भवती'त्यन्तेन उक्त्वा 'कतम आत्मे'त्यनेन शुद्धात्मस्वरूपमात्रज्ञाने आकाङ्क्षामुत्थाप्य योऽयमित्यादिवाक्यस्य उक्तत्वेन शुद्धात्मपरत्वम् । तत्र च वाक्येऽयमर्थः—विज्ञानमयः बुद्धिविकाराभिमानी प्राणेषु अभिमानसम्बन्धेन प्राणसम्बन्धी हृदि हृदयस्थमनोऽभिमानी अन्तर्ज्योतिर्मनोवृत्तिरूपः [बहिर्ज्योतिरन्यस्वभावः] पुरुषः

नारायणी ।

संप्रसार्य सल्लयाय नीडाय ध्रियते यतते अन्ताय उपरतावस्थार्थं धावति यतते । तथाचात्माऽवस्थात्रयवान् त्वंपदार्थ इति सिद्धम् ।

एवं प्रमिते विशिष्टे गृहीतवृत्तिकेन त्वंपदेन लक्षणया शुद्धोपस्थितौ कारणीभूतानुभवजनकं वाक्यमाह—योऽयमिति । अयमहमितिधीगोचरः यः तवापि संमतः विज्ञानमयः विज्ञानप्रायः विज्ञानाभिमानीति यावत्, प्राणेषु ज्ञानकर्मेन्द्रियप्राणपञ्चकेषु अन्तर्यामितया स्थितः हृदि बुद्धौ अन्तर्ज्योतिः अन्तर्वर्तमानज्योतिः आदित्याग्निवाचामभावेऽपि प्रकाशकं ज्योतिः स्वप्रकाशः पुरुषः सर्वद्रष्टव्यानुस्यूतः । श्रुत्यन्तरं—न दृष्टेरिति । दृष्टेः

(१) सर्वेषु पुस्तकेषु 'षष्ठाध्याये' इति वर्तते तल्लेखकप्रमादादित्यवसेयम् ।

क्ष्यार्थस्य। तेन प्रथममवान्तरवाक्येभ्योऽनुभूतयोः शुद्धयोर्जीवब्रह्मणोस्तत्त्वमस्यादिवाक्ये मुख्यार्थान्वयानुपप-

न्यायरत्नावली।

पूर्णः। तथा च ज्योतिरात्मेत्यनेनाहमाकारधीविषयत्वे पूर्ववाक्येन ज्योतिषो ज्ञानेऽपि बुद्ध्यादीनां सर्वेषामेव तत्सम्भवाद्विज्ञानमयादिपदैर्बुद्ध्यादिविलक्षणं स्वप्रकाशरूपं प्रदर्शितम्। तेनेति। उक्तश्रुतिभिर्वाच्यलक्ष्योभयसमर्पणेनेत्यर्थः। वाच्यसमर्पणस्य फलमाह-मुख्यार्थान्वयानुपपत्त्येति। मुख्यवृत्त्युपस्थापितयोर्विशिष्टजीवब्रह्मणोरैक्यबोधस्य प्रमात्वानुपपत्तिज्ञानेनेत्यर्थः। वाच्यलक्ष्योभयसमर्पणस्य फलमाह-अवान्तरवाक्येत्यादिना। अवान्तरवाक्येभ्योऽनुभूतयोः शुद्धयोर्लक्षणया स्मरणोपपत्तिरिति योजना। वाच्यसमर्पणे प्रति वाच्ययोरन्वयानुपपत्तिज्ञानम्, ततश्च वाच्यज्ञानात्तत्सम्बन्धिनो लक्ष्यस्य अवान्तरवाक्याधीनपूर्वानुभवाधीनसंस्कारजन्यस्मृत्या तदैक्यरूपवाक्यार्थप्रमेति भावः।

ननु वाच्ययोश्शुद्धयोश्च अवान्तरवाक्यानुभूतत्वं वक्तव्यम्,

नारायणी।

प्रमाणजन्यवृत्तेः द्रष्टारं भासकं न पश्येः न पश्यसि? सर्वभासकं भास्यभिन्नं निर्धर्मकत्वात् प्रमाणायोग्यं यत्साक्षादपरोक्षाद्ब्रह्म तन्मे व्याचक्ष्वेति पृष्टं त्वंपदलक्ष्यं ब्रह्मेत्यर्थः। धर्मिप्रमापकं प्रदर्श्य वाक्यार्थबोधमुपसंहरति तेनेत्यादिना। तेन-वाच्यलक्ष्यसमर्पणेन। तत्र लक्षणाबीजभूतवाच्यसमर्पणफलमाह—प्रथममिति। तत्त्वमस्यादिवाक्ये मुख्यार्थयोः तत्त्वंपदशक्यार्थयोर्विशेषणभेदाद्भिन्नयोः अन्वयानुपपत्त्या तादात्म्यसंसर्गरूपान्वयस्य बाधितत्वप्रतिसन्धानेन(१) वाच्यसमर्पणे सत्येव वाच्ययोरन्वयानुपपत्तिप्रतिसन्धानं ततो वाच्यज्ञानाद्वाच्यसम्बन्धिनो लक्ष्यस्यावान्तरवाक्यैरनुभवे सति तन्मूलकस्मृत्या वाक्यार्थप्रमा भवतीति। वाच्यलक्ष्योभयसमर्पणफलमाह अवान्तरेत्यादिना। 'सत्यं ज्ञानमनन्तम्, योयं विज्ञानमय' इत्याद्यवान्तरवाक्यजन्यानुभवविषययोर्निरतिशयपरमानन्दरूपयोः परापरात्मनो

(१)—नेनेत्यर्थः तात्पर्यानुपपत्तित एव लक्षणायाः सर्वत्र प्रतिपादने विशिष्टान्वयबाधस्यौत्सर्गिकत्वात् तद्बाधितत्वप्रतिसन्धानादपि लक्षणेति भावः इत्यधिकः पाठः खपुस्तके

न्यायरत्नावली ।

शुद्धयोरपि वा तत्र वक्तव्यम् , तेनेत्यनेनैव तल्लाभात् ; किमिति-शुद्धयोरेव तदुक्तमिति चेत् । अत्रोच्यते । यद्यपि वाच्ययोरपि यतो वेत्यादिना तद्यथेत्यादिना च वाक्येनानुभवोऽस्ति तथापि तत्र तयोर्नावान्तरवाक्यत्वम् । तत्रैव तात्पर्यापर्यवसानात् , तयोर्ब्रह्मजीवलक्षणबोधकत्वेन लक्षणविशिष्टब्रह्मजीवबोधनद्वारा शुद्धब्रह्मजीवस्वरूपपरत्वात् । लक्षणबोधकवाक्यमात्रस्य लक्षणविशिष्टबोधनद्वारा लक्षणोपलक्षिताखण्डव्यक्तिपरत्वमित्यस्यार्थस्याद्वैतसिद्धिद्वितीयपरिच्छेदे जन्माद्यसूत्रकल्पतरौ च व्यवस्थापितत्वात् । तथा च यतो वेत्यादिवाक्ययोरपि शुद्धबोधपर्यवसितत्वेन शुद्धयोरेवान्तरवाक्यानुभूतत्वोक्तिर्युक्तैवेति भावः ।

अत्रेदं बोध्यम् । वाच्यसमर्पकत्वं तत्पदवाच्यबोधद्वारकशुद्धचिद्बोधपरत्वम् । तेन सत्यादिवाक्यस्यापि सत्यादिपदवाच्यबोधद्वारकशुद्धचिद्बोधपरत्वेऽपि न वाच्यसमर्पकत्वम् । शुद्धबोधपरत्वेऽपि यतो वेत्यादिवाक्यं न स्वरूपलक्षणपरम् । ब्रह्मस्वरूपं सत्यत्वाद्युपलक्षितात्यन्ताभिन्नं न वेत्यादिसंशयाद्यनिवर्तकत्वात् , स्वरूपे भ्रमसंशयनिवर्तकधीपरस्यैव स्वरूपलक्षणपरत्वात् । एवं तत्पदवाच्यत्वं न सृष्ट्यादित्रितयजनकत्वम् , प्रलये तदभावात् । न हि तदा सृष्ट्याद्यन्यतमस्यापि उपधायकत्वमस्ति । न चोपलक्षणविधया तादृशत्रयोपधायकत्वं वाच्यतावच्छेदकमिति वाच्यम् । काकवन्तो देवदत्तस्य गृहा इत्यादावुत्तृणत्वादेरिवोपलक्ष्यतावच्छेदकस्यावश्यमुपलक्षणबोद्ध्यतया तस्यैव वाच्यतावच्छेदकत्वस्य युक्तत्वात् । किन्तु सृष्ट्यादिजननस्वरूपयोग्यतावच्छेदकीभूताविद्याबिम्बत्वरूपमीश्वरत्वम् । एवं त्वम्पदवाच्यत्वमपि नावस्थात्रयवत्त्वम् । मूर्छासमाध्योस्तदभावात् । किन्तु अवस्थात्रयसम्बन्धयोग्यतावच्छेदकीभूताविद्याप्रतिबिम्बत्वरूपं जीवत्वम् । न च मूर्छायां कर्म-

ण्या लक्षणया स्मरणोपपत्तिः । सुषुप्तौ निर्विकल्पकसा-

न्यायरत्नावली ।

न्द्रियव्यापारसत्त्वात् जाग्रद्रूपत्वम्(१) समाधिकाले तु न जीवस्य त्व-म्पदवाच्यतेति जाग्रदाद्यन्यतमवत्त्वस्य त्वम्पदवाच्यत्वेऽपि न दोष इति वाच्यम् । मूर्छायां कायक्रियामात्रेण गात्रकम्पादेस्सत्त्वेऽपि कर्मे-न्द्रियव्यापारसत्त्वे मानाभावात्(२)। समाधेस्तु असम्प्रज्ञातरूपस्याप्य-विद्यानिवृत्तेः पूर्वमपि त्वम्पदार्थसाक्षात्कारहेतुतयाऽनुष्ठेयत्वेन तदा-नीं जीवत्वसत्त्वेन त्वम्पदवाच्यतानपायात् । नन्ववान्तरवाक्यैश्शुद्धे ऽनुभुते सति महावाक्यस्थपदैः शुद्धस्मृतिसम्भवः, अवान्तरवाक्य-स्थपदैस्तु कथं शुद्धस्य स्मृतिः ? तत्पूर्वं शुद्धस्याननुभवादित्यत आह—सुषुप्ताविति । निर्विकल्पकेति । साक्षिस्वरूपसुखस्व-रूपाज्ञानस्वरूपाकाराः निर्विकल्पास्तिस्रोऽविद्यावृत्तयः सुषुप्तौ जा-यन्त इति विवरणेऽङ्गीकृतम् । साक्षिणश्चाविद्योपहितचिद्रूपत्वपक्षे-ऽप्यविद्यायाः साक्षिस्वरूपाघटकत्वात् शुद्धचिद्रूपत्वमेव । पक्षान्तरे तु वक्ष्यन्त्याचार्या एव-'साक्षी तु सर्वानुगतस्तुरीयः (३)तथा एक कूटस्थः साक्षी'त्यादि । तथा च सौषुप्तिकनिर्विकल्पकानुभवमूलि-

नारायणी ।

रित्यर्थः—लक्षणया-जहदजहत्स्वार्थलक्षणया, स्मरणोपपत्तिः-स्मृतिसंभव तत्त्वमादिपदैरिति शेषः । तथाच लक्षणयोपस्थितयोः शुद्धयोरन्वयबोधो ऽयत्नसिद्ध एवेति भावः। अवान्तरवाक्येभ्योप्यनुभवे हेतुभूतमनुभवमाह सुषुप्ताविति । अथवा न केवलमवान्तरवाक्येभ्य एव तत्त्वंपदलक्ष्ययोरनुभव किन्तु सौषुप्तप्रत्यक्षतोपीत्याह—सुषुप्ताविति । अन्तःकरणवृत्त्युपरमावस्था यामित्यर्थः। निर्विकल्पकेति। निर्विकल्पको यः साक्षिचैतन्यविषयकोऽनुभवं

(१) विशेषविज्ञानाभावात्सुषुप्तित्वं च इत्यधिकः पाठो घपुस्तके स च युक्तः ।

(२) उपरतमनस्कत्वे सत्यानन्दानुभवितृत्वस्यैव सुषुप्तत्वेन तत्र तदभावात्, तथा गात्रकम्पादिसत्त्वेन जीवस्य त्वम्पदवाच्यतानपायात् इत्यधिकः पाठो घपुस्तके स च युक्ततरः ।

(३) तथा शब्दो घपुस्तके नास्ति ।

न्यायरत्नावली ।

केवा(१)न्तरवाक्यस्थपदजन्या शुद्धस्मृतिरिति भावः ।

ननु वार्तिककारमते सुषुप्तौ नोक्तनिर्विकल्पकवृत्तिः स्वीक्रियते । तत्कथमवान्तरवाक्यस्थपदैः स्मरणम् । न चैवं तन्मते 'सुखम-

नारायणी ।

ज्ञानाख्योऽविद्यापरिणामस्तस्य सुखमहमस्वाप्समिति स्मृत्यन्यथानुपपत्त्या विवरणाचार्यादिभिः स्वीकृतत्वादित्यर्थः(२) ।

---

(१) 'एव' इति घपुस्तके नास्ति ।

(२) अयमत्राधिकः पाठः खपुस्तकेः—

'तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न वाह्यं किंचन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न वाह्यं किंचन वेद नान्तर' मित्यादिश्रुत्या कामुकस्य सुखसम्पत्त्या सर्वावेदनदृष्टान्तेनाहमर्थस्य ब्रह्मसम्पत्त्या सर्वावेदनकथनात्तत्र भासमानं सुखं तत्पदलक्ष्यं ब्रह्मैव, सामग्र्यभावेन तत्र वैषयिकसुखासत्त्वात्तस्यैवाहमर्थनिष्ठस्वापे विशेषणत्वात् । अहमर्थस्य सुखं सन्नहमस्वाप्समिति सुखभिन्नतयाऽप्रमीतेश्च । स्वापश्च मनोलयसहितं मूलाज्ञानं सर्वविषयकं तूलाज्ञानं च । मनसो लीनत्वादेव च न तत्र विशिष्टा वृत्तिः किन्तु साक्षात्कारा सुखाकारा स्वापाकारा चेति तिस्रो निर्विकल्पका अविद्यावृत्तयः समूहालम्बनरूपाः । तादृग्भिः संस्कारद्वारा प्रबोधे स्मृतिरपि स्वसमानाकारा निर्विकल्पकसमूहालम्बनरूपैव, निष्प्रकारकानुभवात्सप्रकारकस्मृतेरसम्भवात् । निर्विकल्पकानुभवान्निर्विकल्पकस्मृतिस्त्वनुभवस्मृत्योः समानविषयत्वेन सामान्यविषयकार्यकारणभावादुपपद्यते । अस्मिन्मते अहङ्कारस्य 'अस्वाप्सम्' इति भूतलकारोत्तमपुरुषाभिलापस्तु स्मर्यमाणाभिन्नसाक्षिणि तादात्म्येनाध्यासेन स्मर्यमाणत्वाभिमानादित्यग्रे स्फुटीभविष्यति ।

ननु प्रबोधे स्वापविशिष्टस्मृतेरेवानुभाविकत्वात्तज्जन्यरूपविशिष्टविषयकानुभव एवाविद्यावृत्तिरूपः कल्पयितुमुचितः, समानप्रकारत्वेनैवानुभवस्मृतिभ्यां संस्काराणां कार्यकारणभावात्, अन्यथाऽतिप्रसङ्गात् । नच विशिष्टानुभवेऽहङ्कारस्य निमित्तत्वात् सुषुप्तौ च तदभावात्प्रथमाविद्यको विशिष्टानुभवः स्यादिति वाच्यम् । अविद्यावृत्तौ अहङ्कारस्य निमित्तत्वे मानाभावात् । तथा च कथं तत्र केवलानुभवः ? । अपि चाहमर्थस्य वर्तमानतया प्रत्यक्षत्वादस्मरणे सौषुप्तसुखसाक्षिणोरपि नित्यतया सर्वदाऽनुवर्तमानत्वेन प्रत्यक्षत्वात् न स्मृतिविषयत्वसम्भवः । एवं जागरणाद्यक्षणेऽनुभूयमानपदार्थगोचरतदानन्तिनाज्ञानस्य नष्टत्वेन मनोलयस्य चातीतत्वे स्मृतिसम्भवेपि मूलाज्ञानस्य विषयाज्ञानानां च यावत्स्वविषयकज्ञानोदयमनुवर्तमानत्वात्तदसम्भव एव । अत एवोक्तं वार्तिककारपादैः 'न सुषुप्तिगेत्यादि'ग्रन्थस्त्वभिन्न एवास्मात् ।

क्षिचैतन्यानुभवाङ्गीकाराच्च । अद्वितीयब्रह्मविजिज्ञापयि

न्यायरत्नावली ।

हमस्वाप्सं न किञ्चिदवेदिष' मित्याकारकज्ञानस्य जाग्रत्कालीनस्
स्मृतित्वं न स्यादिति वाच्यम् । तस्य तन्मतेऽनुभवत्वस्वीकारात्
उक्तं हि अव्याकृतप्रक्रियायां वार्तिके—

न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः ।
कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक् ॥

कालाद्यव्यवधानत्वादिति । यदा स्मृतिः परेण
च्या, तदापि साक्षिरूपानुभवोऽस्तीत्यर्थः । अत्र हेतुः-
न हीति । आत्मस्थं सुषुप्तिजीवस्थं साक्षिचैतन्य
अतीतभाक् अतीतताभाक् । न चाज्ञानाकारवृत्तिं वि
नाज्ञासिषमित्याकारो नोपपद्यत इति वाच्यम् । न किञ्चिदवेदि
मित्यनेन अनेकविषयकाज्ञानस्यैवोल्लेखात् । तन्नाशादेव तदवच्छि
न्नचिन्नाशरूपसंस्कारोत्पादेन स्मृतिसम्भवात्, नाज्ञाशिषमिति स
तिरिति मूलाज्ञानस्मृतिनिषेधः । न च तथापि वार्तिकमते साक्षि
स्वप्रकाशतया सर्वदा भानस्यानपलापात् तद्बलाच्छुद्धस्मृतिरवान
रवाक्यस्थपदैः स्यादेवेति वाच्यम् । जन्यनिर्विकल्पकं विना तत्
क्षणावस्थारूपसंस्कारजस्मृत्यसम्भवादित्यत आह—अद्वितीयेति

नारायणी ।

ननूत्थितस्य तादृशप्रत्ययो न स्मृतिः साक्षिणोऽव्यवधानेनोत्था
कालस्यानुभवकालत्वात् । अत एवोक्तं वार्तिके—

न सुषुप्तिगविज्ञानं नाज्ञाशिषमिति स्मृतिः ।
कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक् ॥ इति ।

तथाच तादृशस्मृत्यन्यथानुपपत्त्या सुषुप्तावनुभवायोगात् उत्थान
ले च सर्वानुस्यूतरूपेणैव साक्षिणो भानादनुपहितरूपेण भानाभावात्
पदैः स्मृतिसंभव(१)स्तत्राह—अद्वितीयेति । अथवा नन्वेवं शुद्धयोरपूर्वत्व

(१) कथं वा पदानां शक्यसम्बन्धरूपः शक्तिग्रहस्तत्राह अद्वितीयेति । सजाती
विजातीयस्वगतभेदशून्यब्रह्मणः । इत्याधिकः पाठः खपुस्तके ।

यथा प्रवृत्तानां सत्यज्ञानादिपदानामुपाधिविशिष्टचैतन्ये शक्तत्वेऽपि चैतन्यमात्रे तात्पर्येण तत्रैव तदंशे एव संस्कारोद्बोधाच्च।

इच्छन्ति ह्याकाशादिपदादपि निर्विकल्पकं स्मर-

न्यायरत्नावली।

शुद्धत्यर्थः। विजिज्ञापयिषया–प्रमार्थम्। उपाधीति। सत्यत्वादीत्यर्थः। शक्तत्वेऽपि–शक्ततया ज्ञातत्वेऽपि। चैतन्यमात्रे–शुद्धचैतन्ये। तात्पर्येण–तात्पर्यनिश्चयेन। तदंशे–शुद्धचिद्रूपे, विशिष्टस्यांशे। संस्कारोद्बोधात्–स्मृतिरूपकार्यजनने संस्कारस्य सहकारित्वकल्पनात्। सत्यज्ञानादिपदानामित्यनुषज्यते। तथा च विशिष्टस्यैव पूर्वमनुभूतत्वेन संस्कारसत्त्वेऽपि सत्यादिवाक्ये शुद्धब्रह्मतात्पर्यानुरोधेन तस्य संस्कारस्य सत्यादिपदज्ञानसहकृतशुद्धस्मृतिहेतुत्वं कल्प्यत इति भावः।

ननु पदपदार्थयोः वृत्तिज्ञानजन्या पदार्थोपस्थितिरेवान्वयबोधे हेतुः, सत्यादिपदस्य शुद्धे लक्षणारूपवृत्तिज्ञानं न सम्भवति, शुद्धस्य पूर्वमज्ञानात् अत आह–इच्छन्तीति। मणिकाराद्य इति

नारायणी।

ङ्गप्रसङ्गः, सौषुप्तप्रत्यक्षेण ग्रहादत आह—अद्वितीयेति। अद्वितीयब्रह्मविजिज्ञापयिषया–न विशेषेणाखण्डसच्चिदात्मना ज्ञापयितुमिच्छया, प्रमार्थमिति यावत्। प्रवृत्तानां–किं तत् ब्रह्मेत्याकाङ्क्षापरिपूरकत्वेन पठितानाम्, सत्यादिपदानां––सत्यज्ञानानन्तविज्ञानमयादिपदानाम्। उपाधिविशिष्टचैतन्ये ; शक्तत्वेपि––पदस्वाभाव्यादिना सत्यत्वादिधर्मविशिष्टचैतन्ये कल्प्यमानशक्तिमत्त्वेऽपि, चैतन्यमात्रे––अनुपहितचैतन्ये तात्पर्येण, तदंश एव––विशिष्टस्यांशे विशेष्ये शुद्ध एव, संस्कारोद्बोधाच्च––संस्कारोद्बोधकत्वाच्च। सत्यादिपदानामिति शेषः। सत्यत्वादिविशिष्टविषयकशक्त्यनुभवजनितसंस्कारस्यैव धर्मांशमोषेण शुद्धस्मृतिहेतुत्वं कल्प्यते तात्पर्यानुगृहीतसत्यादिपदज्ञानरूपोद्बोधवत्त्वादिति यावत्।

विशिष्टसंस्कारात् शुद्धस्मृतिस्तार्किकाणामपि सम्मतेत्याह–इच्छन्तीति।

न्यायरत्नावली।

शेषः। शक्तिवादे हि मणावुक्तम्-"आकाशादिपदस्य शब्दाश्रयत्वादिविशिष्टे न शक्तिः, कदाचिददृष्टद्रव्यान्यद्रव्यत्वरूपेणाप्याकाशादिपदाच्छाब्दबोधोत्पत्तेः तद्विशिष्टेऽपि शक्त्यापत्तेरेकस्यामाकाशादिव्यक्तौ केवलायामेव शक्तिसम्भवात्(१) शक्त्यनुगमार्थमेव किञ्चिद्धर्मविशिष्टे शक्तिस्वीकारात्। न च शुद्धे शक्तिज्ञानात्स्मृतौ सत्यां शुद्धस्यैव शाब्दबोधः स्यात्, न तु शब्दाश्रयत्वादिविशिष्टस्येति वाच्यम्। यद्यपि शब्दाश्रयत्वाद्यंशे न शक्तिर्गृह्यते

नारायणी।

तार्किका अपीति शेषः। आकाशादिपदादपि-आकाशः शब्दाश्रय इत्यत्राकाशपदादपि, निर्विकल्पकं स्मरणम्। अन्यथा तत्र शब्दाश्रयः शब्दाश्रय इति पौनरुक्त्या शाब्दबोधानुपपत्तेः। अतः आकाशपदस्य यद्यपि शब्दाश्रयत्वविशिष्टे शक्तिस्तथापि तत्र(२)मोषात् शुद्धस्यैव स्मृति

---

(१) अत्र गपुस्तके 'सम्भवाच' इति पाठः।

(२)—तत्र शब्दाश्रयत्वांशे मोषात् शुद्धस्यैव स्मृतिरङ्गीक्रियते प्रतीत्यनुसारात् आदिना रामरावणादिपदेभ्योपि प्रमेयत्वरूपेणानुभवजनितसंस्कारसचिवैर्मोषादिवलतो रामरावणादीनां शुद्धरूपेण स्मृतिः स्पष्टैवेति ज्ञापितम्। अपिनेतरवाधादितर्केभ्योपि शुद्धस्य स्मृतिर्ज्ञापिता। इत्थं च प्रकृतेपि विशिष्टघटकचिदंशस्य शक्त्यैवोपस्थितौ निषेधवाक्यादिना देहत्वावच्छिन्नं मिथ्येति बोधिते तर्कादपि शुद्धोपस्थितौ पदानां भागत्यागवृत्तिः सुकरेति भावः। उभयमते तादृशकल्पनायां बीजं कण्ठरवेणाह-तात्पर्याधीनत्वादिति। तात्पर्यविषयप्रमानुसारियथासम्भवकल्पनाविषयत्वात्। शब्दवृत्तेः बोधानुकूलसामर्थ्यरूपशब्दवृत्तेः। शक्तिलक्षणान्यतररूपशब्दस्य चेत्यर्थः। तथा च दृष्टान्ते यदा शुद्धस्याकाशविशेष्यकशब्दाश्रयत्वप्रकारकशाब्दबोधे तात्पर्यं तदा विशिष्टशक्तस्यापि पदस्योक्तप्रकारेण शुद्धस्मृतौ सामर्थ्यं कल्प्यते, यदा त्वाकाशपदस्य अष्टद्रव्यातिरिक्तद्रव्यत्वादिना बोधे तात्पर्यं तदा लक्षणा। एवं दार्ष्टान्तिके यदा पुरुष 'एकधैवानुद्रष्टव्य'मिति श्रुत्यनुसार्युक्तोपधायकनिर्विकल्पकबोधे तात्पर्यं तदा सर्वपदानामुक्तप्रकारेण शुद्धस्मृतौ सामर्थ्यं शुद्धे भागत्यागलक्षणा च, यदा तु न तादृशबोधे तात्पर्यं तदा तत्तत्पदबोध्यत्वादिनैव लाक्षणिकान्वयबोधसम्भवान्न मोषादिकल्पनेति भावः।

अथवा ननु तर्हि लक्षणेति प्रवादो व्यर्थः शक्त्या मोषेणैव स्मृत्युपपत्तेः इति चेदिष्टापत्तिरेवेत्यभिप्रेत्याह—तात्पर्याधीनत्वादिति। इति पाठः खपुस्तके।

न्यायरत्नावली।

इति संक्षेपशारीरकोक्तिविरोध इति वाच्यम्। तथा हि प्रकृतिप्रत्यययोरन्वितविषयकशाब्दधीप्रयोजकत्वमेवोक्तम्। प्रकृतिप्रत्यययोरेकैकमात्रं(१) न स्वार्थमनुभावयति। अत एवैकैकमात्राभिहितार्थानुभवो न प्रकृत्यर्थान्वितप्रत्ययार्थान्वयानुभवहेतुः, किन्तव(२)लाक्षणिकप्रकृतिप्रत्ययाभ्यां मिलिताभ्यां स्वार्थस्मृतिद्वारा स्वार्थयोरन्वयानुभवो जन्यते। लाक्षणिकसर्वपदस्थलेऽपि वाक्यार्थबोधः परम्परया (३)प्रकृतिप्रत्ययाभ्यां प्रयुक्त इत्यत्रैव तस्यास्तात्पर्यात्। अत एव—

प्रत्ययप्रकृतिशब्दतो बहिर्युज्यतेऽभिहितसङ्गतिश्च नः।

इति पूर्वार्धे तथोक्तम्। अथ वा लाक्षणिकस्थले मुख्यार्थान्वये तात्पर्याभावज्ञानद्वारा लाक्षणिकार्थे तात्पर्यज्ञानाय मुख्यार्थान्वयानुभवस्य तात्पर्याविषयस्यापि स्वीकारात् उक्तसंक्षेपशारीरकोक्तिः तमादायैव सङ्गमनीया। उक्तं च तत्त्वमस्यादिवाक्यस्थले संक्षेपशारीरक एव—

सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः
पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः।
उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डार्थधीः
सर्वैरेव ततः पदैरयमिह ज्ञेयः क्रमस्सूरिभिः॥ इति।

सामानाधिकरण्यं पदयोस्समभिव्याहारधीः। अन्वयः—तात्पर्यविषयवाक्यार्थधीप्रयोजकः। विशेषणेतरतया—विशेषणविशेष्यताशालिनी वाक्यार्थधीरित्यनुषज्यते। विरोधोद्भवः उक्तज्ञाने तात्पर्याभावधीद्वारा लक्ष्यार्थघटितवाक्यार्थज्ञाने तात्पर्यधीरन्वयधीरित्यनुषज्यते। एवं च अभिहितार्थानुभवस्यापि सर्वपदलाक्षणिक-

(१) प्रकृतिप्रत्यययोरेकैकमिति गपुस्तके।
(२) किन्तु लाक्षणिकेति गपुस्तके।
(३) परस्परप्रकृतिप्रत्ययाभ्यामिति घपुस्तके।

न्यायरत्नावली।

तास्थले वाक्यार्थानुभवहेतुता वक्तुं शक्यते। अत एवाद्वैतसिद्धि तत्त्वमस्यादिवाक्यस्थले पदाभिहितपदार्थानां वाक्यार्थानुभावक त्वमित्युक्तम्। लाक्षणिकस्थले मुख्यार्थान्वयानुभवस्यानावश्यक त्वे तु तदसङ्गतम्, पदार्थस्य पदाभिहितत्वाभावात्। पदजन्या नुभवविषयत्वं हि पदाभिहितत्वम्, न तु पदजन्यधीविषयत्वम् प्रकृत्यर्थमात्रस्यापि पदाभिहितत्वापत्त्या 'प्रत्ययप्रकृतिशब्दत बहि'रित्यादिसंक्षेपशारीरकविरोधात्।

ननु तार्किकादिमतेऽपि प्रकृत्यर्थान्वितप्रत्ययार्थशाब्दानुभ वस्य क्रियाकारकान्वयबोधे हेतुत्वम्, गङ्गादिपदज्ञानस्य गङ्गा दिपदार्थान्वयविषयताकशाब्दसामान्यहेतुत्वं च स्वीक्रियते; तत्र च अभिहितान्वयवादात्तन्मतस्याविशेष इति चेन्न। तार्किकादि मते गङ्गादिपदज्ञानस्य (१)स्वप्रयोज्यगङ्गादिपदार्थधीद्वारा तदर्थ विषयकशाब्दानुभवहेतुत्वस्वीकारेण स्मृतिरूपोक्तधीद्वारा प्रकृत्य र्थविशेषितप्रत्ययार्थशाब्दधीरूपोक्तानुभवस्य तादृशानुभवद्वारा क्रि याकारकान्वयधीरूपोक्तानुभवस्य च गङ्गादिपदज्ञानात् उत्पत्ति स्वीकारात्। अभिहितान्वयवादे च स्मृतिरूपोक्तार्थधीद्वारा उक्त प्रत्ययार्थशाब्दानुभव एव हेतुत्वस्योक्तपदज्ञाने स्वीकारेण क्रिया कारकान्वयानुभवस्योक्तपदज्ञानादुत्पत्त्यस्वीकारात्, गङ्गापदार्था न्वयविषयतायाश्चोक्तपदज्ञानजन्यतावच्छेदकत्वस्वीकाराच्च द्वयो र्मतयोर्विशेषात्। न ह्यभिहितान्वयवादे क्रियाकारकान्वयानुभव स्य पदज्ञानकरणकत्वं स्वीक्रियते। पदज्ञानकरणकानुभवस्यै तत्करणतास्वीकारात्। पदज्ञानस्य हि स्वप्रयोज्यधीद्वारा स्वार्थशा ब्दधीर्नकार्या, प्रयोज्यत्वस्य स्मृताववान्तरवाक्यार्थधीबोधे चानु गतस्यैकस्याभावात्। स्मृतौ हि कार्यत्वं स्मृतित्वेन, शाब्दबो

(१) स्वप्रयोज्यगङ्गापदादिपदार्थधीद्वारा इति गपुस्तके पाठः।

ननु तर्हि वेदान्तवाक्येभ्य एव पदार्थोपस्थितौ वाक्यार्थबोधे च सति तस्य स्वत एव प्रामाण्यात्तेनाज्ञानन-

न्यायरत्नावली ।

च तत्त्वेन। तथा च स्वजन्यस्मृतिद्वाराऽवान्तरवाक्यार्थबोधे पदज्ञानस्य हेतुत्वम् , तद्द्वारा महावाक्यार्थबोधे तु हेतुत्वान्तरम् । तथा च द्वितीये मानाभावात् महावाक्यार्थधीरवान्तरवाक्यार्थज्ञानेनैव जन्यते, न तु पदज्ञानेनेति भट्टमते स्वीक्रियते । न वा तार्किकादिमते अन्वयविषयताघटितरूपेण पदज्ञानस्य कार्यतायां मानमस्ति, ज्ञातार्थविषयताया अपि प्रमाणप्रयुक्तत्वस्वीकारेणोपदर्शितमानासम्भवात् । न हि तन्मते प्रमाणानामज्ञातज्ञापकत्वानियमः ।

किञ्च तार्किकादिमते प्रकृत्यर्थविशिष्टप्रत्ययार्थशाब्दबोधोत्तरमेव क्रियाकारकान्वयानुभव इति नियमो न स्वीक्रियते, 'खले कपोत'न्यायेन युगपदेव तादृशानुभवस्यापि स्वीकारात् । वाक्यार्थकर्मके कुलकादौ चावान्तरवाक्यार्थानुभवपूर्वकमहावाक्यार्थस्वीकारेऽपि महावाक्यार्थानुभवसामान्यस्य तादृशनियमास्वीकारात्, अभिहितान्वयमते च तादृशनियमस्वीकारात् , स्फुट एवोक्तमतयोर्विशेषः । अन्विताभिधानवादात्तु तार्किकादिमते स्फुटतरो विशेषः । तार्किकैः प्रकृत्यर्थविशिष्टप्रत्ययार्थमात्रस्य शाब्दानुभवस्वीकारात् अन्विताभिधानमते तदस्वीकारादित्यास्तां विस्तरः ।

ननु प्रमात्वेन भासमानज्ञानादेवाज्ञाननिवृत्तिरिति वाक्यजज्ञानीयप्रमात्वभानार्थं शास्त्रमपेक्ष्यताम् तत्राह—तस्येति । स्वत एव—साक्षिमात्रभास्यादेव । प्रामाण्यात्—प्रमात्वात् । तेनाज्ञाननिवृत्त्युपपत्तावित्यत्र हेतुरयम् । विचारेण—विचारशास्त्रेण ।

नारायणी ।

विचारस्य सार्थकत्वं साधयिष्यन्नाशङ्कते नन्विति । वेदान्तवाक्येभ्य एव-उक्तमहावाक्येभ्य एव । पदार्थोपस्थितौ-तत्त्वंपदार्थोपस्थितौ । वाक्यार्थबोधे च सति-पदार्थयोरैक्यरूपान्वयबोधे च सति । तस्य-महावाक्यार्थबोधस्य ।

त्कार्यनिवृत्त्युपपत्तौ किं विचारेणेति चेत्सत्यम् । वेदान्ता यद्यपि स्वतःप्रामाण्यान्निर्विकल्पकमात्मसाक्षात्कारं जनयन्ति, तथापि तस्य मन्दबुद्धीनां वादिविप्रतिपत्तिजसंशयप्रतिबन्धेन अज्ञाननाशकत्वासामर्थ्यात्, विचारेण तु संशयनिवृत्तौ निरपवादमज्ञाननिवृत्तिरिति सं

न्यायरत्नावली ।

श्रीकृष्णकृपाकटाक्षैः नितरां शुद्धचित्तस्य न विचारशास्त्रापेक्षेत्याशयेनाह—सत्यमिति । तथाप्यतथाभूतान्मन्दाधिकारिणः प्रति विचारशास्त्रमावश्यकमित्याशयेनाह—वेदान्ता यद्यपीति स्वतः प्रामाण्यात्—साक्षिमात्रभास्यं प्रमात्वमुत्सर्गतः प्राप्य जनयन्ति—उत्पादयन्ति । संशयप्रतिबन्धेन—तात्पर्यसंशयरूपदोषनियतप्रमात्वावरणप्रयुक्तेनापवादकेन प्रमात्वसंशयरूपेणाज्ञाननिवृत्तिविरोधिना। निरपवादम्—उत्सर्गसिद्धस्वतः(१)प्रमात्वस्यापवाद

नारायणी ।

स्वत एव प्रामाण्यात्—स्वग्राहकसाक्षिभास्यप्रमात्मकत्वात् (२)। *स्वतस्त्वं च स्ववित्तिवेद्यत्वं वित्तिश्च साक्षिरूपा न प्रभाकरसम्मता स्वात्मिका किन्त्वविद्यावृत्तिरूपैव । अत एव भट्टसम्मता ज्ञाततालिङ्गकानुमितिरपि न. साक्षिणा च वृत्त्युत्पत्तिसमय एव तद्गतावाधितविषयकत्वरूपं प्रामाण्यमपि गृह्यत इति न तत्रापि विचारशास्त्रापेक्षेत्यर्थः *तेन गृहीतप्रमात्वकेन बोधेन । अज्ञानेति—साध्यासाज्ञाननाशसम्भवे किं विचारशास्त्रेण श्रुतेर्निरपेक्षप्रमाणत्वेन बोधार्थं विचारशास्त्रापेक्षाऽयोगादिति भावः । भगवदनुगृहीतानां विचारशास्त्रमनतिप्रयोजनकमपि मन्दानां सार्थकं भवत्येवेत्यभिप्रेत्यार्धाङ्गीकारवाक्यमाह—सत्यमिति । स्वतः प्रामाण्यात्—स्वतः प्रामाण्यं प्राप्य । निर्विकल्पकं—संसर्गानवगाहि । तस्य आत्मसाक्षात्कारस्य । वादीति । वक्ष्यमाणाभ्यो वादिविप्रतिपत्तिभ्यो जातो योऽहं कर्तृभोक्तृरूपो नवेत्यादिसंशयस्तदात्मकप्रतिबन्धेन । संशयनिवृत्तौ-विप्रतिपत्तिनिरासद्वारोक्तसन्देहनिवृत्तौ । निरपवादेति—निरप

( १ ) उत्सर्गसिद्धप्रमात्वस्येत्यादिः घपुस्तके ।
( २ ) * * एतच्चिह्नद्वयमध्यगः पाठः खपुस्तके नास्ति ।

शयबीजभूतवादिविप्रतिपत्तिनिरासार्थं विचार आरभ्यते । तत्र त्वम्पदार्थे प्रथमं विप्रतिपत्तयः प्रदर्श्यन्ते । तत्पदार्थस्य शास्त्रतात्पर्यविषयतयाऽभ्यर्हितत्वेऽपि त्वम्प-

न्यायरत्नावली ।

कोऽत्र संशयशून्यम् । इदं च निवृत्तिक्रियाविशेषणम् । तथा चौत्सर्गिकस्वतःप्रमात्वस्य दोषसमवधाननियतेन प्रमात्वावरणेनापवादात् प्रमात्वसंशयोदयेनानिश्चितप्रमात्वकस्य साक्षात्कारस्य नाविद्यानिवर्तकत्वम्, विचारे सति तु निश्चितप्रमात्वसाक्षात्कारस्याविद्यानिवर्त्तकतेति भावः । त्वम्पदार्थे—मोक्षवादिभिः मोक्षभागित्वेनाभिमते । शास्त्रतात्पर्येति । जीवस्वरूपस्य शुद्धस्यापि सुषुप्त्यादिसिद्धत्वेन ज्ञातत्वात्, ब्रह्मस्वरूपस्याज्ञातस्यैव सत्यादिवाक्येन शुद्धरूपेण ज्ञापयित्वा महावाक्येन जीवस्वरूपानुवादेन ब्रह्मस्वरूपस्य तदभेदेन विधानात्, सत्यादिवाक्यविशिष्टमहावाक्यस्य विधायकत्वान्महावाक्यस्यैव द्वारीभूतशुद्धजीवोपस्थितिहेतुत्वम्पदवत्त्वेन शुद्धजीवानुवादकत्वात्, शुद्धब्रह्मण्येव शास्त्रतात्पर्यमिति ज्ञायते । महावाक्यार्थनिश्चयात्पूर्वं तत्त्वम्पदलक्ष्यस्वरूपयोर्भेदनिश्चया(१)त्तत्त्वम्पदार्थयोर्जीवस्वरूपस्यैव ब्रह्मरूपाभिन्नतया ज्ञाय-

नारायणी ।

वादं प्रतिबन्धरहितं यथा स्यात्तथा ऽज्ञाननिवृत्तिः । संशयेति—विषयप्रमागतोभयसन्देहेत्यर्थः । तत्र—तत्त्वंपदार्थयोर्मध्ये । त्वंपदार्थे—ज्ञानाधिकारिणि । विप्रतिपत्तयः—विरुद्धाः प्रतिपत्तयः, कोट्यन्तरोपस्थापकानि वादिनां वाक्यानि इति यावत् । प्रथममिति स्वोक्ते बीजं स्पष्टयति—तत्पदार्थस्येति । जगत्कर्तृत्वाद्युपलक्षितस्य । शास्त्रेति । जीवे सद्वयत्वादिभ्रमनिवृत्त्यर्थं विधेयत्वेन शास्त्रप्रवृत्त्युद्देश्यप्रमितिविषयतयेत्यर्थः । अभ्यर्हितत्वेपि-सूत्रकारादिभिर्ज्ञेयत्वाद्युक्त्या पूजितत्वेपि । शास्त्रजन्येति—परम्परया शास्त्र-

(१)—भेदनिश्चयसत्वात् । अथवा जीवब्रह्मस्वरूपयोरेकत्वेन शास्त्रतात्पर्यविषयत्वनिश्चयस्य श्रवणफलस्य काले उक्तविषयत्वरूपाभ्यर्हितत्वनिश्चयेपि तत्पूर्वं तत्त्वंपदार्थयोर्जीवस्वरूपस्यैवेत्यादिपाठोऽधिको घपुस्तके ।

दार्थस्य शास्त्रफलमोक्षभागितया ततोऽप्यभ्यर्हितत्वात्। तत्र देहाकारेण परिणतानि चत्वारि भूतान्येव त्वम्प-

न्यायरत्नावली ।

दानस्य मोक्षभागित्वेन स्वीकारात् जीवोऽभ्यर्हितः । शास्त्रतात्पर्यविषयापेक्षया हि शास्त्रार्थानप्रतिपत्तिफलं मुख्यम्, तदर्थं तस्य ज्ञेयत्वात् । फलापेक्षयापि फलकामो मुख्यः, तस्य (१)तद्गतसाक्षात्काररूपभोगजनकत्वादिति भावः ।अभ्यर्हितत्वादिति। प्रथमश्लोके(२) आचार्यैः पूजितत्वादित्यर्थः । तेन आचार्यैः मोक्षभागित्वेन प्रथमतः जीवस्वरूपस्य विवेचितत्वात् तत्रास्माभिरपि प्रथमं विप्रतिपत्तिरुच्यते(३) । उच्यत इत्यर्थलाभात् आद्यश्लोकस्य प्राथम्येऽपि हेतुलाभः । देहेत्यादि । यद्यपि भूतानि जडस्वभावानि, तथाऽपि मदिराकारपरिणतस्यान्नस्य मादकत्ववत् देहाकारपरिणतस्य भूतचतुष्टयस्य ज्ञातृत्वम्, 'स्थूलोऽहं जानामि' इति प्रत्ययादिति भावः । चार्वाकैकदेशिनां मतान्याह-

नारायणी ।

जन्यमोक्षरूपफलभागितयेत्यर्थः। त्वंपदार्थस्य-अधिकारिणः। ततोपि-तत्पदार्थादपि ।अभ्यर्हितत्वात्--आदृतत्वात्। आचार्यैरिति शेषः ज्ञेयापेक्षया ज्ञानाधिकारिणो मुख्यत्वात् अधिकारिणं विना विचारस्यैवानुत्थानादिति भावः । अत—तत्पदार्थत्वंपदार्थयोर्मध्ये । देहाकारपरिणतानि-देहाकारेण विकृतानि । चत्वारि भूतानि—पृथिव्यप्तेजोवाय्वाख्यानि भूतसंज्ञकानि । त्वंपदार्थः--त्वंपदाभिधेयश्चेतनो जीव इत्यर्थः । गौरोहं जानामीत्यादिप्रतीत्या गौरस्यैव ज्ञातृत्वप्रतीतेरिति भावः। देहानामवस्थाभेदेन भेदेप्यहंप्रत्ययस्यानुवृत्तेर्नाहं प्रत्ययगोचरो देहः किन्तु काणोहमित्यादिप्रतीतेर्यथासम्भवमिन्द्रियमेवाहं

(१) तद्गतेति घपुस्तके नास्ति ।
(२) न भूमि र्न तोयं......शिवः केवलोहमिति श्लोके ।
(३) विप्रतिपतिरुच्यते इत्यर्थलाभादिति घपुस्तके । युक्तश्चायम् ।

दार्थ इति चार्वाकाः । चक्षुरादीनि प्रत्येकमित्यपरे । मि-
लितानीत्यन्ये । मन इत्येके । प्राण इत्यपरे । क्षणिकं वि-

न्यायरत्नावली ।

चक्षुरादीनीति । तत्र मृते देहे ज्ञातृत्वाभावात् पश्यामीत्यादि-
प्रतीतेश्चेन्द्रियमात्मा । तत्र चक्षुः सर्वापेक्षया अधिकसुखहेतुत्वेन
श्रेष्ठत्वात् तदेव ज्ञातृ । तदभावे श्रोत्रमेव, अन्यापेक्षयाऽधिकसुख-
हेतुत्वात् । तयोरभावे त्वागिन्द्रियम्, तद्धि यद्यपि रात्रिन्दिवं
बहुधा विषयग्राहिचक्षुश्श्रोत्रापेक्षया निकृष्टम्, तथापि रसनापेक्षया
बहुधा विषयग्राहित्वेन श्रेष्ठम् । तदभावे रसनम्, प्रतिदिनमाव-
श्यककार्यत्वेन घ्राणापेक्षया श्रेष्ठत्वात् । तदभावे घ्राणम् । मि-
लितानीति । यावन्ति इन्द्रियाणि एकशरीरे मरणपर्यन्तं तिष्ठ-
न्ति, तावन्तीत्यर्थः । 'पश्यामी'त्यादिप्रत्ययेभ्यः कस्यचिच्चक्षुषः
अधिकसुखम् अधिकविषयग्राहित्वमिव कस्यचिच्छ्रोत्रादिनैव त-
दुभयमिति विनिगमकाभावात् कस्य केनेन्द्रियेण तदुभयमिति
परेण ज्ञातुमशक्यत्वाच्च । अन्यानीन्द्रियाणि आलोचनात्मकानि-
र्विकल्पकसाधनत्वात् नात्मा । मनस्तु सविकल्पकसाधनत्वाद-
न्येन्द्रियप्रवृत्तिमूलसङ्कल्पादिमत्त्वात् श्वेतद्वीपवासिनामन्येन्द्रियाभा-
वेऽपि सत्त्वात् आत्मेति केचित् । सर्वदा प्राणस्यैकरूपत्वादमन-
स्कानामपि योग्यादीनां प्राणसत्त्वात् प्राण एवात्मेत्यन्ये । क्षणिक-

नारायणी ।

चार्वाकानुजमतमाह—चक्षुरित्यादि । विनिगमकाभावात्सर्वाण्येवात्मेत्य-
परानुजमतमाह—मिलितानीति । इन्द्रियाणामभावेऽपि स्वप्नेऽहमिति प्रतीते-
र्नेन्द्रियाण्यात्मा किन्तु मन एवेत्यपरमतमाह—मन इति । मनसोऽभावेऽपि
सुषुप्तौ स्वापानुभवात् न मन आत्मा किन्तु प्राणवायवः श्वासादिहेतु-
भूता इत्यपरमतमाह—प्राण इति । ज्ञानं विना बाह्यपदार्थस्यासिद्धेः
बाह्यपदार्थ आत्मा किन्त्वर्थक्रियाकारित्वरूपे(१)ण प्रतिक्षणविनाशि ज्ञान-
मेवात्मेति सौगतमतमाह—क्षणिकमिति । द्वितीयक्षणवृत्तिध्वंसप्रतियोग्या-

(१)—रूपसत्त्वेन प्रतिक्षणेति पाठः खपुस्तके ।

न्यायरत्नावली ।

मिति । यद्यपि सत्यं सर्वं क्षणिकम्, तथापि ज्ञानमेवात्मा ज्ञानाभिन्ने ज्ञातरि मानाभावात् । तत्राहमिति आलयविज्ञानं पूर्वं वेणैव उत्तरोत्तरं जायते । इन्द्रियादिजन्यं प्रवृत्तिविज्ञानं षड्विधम् न च क्षणिकस्यात्मनः कालान्तरभाविभोगार्थं प्रवृत्त्यनुपपत्तिरि वाच्यम् । क्षणिकत्वभावनापरिपाकं विना स्थिरत्वगोचरानादिह वासनानुच्छेदात् । उक्तपरिपाके तु (१)मोक्षप्राप्त्या प्रवृत्त्यभा इष्ट एवेति वादिनः चत्वारः सौगताः । तत्र सर्वाधमः सौत्रा न्तिकः । स हि मन्यते घटपटादयो बहिर्विषयाः सर्वे नित्यानु मेयाः, (२)घटाद्याकारे हि ज्ञाने घटादीनां प्रतिबिम्बमुपलभ्य 'तत्प्रतिबिम्बं बिम्बपूर्वकम् प्रतिबिम्बत्वात् मुखादिप्रतिबिम्बवदि' त्यनुमीयते ।(३)तत्र श्रेष्ठो वैभाषिकः । स हि घटादीनां प्रत्यक्षं ना लंपति । तयोर्मते भ्रमस्थले शुक्त्यादौ रजताद्यभावेऽपि ज्ञानरू पमेव रजतादिकं ज्ञायते, तत्रैव चेदन्त्वादेः संसर्गाध्यासः । तत ऽपि श्रेष्ठो योगाचारः । स हि मन्यते घटादिकं सर्वं ज्ञानमे बहिरर्थस्य परमाणुसमूहरूपत्वे स्थौल्यादिबुद्ध्यनुपपत्तिः, अ यवित्वे च आवृतत्वानावृतत्वस(४)कम्पत्वाकम्पत्वनीलत्वानील त्वादिविरुद्धधर्माध्यासस्य भेदकस्य (५)बाधकत्वम्, अतस्त दुर्वचत्वात् तादात्म्यजातीयसम्बन्धस्य घटो द्रव्यमित्यादौ तु व स्त्वात् तादात्म्यान्यस्य ज्ञानविषययोः सम्बन्धस्य कल्पने गौ वाच्च । घटादिकं ज्ञानात्मकमि(६)त्याकारविशेषः ज्ञानस्य निरंशत्वा

( १ ) शुद्धविज्ञानधारारूपेश्वरप्रवेशरूपमोक्षप्राप्त्या इत्यादि घपुस्तके ।

( २ ) नित्यानुमेया अपि घटाद्याकारे इति गपुस्तकीयः पाठः प्रामादिकः ।

( ३ ) ततः श्रेष्ठो वैभासिक इति भाव्यम् ।

( ४ ) सम्यत्त्वासम्यत्त्वनीलत्वेत्यादि पाठो घपुस्तके ।( ५ )साधकत्वमिति गपुस्तके

( ६ )-मिथ्याभूताकारविशेषः ज्ञानस्य निरंशत्वात् मूर्तामूर्तादिविरुद्धनानाकारत्वा इत्यादिपाठो घपुस्तके ।

न्यायरत्नावली।

विरुद्धनानाकारत्वानां संशयादिस्थलेऽनुपपत्तेर्न वास्तवः । एवं सर्वबौद्धमते प्रमाणप्रमातारोऽपि ज्ञानस्य कल्पिताकाराः । प्रमेयप्रकाशनव्यवहारोपधायकत्वविशिष्टज्ञानरूपा प्रमितिः-प्रमितिव्यवहारानुकूला शक्तिः प्रमाणम्, तदाश्रयः प्रमाता, पूर्वपूर्वज्ञानादेवोत्तरोत्तरज्ञानमुत्पद्यते, ज्ञानं च सर्वं स्वविषयकम्, न तु ज्ञानान्तरविषयः, अनवस्थाद्यापत्तेः । विज्ञानवादिमते घटादेः ज्ञानाकारस्यैव विषयत्वेन ज्ञानानां क्षणिकानां भिन्नकालीनत्वेन विषयविषयिभावसम्बन्धाभावात्, त्रयाणामेषां तु विशुद्धक्षणिकविज्ञानभावनया तद्धारारूप(१) ईशप्रवेशो मोक्षः । उक्तभावनारूपपरिज्ञानस्य जीवसन्तानस्थस्य यस्मिन् विशुद्धविज्ञाने हेतुत्वम्, तस्येश्वरसन्तानस्थेन तत्कालीनेन क्षणिकेन विज्ञानेन लाघवादैक्यस्वीकारेण मुक्तजीवेश्वरसन्तानयोरैक्यसरूपत्या (२)जीवस्येश्वरसन्तानप्रवेश उच्यते। संसारिनानाजीवस्थानां तु विज्ञानानां नैकसन्तानप्रविष्टतापत्तिः, मिथो विलक्षणत्वात् । तत्सन्तानानां भिन्नकालगतसुषुप्तिपूर्वापरावधिकत्वेन तद्गतज्ञानानां कार्यकारणभावानापन्नत्वाच्च । सुषुप्तिर्हि विज्ञानसन्तानानां (३)पूर्वापरावधिः । उक्तं हि पञ्चपाद्यां बौद्धमतविवेचने—'सुषुप्तौ विज्ञानलेशस्याप्यभावात् अकस्मादेव जागरेऽहमिति धीदर्शना' दिति। बौद्धाधिकारादौ तु सुषुप्तावप्यालयविज्ञानं प्रवृत्तिविज्ञानरहितं पक्षान्तरमालम्ब्य स्वीकृतम् । ततोऽपि श्रेष्ठो माध्यमिकः । स हि मन्यते विज्ञानरूपमपि सर्वं मिथ्यैव । क्षणिकभावनया शून्यभावनया च आत्म-

(१)—तद्धारेति । शुद्धविज्ञानधारेत्यर्थः ।

(२) जीवस्येश्वरसन्तान प्रवेश उच्यते । नहि जीवसन्तानेन जायमानस्य विशुद्धविज्ञानस्य विशुद्धविज्ञानस्वरूपमोक्षस्येश्वरसन्ताने जायमानज्ञानाद्भेदे मानमस्ति । संसारिनानेत्यादिः घपुस्तके पाठः ।

(३) पूर्वोऽपरश्चावधिरिति घपुस्तके ।

ज्ञानमिति सुगताः। शून्यमिति माध्यमिकाः। देहेन्द्रि-
यातिरिक्तो देहपरिमाण इति दिगम्बराः। कर्ता भोक्ता
जडो विभुरिति वैशेषिकतार्किकप्राभाकराः। (१)जडं

न्यायरत्नावली।

ज्ञानरूपो मोक्ष इति। तदेतत् विज्ञानरूपात्ममिथ्यात्वमतमेव शून्य-
मात्मेत्यनेनोक्तम्। न हि शून्यं नाम किञ्चित्तत्त्वं तेनोच्यते। अ-
एव तत्त्वस्य कस्यचित्त्वयानङ्गीकारात् तत्त्वज्ञानं विना सर्वबाध-
सम्भवेन सर्वमिथ्यात्वासिद्धिरिति तन्मतं दूषितं भामत्याम्। स-
मिथ्येति माध्यमिकमतमिति खण्डनकारैरप्युक्तम्। दिगम्बरा-अ-
र्हताः, अर्हन्नाम नित्यसिद्धः पुरुषः, तत्कृतशास्त्रानुयायित्वात्
ते च मन्यन्ते देहसमानपरिमाणः आत्मा, महान्तं देहं त्यक्त्वा न्यू-
नदेहग्रहणे आत्मनो ह्रासेऽपि न नाशः। परिमाणभेदेऽपि द्रव्य-
स्यानाशात्। आत्मा सन्ततोर्ध्वगतिस्वभावोऽपि कर्मपाशेनापि बद्ध-
त्वात् न संसारकाले ऊर्ध्वं गच्छति। कर्मणामत्यन्तोच्छेदे तु(२)स
ततोर्ध्वगतिं लभते, सैव मोक्षः; अलौकिकाकाशगमनं वेति। ना-
स्तिकानां षड्दर्शनीमुक्त्वा आस्तिकानां तामाह- कर्तेत्यादि। वै-
शेषिकादयस्तु आत्मनः सुखदुःखयोगात् तद्धेतुभूतं विहितनिषि-
द्धक्रियाकर्तृत्वमावश्यकम्। स च ज्ञानस्वरूपभिन्नत्वाज्जडः

नारायणी।

लयविज्ञानधारारूपमित्यर्थः। प्रमेयत्वेन दृग्दृश्ययोरपि मिथ्यात्वा-
सद्रूपं क्षणिकं विज्ञानमात्मा किन्तु मिथ्याभूतं क्षणिकं विज्ञानमिति सु-
गतराजमतमाह—शून्यमिति। मिथ्याभूतं क्षणिकं विज्ञानमित्यर्थः
क्षणिकत्वे कर्तृभोक्तृव्यवस्थानुपपत्तेर्न क्षणिकं विज्ञानमात्मा कि-
देहेन्द्रियाद्यतिरिक्तो देहसमपरिमाणवान्, अन्यथा भोगव्यवस्था-
पपत्तेरिति। जैनमतमाह देहेन्द्रियेति। सावयवत्वेन विनाशित्व-
पत्त्याऽकृताभ्यागमप्रसङ्गाच्च देहेन्द्रियाद्यतिरिक्तो देहपरिमाणवानात्मा कि-
निरवयवो नित्यो विभुर्ज्ञानवानिति तार्किकादिमतमाह—कर्तेत्यादि

(१) जडबोधात्मक इति खघपुस्तकयोः। (२) स तदोर्ध्वगतिं लभते इति गपुस्तके

बोधात्मक इति भाट्टाः। भोक्तैव (१)केवलबोधात्मक

न्यायरत्नावली।

जानामीति, ज्ञानाश्रयत्वेन स भाति, न ज्ञानरूपत्वेन। सर्वमूर्तसंयोगित्वरूपविभुत्वमपि तस्यावश्यकम्। अणुपरिमाणत्वे हि देहव्याप्त्यभावेन युगपज्ज्ञानावयवावच्छिन्नसुखादिसमवायित्वं न स्यात्, प्रत्यक्षविषयता च न स्यात्, महत्त्वस्य तस्यां प्रयोजकत्वात्। मध्यपरिमाणत्वे च सावयवत्वेन जन्यत्वापत्तेर्जन्यभावत्वेन विनाशित्वापत्त्या परममहत्परिमाणत्वस्वीकारेण विभुत्वोपपत्तिः। देहादिभिन्नत्वेन आत्मज्ञानपरिपाकात् आत्यन्तिककर्मोच्छेदेनात्यन्तिकदुःखोच्छेदरूपमोक्ष इत्याहुः। तादृशमेव भाट्टमतम्। अत्यन्तदुःखोच्छेदः नित्यसुखसाक्षात्कारो वा मोक्षः, मोक्षकाले हि चक्षुरादिविच्छेदेऽपि मनसो विच्छेदास्वीकारात् कर्मरूपस्य प्रतिबन्धस्योच्छेदेन नित्यसुखविशिष्टतयाऽऽत्मानं मनसैव साक्षात्करोति। आत्मनस्तु अंशद्वयमस्ति। चिदंशेन द्रष्टृत्वम्, 'सोऽहमि'तिप्रत्यभिज्ञाविषयत्वादिकं च, अचिदंशेन ज्ञानसुखादिरूपपरिणामित्वं च, 'मामहं जानामी' ति ज्ञेयत्वं च, ज्ञानरूपातीन्द्रियव्यापारेण विषयनिष्ठज्ञाततारूपसंवित्कर्तृत्वं चेति विशेषः। भोक्तैवेति।

नारायणी।

कर्ता—कृतिमान्, भोक्ता—सुखदुःखाद्यनुभविता, जडः—ज्ञानभिन्नः, विभुः—सर्वमूर्तसंयोगी। न केवलं जडो विभुरात्मा 'योऽयं विज्ञानमय' इत्यादिश्रुतिविरोधात्, किन्तु 'मामहं जानामी'ति दृश्यत्वद्रष्टृत्वयोरपि प्रतीतेरंशतो जडोंऽशतश्च बोध इति मीमांसावार्तिककारमतमाह—जड इत्यादि। जडबोधावात्मा स्वरूपं यस्येत्यंशतो जडबोधस्वरूप इत्यर्थः। (२)'निष्क्रियं निष्कलं शान्त'मिति श्रुतेः निरवयवत्वेनात्मनोंशतो जडबोधरूपत्वासंभवान्न जडबोधरूप आत्मा किन्तु नित्यज्ञानस्वरूपो भोक्तैव न कर्ता अपरिणामित्वादिति साङ्ख्यपातञ्जलयोर्मतमाह—भोक्तैवेति। चेतनत्वा-

(१) केवलो बोधात्मक इति घपुस्तके।

(२) अत्र सर्वास्तिकेषु वैशेषिकोऽधमः शब्दप्रमाणरूपस्य वेदस्यानुमानविधया प्रामाण्याङ्गीकारात्। शब्दप्रामाण्यस्वीकर्तॄणां मध्ये तार्किकोऽधमः तत्त्वमस्यादिवाक्यस्य लक्षणया

इति साङ्ख्याः पतञ्जलिश्च । अविद्यया कर्तृत्वादिभा

न्यायरत्नावली ।

न तु कर्ता, बुद्धिरेव कर्त्री, तदविवेकादात्मनः कर्तृत्वव्यवहारः, सर्वत्रैव हि भ्रमस्थले विषययोः असंसर्गाग्रहात् संसर्गव्यवहारः, धर्मिधर्मज्ञानयोर्भेदाज्ञानात् ज्ञानैकत्वव्यवहारः, न तु विशिष्टं ज्ञानमस्ति, अन्यथाख्यात्यनभ्युपगमात् असंसर्गाग्रहात्क्लृ दोषात् । एवं चासंसर्गग्रहेण न कस्यापि बाध इति लाघवम् । अत एव भ्रमस्थले प्राभाकरोऽप्येवमाहेति भावः । केवलबोधात्मक इति । (१)असङ्गस्वप्रकाशकूटस्थचिदात्मकः । अत एव भोक्ता। सुखदुःखाभ्यां विद्यमानाभ्यां बुद्धिधर्माभ्यामविवेकोपलक्षितानुभवस्वरूपं हि भोक्तृत्वम्, तच्च सत्यमेवेति भोक्तैवात्मा । तस्य बुद्धिविवेकज्ञानेन संप्रज्ञातासंप्रज्ञातसमाधिपरिपाकपर्यन्तेनाविवेकनिवृत्त्या दुःखात्यन्तोच्छेदो मोक्ष इति विशेषः । सर्वास्तिकमतसारा तमाह-अविद्ययेत्यादि । वैशेषिको हि आस्तिकानामधमः, शब्दप्रामाण्यानभ्युपगमेन वेदप्रामाण्यानङ्गीकारात् । वेदप्रामाण्य स्वीकर्तॄणां मध्येऽपि तार्किको न्यूनः, 'असङ्गो ह्ययं पुरुष' इत्यादि

नारायणी ।

द्भोक्तृरूप इत्यर्थः। एवकारात्कर्तृत्वव्यवच्छेदः ।अयं भावः, अपरिणामिस्वभावतया कर्तृत्वायोगेपि भोक्तृत्वं युक्तम् , अचेतनस्य देहादेर्भोगायोगात्,अन्यथा मृतदेहादेरपि भोगाद्यापत्तेरिति। केवलबोधात्मकः-जडत्वादिकल्पनारहितबोधस्वरूप इत्यर्थः। वस्तुतो न भोक्ताऽऽत्मा 'असंगो ह्ययमिति श्रुतिविरोधात् किन्तु प्रातिभासिककर्तृत्वभोक्तृत्ववानिति वेदान्तमतमाह-अविद्ययेति। निःसङ्गत्वेप्याविद्यकभोक्तृत्वमिव कर्तृत्वमपि युक्तमित्य

भावनापरत्वाङ्गीकारात् । प्राभाकरस्तु केवलोपनिषदां तन्मूलकेतिहासादीनां च स्वार्थे प्रामाण्यं नेति वक्ता सर्वास्तिकाधमोऽपि ज्ञानस्य स्वतः प्रामाण्याङ्गीकारादभावस्याधिकरणात्मत्वाङ्गीकाराच्चान्तवेदार्थाङ्गीकारात्ततोऽधिकः । भट्टस्तु जीवस्य बोधरूपाङ्गीकारात्प्रमाणषट्काङ्गीकाराच्च ततोप्यधिक इति विवेकः । अयं पाठोऽधिकः कपुस्तके परन्तु तथात्वे ग्रन्थसम्बन्धविच्छेदात् न्यायरत्नावल्युक्तस्य टिप्पणीभूतोऽयं लेखकदोषान्मूले पतित इत्यालोच्य तत उद्धृत्य टिप्पण्यामेव निवेशितोऽस्माभिः । खपुस्तके नास्त्येवैषः ।

( १ ) असंसर्गस्वप्रकाशेत्यादिः गपुस्तके ।

परमार्थतो निर्धर्मकः परमानन्दबोध (रूप) एवेत्यौपनिषदाः॥

न्यायरत्नावली।

शुद्धजीवप्रतिपादकश्रुतीनां तत्त्वमसीत्यादिश्रुतीनां च अभेदभावनापरत्वाभ्युपगमात्, 'इदं सर्वं यदयमात्मा, सर्वं खल्विदं ब्रह्म, ब्रह्मैवेदं सर्वमित्यादिश्रुतीनां ब्रह्मकर्तृकं विश्वमित्यर्थकत्वाभ्युपगमात्। प्राभाकरभट्टयोस्तु वेदान्तदर्शने विद्वेषाभावः—

इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयस्तु बोधः प्रयाति वेदान्तनिषेवणेन॥

इति तर्कचरणीयभट्टकारिकया वेदान्तदर्शनपुरस्कारात्। आत्मा निष्प्रपञ्चं ब्रह्मैव, तथापि कर्मप्रसङ्गेन तथा वाच्यम्। उक्तं हि श्रीकृष्णेन भगवता—

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।

इति प्राभाकरग्रन्थगतोक्तेः। तथापि भट्टैः जडबोधात्मक आत्मेति स्वग्रन्थवाक्येन अविद्योपहितचिद्रूप आत्मेति सूचनात्, प्राभाकरेण स्वप्रकाशजन्यबोधाश्रयो(१)ऽचिद्रूप आत्मेति स्वग्रन्थे कथनात्, प्रपञ्चज्ञानेऽन्यथाख्यातित्वमात्रस्याप्यकथनाच्च प्राभाकरो भट्टापेक्षया न्यूनः। भाट्टा अपि साङ्ख्यपातञ्जलापेक्षया न्यूनाः, साङ्ख्यादिवत्स्वग्रन्थे आत्मन असङ्गत्वाद्यनुक्तेः। साङ्ख्यास्तु पातञ्जलापेक्षया न्यूनाः, 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर' इति सूत्रेण हि पातञ्जल ईश्वरं स्वीकृतवान् न (२)साङ्ख्या इत्याशयेन वैशेषिकादिनिर्देशोत्तरं तार्किकादि निर्दिष्टवानाचार्यः। निर्धर्मकत्वे हेतुमाह—अविद्यया कर्तृत्वादि-

नारायणी।

भिप्रेत्याह—कर्तृत्वादीति। मिथ्याज्ञानवासनाप्रयुक्तं नैय्यायिकमतेऽप्यस्ती-

(१)—बोधाश्रयः चिद्रूप इति गपुस्तके पाठः प्रामादिकः।

(२) न तथा साङ्ख्या इत्याशयेन पातञ्जलं साङ्ख्यनिर्देशोत्तरं निर्दिष्टवानाचार्य इत्येव युक्तम्।

एवं सामान्यतोऽहम्प्रत्ययसिद्धे चिदात्मनि वादिवि
तिपत्तिभिः सन्दिग्धे अहम्प्रत्ययस्यालम्बनविशेषनि
यायाह भगवानाचार्यः—

न भूमिर्न तोयं न तेजो न वायु-
र्न खं नेन्द्रियं वा न तेषां समूहः।
अनेकान्तिकत्वात्सुषुप्त्येकसिद्ध-
स्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥ १ ॥

(१)अस्यार्थः अहम्-अहम्प्रत्ययालम्बनम्। एकः-अ

न्यायरत्नावली।

भागिति। अविद्यात्मककर्तृत्वादिमानित्यर्थः। सन्दिग्धे-'शरी
दिस्वभावो न वे'ति विशेषतः सन्दिग्धे। अहमित्यादि। अ
म्प्रत्ययस्य यदालम्बनविशेषो देहाद्यात्मकतया भासमानं स्व
तस्य भूम्यादिभिन्नतया निर्णयायेत्यर्थः। अहम्प्रत्ययालम्बनं-
हादितादात्म्येन भासमानं स्वरूपम्। अद्वितीय इति। 'एके
ख्यान्यकेवला' इति कोशादावेकशब्दस्य नानार्थकत्वोक्तावपि प्र
ते पदान्तरेणैवात्मनः प्रपञ्चापेक्षया मुख्यत्वान्यत्वयोर्लाभाद्
वलार्थत्वमेव। केवलत्वं च इतरसम्बन्धशून्यत्वम्। तत्रैकेन घ
जलमाहरेत्यादौ घटत्वादिसंसृष्टस्य करणत्वादौ तात्पर्यावधारणा

नारायणी।

त्यत आह—परमार्थत इति। प्रतीतिकालेपि परमार्थत्वेन धर्मा
ववानित्यर्थः। साङ्ख्याद्विशेषान्तरमाह—परमानन्दबोधरूप इति।
त्यानन्दबोधस्वरूप इत्यर्थः। एवं—दर्शितप्रकारेण, सामान्यतः—जी
त्वात्मत्वादिना, वादिविप्रतिपत्तिभिः—विरुद्धकोट्युपस्थापकनिरुक्त
दिशब्दैः, सन्दिग्धे-अहं कर्तृभोक्तृस्वरूपो न वेति विशेषतः सन्दिग्धे
अहंप्रत्ययस्येति। अहंधियोऽकर्तृभोक्तृस्वरूपविषयविशेषनिर्णयायेत्यर्थः
अहंप्रत्ययालम्बनम्-अहंप्रत्ययविषयः। अद्वितीयः-द्वित्वादिसङ्ख्यापूरक

(१) अस्यार्थ इति खगपुस्तकयोर्नास्ति

तीयः । अवशिष्टः—सर्वद्वैतबाधेऽप्यबाधितः । शिवः—परमानन्दबोधरूपः । तस्यैव मङ्गलरूपत्वात् । केवलो—निर्धर्मकः । तेनाद्वितीयः सर्वप्रमाणाबाध्यः परमानन्द-

न्यायरत्नावली ।

एकपदार्थसङ्कोचकल्पनया घटान्तररूपेतरसम्बन्ध(१)बोधः । प्रकृते तु शुद्धस्वरूप एव तात्पर्यावधारणेन सङ्कोचाभावात् आत्मभिन्नरूपद्वितीयमात्रशून्यत्वं बुध्यत इति भावः । अवशिष्टपदमुपयुक्तसंसृष्टमनुपयुक्तं बोधयति । (२)आत्मा ज्ञानेनोच्छेद्यतया नोपयुक्तः उच्छेद्यमपञ्चसंसृष्टश्चेति स एव तत्पदार्थ इत्याशयेनाह—अवशिष्ट इति । ननु शिवपदमिष्टार्थकम्, कथं परमानन्दार्थकमुक्तं तत्राह—तस्येति । मङ्गलेति । इष्टेत्यर्थः । ननु एकपदं द्वितीयाभावसंसृष्टपरं न वा ? आद्ये द्वितीयसामान्याभावसंसर्गव्याघातः, संसर्गस्यैव द्वितीयत्वात्, सत्यकामादिश्रुतीनामपि सत्यकामत्वादिसंसृष्टपरत्वापत्तेश्च । द्वितीये एकपदवैयर्थ्यम् सद्वितीयत्वभ्रमानिवर्तकत्वात् तत्राह—केवलो निर्धर्मक इति । धर्माभावोपलक्षित इत्यर्थः । तथा च पूर्वोक्तरीत्या उपलक्षणतया द्वै(३)ताभावसम्बन्धज्ञानस्यापि सद्वितीयत्वभ्रमानिवर्तकत्वसम्भवात् एकपदमसंसृष्टपरम् । अत एव 'एकमेवाद्वितीय'मिति श्रुतौ एकप-

नारायणी ।

यातत्कार्यरूपद्वितीयरहितः । सर्वद्वैतबाधेपि—आत्मतत्त्वधिया सर्वद्वैतस्य मूलोच्छेदेपि, स्वयं सत्यः बाधसाक्षितयापि तत्सत्त्वावश्यकत्वादिति भावः । परमानन्दबोधरूपः—नित्यानन्दबोधस्वरूपः(४) । शिवशब्दस्य परमानन्दार्थता कथं तत्राह—तस्यैवेति । परमात्मन एवेत्यर्थः । मङ्गलरूपत्वात्-कल्याणरूपत्वात् । 'प्रेयोन्यस्मात् सर्वस्मादि'त्यादिश्रुतिभिरिष्टतमत्वावगमेन कल्याणरूपत्वौचित्यादिति भावः । निर्धर्मकः—निर्गतं धर्मसामान्यं यस्मादिति धर्मसामान्याभाववानित्यर्थः ।

(१) सम्बन्धशून्यत्वबोधः इति घपुस्तके । (२) प्रकृते चात्मा इति घपुस्तके ।
(३)—उपलक्षणतयान्विताभाव० इत्यादिः गपुस्तके ।
(४) नित्यानन्दबोध इति कपुस्तके प्रमादभ्रष्टं प्रतिभाति ।

बोध एवाहम्प्रत्ययालम्बनमित्यौपनिषदपक्ष एव श्रेया-
नित्यर्थः। एतदुपपादनायेतरवादिमतानि निराकरिष्यन्
प्रथमं देहात्मवादं निराकरोति—न भूमिर्न तोयं न ते-
जो न वायुर्न खमिति । अत्राहमिति सर्वत्र(१) नञ्
सम्बध्यते। या भूमिः सोऽहं न भवामि योऽहं सा भू-
मिर्न भवतीति च परस्परतादात्म्याभावो द्रष्टव्यः। य-
द्यपि वादिना प्रत्येकं भूम्यादिरात्मत्वेन(२) नाभ्युपगं
संघातस्यैव तदभ्युपगमात्, तथापि तन्मते अवय

न्यायरत्नावली।

देन सजातीयस्य अद्वितीयपदेन विजातीयस्य एवकारेण धर्मस्य
ब्रह्मणि निषेधः, एवं च एकपदेन सजातीयविजातीययोः केव-
लपदेन धर्माणां निषेध इति न तयोः पौनरुक्त्यमिति भावः
औपनिषदपक्षः-श्रीमच्छङ्कराचार्यमतम् । श्रेयान् सर्वमतेभ्य उ-
त्कृष्टम्। आत्मनि देहादेः देहादौ चात्मनः तादात्म्याध्यासेन दे-
ह एवात्मेति भ्रमोदयात् तन्निवृत्त्यर्थं परस्परतादात्म्याभावः प्र-
ते विवक्षित इत्याह—या भूमिरित्यादि। संघातस्य-मिलितभू-
चतुष्टयस्य। तथापीत्यादि। तथापि तन्मते संघातो नोपपद्य
इत्यभिप्रेत्य प्रत्येकभूतनिराकरणेन भौतिकदेहात्मवादो निराकृ

नारायणी।

आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः।
प्रवृद्ध्यपचयौ नास्य एकस्य किल जन्तुषु॥

इत्यादिस्मृतेरिति भावः। उक्तिफलमाह-तेनेत्यादि। तेन-निरुक्त-
समर्पणेन, व्याख्यातप्रायं या भूमिरित्यादिना। उक्तस्य द्विविधोद्देश्यवि-
यभावस्य फलमाह-परस्परेति। प्रत्येकाद्देश्यविधेयभावं पूर्वपक्षसिद्धान्त-
भ्यां सफलयति-यद्यपीति। संघातस्यैव-देहाकारेण मिलितभूतचतु-
स्यैव, तदभ्युपगमात्-आत्मत्वाभ्युपगमात्। तथापीति। संघातो नोपपद्य-
इत्यत्रान्वयः। तत्र संघातोऽवयविभूतचतुष्टयमेलनं वा स्वरूपसम्बन्धे

(१) सर्वत्र प्रत्येकं नञा इति खघपुस्तकयोः पाठः।
(२) भूम्यादेरात्मत्वं नाभ्युपेयते इति खघपुस्तकयोः।

व्यनङ्गीकारात्पञ्चमतत्त्वाभ्युपगमप्रसङ्गेन च संयोगादिसम्बन्धानभ्युपगमात् संहन्तुरभावाच्च संघातो नोपपद्यत

न्यायरत्नावली।

इति योजना। संघातोऽवयवी वा? संयुक्तचतुर्विधपरमाणवो वा? क्षणिकचतुर्विधपरमाणुपुञ्जस्वरूपो वा?। तत्राद्यस्यानुपपत्तौ हेतुमाह—अवयव्यनङ्गीकारादिति। कपालद्वयमेव घटः, कपालिकाद्वयमेव कपालम्, एवं त्रुटिपर्यन्तं विचारेण त्रुटेरन्यत् किमपि न प्रामाणिकम्, प्रामाणिकत्वे वा अवयवानामवयविनश्च द्विगुणगुरुत्वाद्युपलब्धिः स्यादित्यादियुक्तिभ्यः अवयव्यस्वीकारादित्यर्थः। द्वितीयस्यानुपपत्तौ हेतुमाह—पञ्चमेत्यादि। चत्वार्येव भूतात्मकानि तत्त्वानि। न च संयुक्तासंयुक्तस्वरूपवैलक्षण्याय संयोगादिकमवश्यं वक्तव्यमिति कथं चत्वार्येव तत्त्वानीति वाच्यम्। चतुर्विधपरमाणूनां क्षणिकत्वात् संयुक्तत्वेन पराभ्युपगतस्वरूपस्यासंयुक्तत्वेन पराभ्युपगतस्वरूपाद्भेदेन वैलक्षण्योपपत्त्या संयोगादिस्वीकारस्य व्यर्थत्वात्। घट इति उपलभ्यमानास्त्रुटय एव (१) हि घटस्वरूपाः। तदेवं वादिनश्चार्वाकस्य मते पञ्चमतत्त्वाभ्युपगमप्रसङ्गेन संयोगादिकं न स्वीक्रियत इति भावः। नन्वेवम् अहमित्याकारकधीविषयत्रुटिसंघात एवात्मास्तु इत्याशङ्कोक्तत्रिविधसंघातानामनुपपत्तौ हेतुमाह—संहन्तुरभावादिति। शरी-

नारायणी।

ऽतयाऽवस्थितिर्वेति पक्षत्रयं न सम्भवतीत्यत्र क्रमेण हेतुमाह—अवयव्यनङ्गीकारादिति। द्विगुणगुरुत्वापत्तिभियाऽतिरिक्तावयव्यनङ्गीकारादित्यर्थः। द्वितीये बाधकमाह—पञ्चमेति। 'प्रमाणमेकं प्रत्यक्षं तत्त्वं भूतचतुष्टयम्(२)' इति वदतः चार्वाकस्य मते देहादिव्यवहाराय चतुर्विधपरमाणूनां (३)संयोगरूपमेलनाङ्गीकारे संयोगरूपपञ्चमतत्त्वस्वीकारापत्तेरित्यर्थः। संयोगादीत्यादिना समवायपरिग्रहः। पक्षत्रये बाधकमाह संहन्तुरभावाच्चेति। संघात-

(१) एव बहिर्घटस्वरूपा इति गपुस्तके।

(२) 'मोक्षश्च मरणान्नान्यः कामार्थौ हि पुरुषार्थौ' इति वदतः इति पाठः खपुस्तके।

(३) संयोगरूपपञ्चमतत्त्वस्वीकारापत्तेरित्यर्थ इति खपुस्तके।

इत्यभिप्रेत्य प्रत्येकभूतनिराकरणेन भौतिकदेहात्मवा
निराकृतः। यद्यपि भूतचतुष्टयतत्त्ववादिनो मते आव

न्यायरत्नावली।

रोत्पत्तेः पूर्वमात्मनोऽभावात् (१)न चेतनस्य व्यापाराच्छरीरो
त्तिः। न च प्रलयास्वीकारेणानादिमातापितृपरम्पराव्यापारेण
रीररूपसंघातोत्पत्तिरिति वाच्यम्। शरीरवैचित्र्ये हि नियामक
दृष्टं वा वाच्यम्?। नाद्यः। प्रत्यक्षमात्रप्रमाणस्वीकारात् परलोकसं
कारप्रसङ्गाच्च। नान्त्यः। एकजातीयेन मातापितृव्यापारेण उ
न्नयोः यमलयोः वैलक्षण्यस्य अदृष्टं विनानुपपत्तेः, कारणान्तरस्या
प्रत्यक्षप्रमाणेनासिद्धत्वाच्च। तथा च क्षणिकत्रुटिसमुदायस्य दृष्टाद
द्वारा संघातयितृरूपो यस्संहन्ता तदभावात् संघातस्योत्पत्त्यसम्भ
इति भावः। निराकरणेन—आत्मत्वनिराकरणेन। भौतिकेति
भूतसमुदायरूपेत्यर्थः। निराकृत इति। समुदायस्य प्रत्येका
तिरेकादिति शेषः। यद्यपीत्यादि। चार्वाकादिनास्तिकानां
भूतचतुष्टयमेव तत्त्वं तदपि क्षणिकम्, 'यत् सत् तत् क्षणिकमि
नियमात्। कथमुक्तनियम इति चेदुच्यते। यत्र यस्य सामर्थ्यं त
तत्साधने विलम्बो नास्ति, विलम्बोऽस्ति चेत् सामर्थ्यमेव न स्यात्
तथा च यावत्सु कार्येषु सामर्थ्यं यस्य, तावतां द्वितीयक्षणवृत्ति
प्रथमक्षणस्थितेन तेन सिद्धिरिति द्वितीयक्षणस्थितेन तेन न क
चित् तृतीयादिक्षणवृत्तिनस्सिद्धिः, अतो द्वितीयादिक्षणे सत्त्वं व
नो नास्ति, कार्यकारित्वमेव हि वस्तुनः सत्त्वम्, तस्मात् (२)स

नारायणी।

कर्तुरभावाच्चेत्यर्थः। चेतनादृष्टादिकं विना पुञ्जकादाचित्कवैचित्र्या
पपत्तेरिति भावः। प्रत्येकेति। प्रत्येकभूतानामात्मत्वनिराकरणेन। भौ
केति—भौतिकदेहस्यात्मत्ववादः। न खमित्युक्तमुपपादयितुमाह—यद्यपी
आवरणाभावत्वेनेति-पक्ष्यादिगतिप्रतिबन्धकाभावत्वेनाभिमतस्येत्यर्थः

(१)—अभावात् कस्य चेतनस्य० इति पाठो घपुस्तके।
(२) सत्यमिति गपुस्तके नास्ति।

णाभावत्वेनाभिमतस्य स्थिरस्यासत आकाशस्य देहानुपादानत्वम्, तथापि सिद्धान्ते तस्य भावत्वम्(१)। देहोपादानत्वाद्यङ्गीकारात्। तत्राप्यात्मत्वप्रसक्त्या तन्निराकृतम्। अथवा न वायुरित्यन्तमेव देहात्मवादस्य निराकरणम्, न खमिति तु शून्यवादस्य, खशब्दस्य शून्य-

न्यायरत्नावली।

सर्वं क्षणिकम्। यत्तु अलीकं तस्य कार्यकारित्वाभावेन सत्त्वाभावात् नोक्तरीत्या क्षणिकत्वमिति स्थिरत्वमिति प्रमाणागोचरत्वेऽपि विकल्पधीविषयत्वेन व्यवहारः तस्य, तथा च आवरणाभावरूपाकाशस्याभावत्वेनालीकत्वादसत्त्वस्थिरत्वावश्यकत्वात् देहं प्रत्युपादानत्वाभाव इति भावः। सिद्धान्ते—औपनिषदमते। आत्मत्वप्रसक्त्येति। अवयविखण्डनयुक्तिभिराकाशादिस्वरूप एव देहो वाच्यः, तथा च आकाशादिप्रत्येकस्यापि आत्मत्वप्रसक्तिरिति भावः। तन्निराकृतम्—आकाशस्यात्मत्वं निराकृतम्। प्रसिद्धमतनिराकरणप्रस्तावे आधुनिकपक्षानिराकरणस्यासङ्गतत्वादाह—अथवेति। शून्यवादस्य—क्षणिकज्ञानरूपात्मा मिथ्येति वादस्य। खशब्दस्य शून्यवाचकत्वात्—शून्यपदसमानार्थकत्वात्। तथा च खं नात्मेत्यस्य मिथ्याभूतविज्ञानं नात्मेत्यर्थः, खपदस्य सत्यत्वशून्या-

नारायणी।

फलितमाह-स्थिरस्येत्यादिना। स्थिरस्य-बहुकालस्थायिनः। अत एव असतः-विलम्बसहिष्णुत्वेनार्थक्रियाकारिताशून्यस्य, आकाशस्य—आकाशपदवाच्यस्य, सिद्धान्ते—वेदान्तसिद्धान्ते, तस्य—आकाशस्य। भावत्वेति। शब्दादिगुणाश्रयत्वेन भावत्वस्यावकाशप्रदत्वेनोपादानत्वस्य निमित्तत्वस्य चाङ्गीकारादित्यर्थः। तत्रापि-आकाशेपि, आत्मत्वप्रसक्त्या-भूम्यादेरिवात्मत्वप्रसक्त्या, तन्निराकृतम्—आत्मत्वं निराकृतम्। स्वसिद्धान्तानुसारेणात्मत्वमापाद्य तन्मतनिराकरणमयुक्तमित्यभिप्रेत्यार्थान्तरमाह—अथवेति। शून्यवादस्य-क्षणिकज्ञानस्वरूप आत्मा मिथ्येति वादस्य। शून्यवाचकत्वात्—खपदस्य पदार्थरहितछिद्रबोधकत्वेन प्रकृते सत्यत्वादिधर्मशून्यमिथ्याज्ञान-

(१)—भावत्वदेहोपादानत्वाद्यङ्गीकारादिति खघपुस्तकयोः।

वाचकत्वात्। नेन्द्रियमिति प्रत्येकमिन्द्रियाणामात्म
निरासः। न तेषां समूह इति मिलितानां भूता
देहावयव्याकारेण परिणतानामिन्द्रियाणां च मिलिता
निरासः। पूर्वं संघातमनभ्युपगम्य प्रत्येकं भूतानि
राकृतानि, अधुना तु संघातमभ्युपगम्यापि निराकृ
नीति भेदः। भूतनिराकरणेन भौतिकयोः प्राणमनस

न्यायरत्नावली।

त्मकमिथ्याविज्ञानबोधकत्वात्। प्रत्येकमिति। इन्द्रियपदस्ये
यत्त्वरूपेण सर्वेन्द्रियबोधकत्वात् सर्वेन्द्रियेषु प्रत्येकमात्मत्वनिरा
रणमिति भावः। मिलितानां भूतानां—संहतानां पार्थिवादिपरमा
नामात्मत्वेन चार्वाकस्वीकृतानाम्। परिणतानामिति। यद्य
चार्वाकेणावयवी न स्वीक्रियते तथाप्यन्यैस्तत्स्वीकारात्तत्रापि प्र
त्कमात्मत्वं निरस्तम्, अवयवावयविनोस्तादात्म्यमते अवयवि
अवयवसमूहात्मकत्वात् समूहपदेन निर्देश इति भावः। अनभ्यु
गम्य—उपपद्यते इत्यस्वीकृत्य। उपगम्य—उपपद्यत इति स्वीकृत्य
भूतनिराकरणेनेति। न तेषां समूह इति वाक्येनेत्यर्थः
प्राणमनसोरिति। अपिशब्दश्शेषः। मनोनिराकरणे
त्यादि। मनोनिराकरणेन क्षणिकविज्ञानस्य कर्तृत्वभोक्तृत्व
दिविशिष्टस्य च निरास इत्यन्वयः। ननु मनोनिरासेन कु

नारायणी।

बोधकत्वात्। तथाच खं नात्मेत्यस्य सत्यत्वादिधर्मशून्यं मिथ्याज्ञानं
त्मेत्यर्थः।प्रत्येकमिति। नेन्द्रियमित्यत्र इन्द्रियपदस्येन्द्रियत्वेनेन्द्रियसामान्य
धकत्वात् प्रत्येकं सर्वेन्द्रियाणामात्मत्वनिरास इति भावः। मिलितानां
युक्तानाम्। देहेति। अतिरिक्तपुञ्जात्मकदेहावयविरूपेण विकृतानामित्यर्थः
संघातं-संयोगेन तेषां पुञ्जम्, अनभ्युपगम्य—अस्वीकृत्य। अभ्युप
म्यापि-स्वीकृत्यापि। भूतनिराकरणेन—प्रत्येकस्य पुञ्जरूपविकारिणो
पृथिव्यादिचतुर्विधपरमाणुरूपस्य भूतस्यात्मत्वनिराकरणेन, भौतिकयो
'अन्नमयं हि सौम्य मनः आपोमयः प्राण' इति श्रुत्या भूतकार्यत्वेनाङ्गी
तयोः, प्राणमनसोः—क्रियाशक्तिज्ञानशक्तिप्रधानयोः अपीति शेषः। मनो

निरासः। मनोनिराकरणेन मनोवृत्तेः क्षणिकविज्ञानस्य देहातिरिक्तस्य कर्तृत्वभोक्तृत्वादिविशिष्टस्य च निरासः। सिद्धान्ते ज्ञानेच्छासुखादीनामन्तःकरणाश्रयत्वाभ्युपगमात्। कामसङ्कल्पादीन्प्रकृत्य 'एतत्सर्वं मन एव'-

न्यायरत्नावली।

स्तयोर्निरासः, 'विज्ञानमेव सर्व'मिति योगाचारमते मनस एवास्वीकारात्तार्किकादिमते कर्तृत्वादिविशिष्टस्य मनोभिन्नत्वादित्याशङ्क्य तयोर्हेतुगर्भं विशेषणमाह—मनोवृत्तेरिति। मनःपरिणामत्वेनास्मत्सम्मतस्येत्यर्थः। देहातिरिक्तस्य-देहमनआदिभिन्नत्वेन तार्किकादिस्वीकृतस्यापि। तथा च तेषां समूह इत्यस्य भौतिकत्वेनास्मत्सम्मत इत्यर्थकत्वात् योगाचारादिस्वीकृतक्षणिकविज्ञानस्य तार्किकादिस्वीकृतकर्तृत्वादिविशिष्टस्य च मन्मते मनःपरिणामत्वात् भौतिकत्वेनास्मत्सम्मतत्वात् तयोरात्मत्वनिरास इति भावः। कर्तृत्वादिविशिष्टस्य भौतिकत्वमस्मत्सम्मतं श्रुतिसिद्धत्वादित्याह—ज्ञानेत्यादि। मन एवेति। धर्मधर्मिणोस्तादात्म्य-

नारायणी।

राकरणेन-मनस आत्मत्वनिराकरणेन। मनोवृत्तेः-वस्तुगत्या मनःपरिणामरूपस्य क्षणिकविज्ञानस्य द्वितीयक्षणवृत्तिध्वंसप्रतियोगिनः देहातिरिक्तस्य स्थूलदेहाद्भिन्नस्य कर्तृत्वभोक्तृत्वविशिष्टस्य ज्ञानेच्छाप्रयत्नादिमत्त्वरूपकर्तृत्वसुखदुःखाद्याश्रयत्वरूपभोक्तृत्वाभ्यां विशिष्टस्य च तार्किकमतसिद्धस्यात्मनः निरासः आत्मत्वनिरासः तादृशस्य वस्तुगत्या भौतिकलिङ्गशरीरात्मकत्वादिति भावः।

ननु क्षणिकविज्ञानवादिना मनस एवानङ्गीकारात्तार्किकेण चाभौतिकस्यैव मनोभिन्नस्यात्मत्वस्वीकारात्कथं मनोनिराकरणेन क्षणिकविज्ञानस्य तार्किकाभिमतस्य चात्मत्वनिरास इत्याशङ्क्य मनःपरिणामरूपवृत्तिभिन्नस्य ज्ञानत्वमेवासिद्धम्, औपनिषदसिद्धान्तविरोधात् अतः क्षणिकज्ञानादेर्निरास इत्यभिप्रेत्याह—सिद्धान्ते चेति। औपनिषदसिद्धान्ते इत्यर्थः। अन्तःकरणाश्रयत्वाभ्युपगमात्-अन्तःकरणाश्रितत्वाभ्युपगमात्। अभ्युपगमे श्रुतिमाह-कामेति। 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृति-

ति श्रुतेः। तेन देहमारभ्य केवलभोक्तृपर्यन्तानां तत्त्वाद्यभ्युपगतानामनात्मत्वं प्रतिज्ञातं भवति। तत्र हेतुमाह—अनेकान्तिकत्वादिति। व्यभिचारित्वात् विना-

न्यायरत्नावली।

मेव सम्बन्ध इति कामादिमनोधर्माणाम्मनस्तादात्म्योक्तिः। तेनेति। भूतनिराकरणेनेत्याद्युक्तव्याख्यानेनेत्यर्थः। केवलभोक्तृपर्यन्तानामिति। भोक्तैव आत्मा न तु कर्ता इति साङ्ख्यमते भोक्तृत्वमात्मनः नानुभवस्वरूपत्वमात्रम्, मोक्षेपि भोक्तृत्वापत्तेः किन्तु सुखदुःखसंसृष्टानुभवरूपत्वम्, तथा च भौतिकमनःपरिणाम-सुखादिसंसृष्टरूपेण (१)भौतिकस्यात्मनोप्यनात्मत्वं प्रतिज्ञातं 'न तेषां समूह' इत्यनेन सम्भवतीति भावः। नत्रेति। देहादिष्वनात्मत्वप्रतिज्ञायामित्यर्थः। व्यभिचारित्वादिति। सर्वेषु देशकालवस्तुषु सम्बध्य वर्तत एवेति नियमरहितत्वादित्यर्थः। कचिद्देशे काले वस्तुनि वर्तमानो यः अभावः,(२)तत्प्रतियोगित्वरूपे पर्यवसितहेतौ वर्तमानपर्यन्तवैयर्थ्यादाह—विनाशित्वादिति। विविधो देशकालवस्तुगतः नाशः अदर्शनं यतः स विनाशः, संसर्गाभावतादात्म्याभावयोरन्यतरः तद्विशिष्टत्वात् तत्प्रतियोगित्वात्

नारायणी।

रधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे' ति(३)संग्राहकश्रुतेरित्यर्थः। तेनेति भूतनिराकरणेनेत्याद्युक्तव्याख्यानेनेत्यर्थः। देहमारभ्येति। न' कर्तेत्यन्ताव वास्तवभोक्तृत्वविशिष्टस्य लिङ्गेऽन्तर्भावात्परिणामरूपयोः सुखदुःखयोस्तत्रैवान्तर्भावादिति भावः। तत्र-देहादेरनात्मत्वप्रतिज्ञायाम्, व्यभिचरित त्वात्-सर्वत्र सदाऽविद्यमानत्वात्। सर्वत्र सदेत्यंशस्यानतिप्रयोजनकत्वा दाह-विनाशित्वादिति। विविधो देशकालवस्तुगतो नाशोऽदर्शनं यतः स वि

(१) भौतिकस्याप्यात्मनोऽनात्मत्वमिति गपुस्तके।

(२) तत्प्रतियोगित्वरूपपर्यवसितहेतौ वर्तमानपर्यन्तं वैयर्थ्यादाहेति पाठो गपुस्तके।

(३)—इति मनोधर्मविधायकश्रुतेरित्यर्थः। न च मन एवेत्यस्य मनःकरणकमित्यर्थ इति। इतिपाठः खपुस्तके।

शित्वादिति यावत् । आत्मनो देशकालापरिच्छिन्नत्वात्तत्परिच्छिन्नानां घटादिवदनात्मत्वात् (१) ध्वंसप्रागभाव-

न्यायरत्नावली ।

अभावप्रतियोगित्वादिति यावत् । अभावप्रतियोगित्वादिति हेतुकरणे अभावपदवैयर्थ्यात् अभावस्यैव प्रतियोगितासम्बन्धेन हेतुतेति बोध्यम् । यथाश्रुतं तु विनाशित्वादित्यसङ्गतम्, आत्मन इत्याद्युत्तरग्रन्थेनाभावप्रतियोगित्वस्यात्मभिन्नत्वं (२) प्रत्यव्यभिचारित्वप्रतिपादनवैयर्थ्यात् । अथवा अभावप्रतियोगितात्वरूपसामान्यधर्मविशिष्टस्याव्यभिचारत्वप्रतिपादने ध्वंसप्रतियोगितात्वरूपधर्मविशिष्टस्य सुतरां तद् भवतीत्याशयेनात्मन इत्यादेरुक्तत्वात् यथाश्रुतमेव विनाशित्वादिति रूपम् । ननु विनाशित्वस्यात्मान्यत्वं प्रति व्याप्यताग्रहो न सम्भवति तर्काभावादित्याशङ्क्यानात्मत्वस्य विनाशहेतुत्वकथनद्वारा तादृशव्याप्यताग्राहकं तर्कं सूचयति—आत्मन इति । तथा च विनाशित्वात् अनात्मेत्यनेनोक्ते अनात्मनिष्ठे विनाशित्वहेतुकत्वे हेतुः—देशकालपरिच्छिन्नानां घटादिवदनात्मत्वादिति, तत्र हेतुः—आत्मनो देशकालेत्यादि । आत्मन इति आत्मत्वावच्छेदेनेति भावः । देशकालापरिच्छिन्नत्वात्- देशकालवृत्त्यभावप्रतियोगिभिन्नत्वग्रहात्, तत्परिच्छिन्नानां—देशकालवृत्त्यभावप्रतियोगिनां तादृशावच्छेदेनेति शेषः । अनात्मत्वात्—अनात्मत्वग्रहात् । तथा च आ-

नारायणी ।

नाशः संसर्गान्योन्याभावयोरन्यतरस्तत्प्रतियोगित्वादित्यर्थः । विनाशित्वहेतोरनात्मत्वसाधकतां तर्कप्रदर्शनेन दृढयति—आत्मन इति । अनात्मनामधिष्ठानस्येत्यर्थः । देशकालापरिच्छिन्नत्वात्—देशकालवृत्त्यत्यन्ताभावाप्रतियोगित्वात् । ज्ञानज्ञाप्यत्वं पञ्चम्यर्थोऽनात्मत्वेऽन्वेति । तत्परिच्छिन्नानां देशकालवृत्त्यत्यन्ताभावप्रतियोगिनाम्, घटादिवदनात्मत्वात्-आत्मभिन्नत्वात्, अत्रापि ज्ञानज्ञाप्यत्वं पञ्चम्यर्थः, अयं च विनाशित्वहेतुकानात्मत्वे हेतुः,

(१) अत्र तद्ध्वंसेत्यादिः पाठः नारायणीसम्मतः ।

(२) आत्मभिन्नं प्रतीति गपुस्तके ।

योश्च ग्रहीतुमशक्यत्वात् अनात्मनां जडत्वात् स्वभिन्न

न्यायरत्नावली।

त्मत्वव्यापकमपरिच्छिन्नत्वमिति ग्रहात् परिच्छिन्नत्वरूपविनाशित्व मनात्मत्वव्याप्यतया गृह्यते, परिच्छिन्नत्वं यद्यनात्मत्वव्याप्यं न स्यात् तदाऽऽत्मत्वव्यापकस्यापरिच्छिन्नत्वस्याभावो न स्यात्, भवति तु तादृशाभावरूपम्, तस्मात् अनात्मत्वव्याप्यमिति तर्क पर्यवसानसम्भवादिति भावः। नन्वपरिच्छिन्नत्वस्याभावाप्रतियोगित्वरूपस्यात्मत्वव्यापकतानिश्चये सति उक्ततर्कपर्यवसानं वाच्यम्, स एव न सम्भवति तर्काभावादित्याशङ्क्य तन्निश्चायकं तर्कं ज्ञापयितुमात्मनि ध्वंसप्रागभावाप्रतियोगित्वं तद्धेतूपन्यासपूर्वकमाह—न तस्य ध्वंसप्रागभावावित्यन्तेन ग्रन्थेन ध्वंसप्रागभावयोरित्यादिना। चकारेणात्मन इत्यनुषज्यते। आत्मनो ध्वंसप्रागभावयोः ग्रहीतुमशक्यत्वात् न तस्य ध्वंसप्रागभावावित्यन्वयः। अशक्यत्वे हेतुमाह—अनात्मनां जडत्वादिति। आत्मभिन्नानां ज्ञानरूपत्वाभावात् आत्मभिन्नेनात्मध्वंसप्रागभावौ विषयीकर्तुं न शक्येते इत्यर्थः। नन्वेकस्या आत्मव्यक्तेः ध्वंसप्रागभावौ अन्यदीयात्मव्यक्त्या गृह्येयाताम्, तत्राह—स्वभिन्नस्यात्मत्वाभावादिति। यदात्मव्यक्तेः ध्वंसप्रागभावौ ग्राह्यौ, तद्भिन्नस्यात्मत्वाभावादित्यर्थः। नन्वात्मनो नानात्वमवश्यं वाच्यम्

नारायणी।

तथाच परिच्छिन्नत्वाभावस्यात्मत्वव्यापकत्वात् तादृशाभावप्रतियोगित्व परिच्छिन्नत्वस्यात्मभिन्नत्वं प्रति व्याप्यताग्राहको यदि परिच्छिन्नत्वमनात्मत्वव्याप्यं न स्यात्तदा तादृशाभावप्रतियोगि न स्यादिति तर्कलाभ इति भावः। आत्मनोऽपरिच्छिन्नत्वमेव कथं लभ्यं तत्राह तद्ध्वंसेति। आत्मध्वंसप्रागभावयोः। अशक्यत्वे हेतुमाह-अनात्मनामिति। अविद्यातत्कार्याणामित्यर्थः जडत्वात्-ज्ञानव्यक्तिभिन्नत्वात्। ननु मास्त्वनात्मनो ग्राहकत्वम्, आत्मान्तरस्य तु स्यादेव तत्राह-स्वभिन्नस्येति। यदात्मव्यक्तेर्ध्वंसप्रागभावौ ग्राह्यौ तद्भिन्नस्यात्मत्वाभावात् आत्मन एकत्वादिति भावः। ननु तर्हि प्रत्या

स्थ चात्मत्वाभावात् आत्मन एकत्वेऽपि सुखदुःखाद्या-श्रयाणामन्तःकरणानां भेदाभ्युपगमाद्व्यवस्थोपपत्तेः। स्व-

न्यायरत्नावली।

अन्यथा यदा चैत्रस्सुखी तदा मैत्रोऽपि अवश्यं सुखी स्यात्। न च यदा चैत्रशरीरे चन्दनादियोगः, तदा मैत्रशरीरे तस्यानियमात् सुखानियम इति वाच्यम्। व्यञ्जकचन्दनादियोगं प्रति तत्तेकात्म-निष्ठादृष्टस्यैव नियामकत्वात् सर्वशरीरेषु युगपच्चन्दनादियोगोत्प-त्त्यापत्तेः। न च शरीरविशेषे चन्दनादियोगं प्रति अदृष्टविशेषस्य हेतुत्वान्नोक्तापत्तिरिति वाच्यम्। तदापि एकस्य तत्त्वदर्शने सति कुत्रापि संसारो नोपलभ्येतेति आत्मनानात्वावश्यकत्वात् तत्राह-आत्मन एकत्वेऽपीति। व्यवस्थोपपत्तेरिति। यस्मिन् मनसि चन्दनादियोगहेत्वदृष्टमस्ति तत्रैवोक्तयोगोत्पत्तिः, मनस एव जीवविभाजकोपाधित्वं यस्य मनसो ज्ञानेनोच्छेदः तदुपल-क्षितजीवस्यैव मुक्तिः, अविद्याया जीवविभाजकोपाधित्वेपि यत्र मनसि तत्त्वदर्शनं तदुपादानभूताया एव तेनोच्छेद इति व्यवस्थो-पपत्तेः। न च मनसि प्रमाणाभाव इति वाच्यम्, 'मम मन इदा-नीं प्रसन्नम्, इदानीं विक्षिप्त'मिति साक्ष्यनुभवात्, 'अन्यत्र मना अभूवं नादर्शम्' 'एतत्सर्वं मन एवे'त्यादिश्रुतेश्च तत्र मानत्वादिति भावः। नन्वात्मनैव स्वध्वंसप्रागभावौ गृह्येयाताम् तत्राह—स्वे-नेति। ग्रहणे—विषयीकरणे। ननु भिन्नकालीनयोरपि विषयवि-षयिभावसम्भवात् आत्मनः स्वध्वंसादिविषयकत्वं न विरुद्धं

नारायणी।

त्मनि नियतसुखदुःखादिव्यवस्था तत्राह—आत्मन एकत्वेपि। वस्तुत एकत्वे-पीत्यर्थः। व्यवस्थोपपत्तेः—चैत्रशरीरे स्रक्चन्दनादिसंयोगे चैत्र एव सु-खी न मैत्र इत्यादिव्यवस्थाया उपपत्तेरित्यर्थः। यः आत्मा स न सुखदुः-खाद्याश्रयः भासकरूपत्वात्, यस्तु सुखाद्याश्रयः स तु भिन्न एव परिणामित्वादिति न काचिदनुपपत्तिरिति भावः। मास्तु स्वभिन्नो ग्राहकः स्वयं तु स्यात्, तत्राह—स्वेनेति। स्वेनैव—तद्व्यक्त्यैव

नैव स्वाभावग्रहणं विरोधात् ग्राह्यकाले ग्राहकासत्त्वात् (१)ग्राहकसत्त्वे ग्राह्याभावात् कृतहान्यकृताभ्यागमप्रस

न्यायरत्नावली।

तत्राह—ग्राह्येति। ग्राह्ययोः-विषययोः ध्वंसप्रागभावयोः काले ग्राहकस्य-विषयिणः आत्मनोऽभावात् ग्राहकस्य विषयिणः आत्मनः सत्त्वे ग्राह्ययोस्तयोरसत्त्वादित्यर्थः। आत्मनो विषयग्राहकत्वं नाम तादात्म्येन (२)विषयसम्बद्धत्वम्। तथा च भिन्नकालीनविषये तादात्म्यासम्भवेनात्मनो ग्राहकत्वासम्भव इति भावः। आत्मनो ध्वंसप्रागभावाप्रतियोगित्वे गृहीतुमशक्यत्वादिति हेतुं सोपपत्तिकमुक्त्वा हेत्वन्तरमप्याह—कृतेत्यादि। आत्मनो नाशस्वीकारे कृतस्य यागादिजन्यादृष्टस्य फलाजनकत्वरूपा हानिः स्यात्, उपादानीभूतस्यात्मनो नाशे तदुपादेयस्यादृष्टस्य नाशावश्यकत्वात्, तथा च कर्तुः फलप्राप्त्यभावेन प्रवृत्त्यनुपपत्तिः। आत्मनः प्रागभावस्वीकारे उत्पद्यमानस्यात्मनः पूर्वं सञ्चितादृष्टाभावेन तदकृतेनादृष्टेन भोगाभ्यागमो वाच्यः, स न सम्भवति, पित्रादिकृतेनादृष्टेन पुत्रादेर्भोगजनने मानाभावात्, (३)कल्पनापेक्षया लाघवात् आत्मनोऽनादित्वकल्पनाया एवोचितत्वादिति

नारायणी।

स्वाभावग्रहणे--स्वस्यात्मनोऽभावग्रहणे विषयीकरणे, विरोधात्-भिन्नकालीनत्वेन विषयविषयिभावासंभवरूपविरोधात्। एतदेव दर्शयति—ग्राह्येति। ग्राह्यकाले—ध्वंसप्रागभावकाले, ग्राहकाभावात्--ग्राहकस्यात्मनोऽभावात्। ग्राहकसत्त्वे--ग्राहकस्यात्मनः सत्त्वे ग्राह्याभावात्--ध्वंसप्रागभावाभावात्। तथाच ग्राह्यग्राहकयोरसमानकालीनत्वान्न विषयविषयीभावः सम्भवतीति भावः। नन्वतीतानागतघटादिनेव विभिन्नकालीनस्वाभावेनापि सह विषयविषयिभाव आत्मनोऽस्तु तत्राह—कृतहानेति। कृतस्य-यागादिजन्यापूर्वस्य, हानिः-नाश-

(१) ग्राहकत्वे इति घपुस्तके। (२) विषयसम्बन्धित्वमिति घपुस्तके।
(३) तत्कल्पनापेक्षया इति घपुस्तके।

ङ्गाच्च न तस्य ध्वंसप्रागभावौ। सद्रूपस्यात्मनः सर्वत्रानुगमाच्च नात्यन्ताभावसम्भवः। द्वैतस्य मि-

न्यायरत्नावली।

भावः। नन्वेतावतापि नात्यन्ताभावाप्रतियोगित्वसाधकतर्कलाभः तत्राह—सद्रूपस्येति। सर्वत्रानुगमादिति। घटस्सन् पटस्सन्नित्यादिप्रत्ययेन दृश्यमात्रे सद्रूपसम्बन्धाविषयीकरणादित्यर्थः। ननु सद्रूपस्य तादात्म्यमेव दृश्ये भाति, तस्य च न सद्रूपात्यन्ताभावविरोधित्वम्, अतः कथमुक्तप्रत्ययेनात्यन्ताभावानिरास इति चेदुच्यते, यथा 'इदं रजत'मित्यादिभ्रमस्थले रजतादाविदन्त्वादिसंसर्गोऽपि भासते न त्विदमादितादात्म्यमात्रम्, अधिष्ठानस्य हि तादात्म्यमिव तद्वृत्तिधर्मसंसर्गोऽप्यारोपेऽध्यस्यते, तथा च सद्रूपस्याधिष्ठानस्य तादात्म्यमिव तद्वृत्तिधर्मसंसर्गोऽपि घटादावुक्तप्रत्ययेन भ्रमरूपेण विषयीक्रियते। तद्वृत्तिधर्मश्च सद्रूपात्मकसत्यनित्यादिरूपेव, स्वस्यैव स्वस्मिन् कल्पितधर्मत्वस्वीकारात्। तथा च सद्रूपसत्त्वाद्याधारत्वस्य सद्रूपेऽपि सत्त्वादुक्तप्रत्ययविषयतया दृश्यमात्रेऽपि सत्त्वाच्च सद्रूपस्य सर्वधर्मत्वेन न कुत्राप्यत्यन्ताभाव इति भावः। नन्वेतावतापि नान्योन्याभावाप्रतियोगित्वसाधकतर्कलाभः तत्राह—द्वैतस्येत्यादि। द्वैतस्य तत्तादात्म्याभावानुपप-

नारायणी।

आत्मनो नाशे तद्गुणस्य धर्मादेर्नाशावश्यंभावात्, तथा अकृतस्य असञ्चितस्यापूर्वस्य अभ्यागमः कालान्तरे भोगाय स्वीकारस्तयोः प्रसङ्गादित्यर्थः, इत्थं च विहितगोचरा प्रवृत्तिर्बाध्येतेति भावः। परलोकवार्तामङ्गीकार्येदम्। अत्यन्ताभावाप्रतियोगित्वं साधयति—सद्रूपस्येति। तत्स्वरूपस्य नित्यस्येति यावत्। आत्मनः—अनात्मनामधिष्ठानभूतस्य सर्वत्र-दृश्यमात्रे, अनुगमात्—सन् घटः सन्पटः इत्यादिधिया सत्त्वसम्बन्धविषयीकरणात्। नात्यन्ताभावसम्भवः—न सद्व्यक्ति(१)स्वरूपात्यन्ताभावः, सत्त्ववति न सत्त्वात्मकसदत्यन्ताभावः कालत्रयेऽपि वक्तुं शक्य इति भावः। अन्योन्याभावाऽप्रतियोगित्वं साधयति—द्वैतस्येति। अविद्यातत्का-

(१) न सद्व्यक्तिस्वरूपसत्त्वात्यन्ताभावसम्भव इति खपुस्तके।

थ्यात्वे(१)नाधिष्ठानसत्तादात्म्यापन्नतयैव सिद्धत्वा

न्यायरत्नावली।

त्तिरिति योजना। तादात्म्येनाभावस्तादात्म्याभावः भेद इति या वत्। (२)*ननु तादात्म्यस्य मिथ्यात्वेन तद्वत्यपि दृश्ये तदभाव सिद्धान्तेऽपि स्वीक्रियत एवेति कथं तदनुपपत्तिरिति चेन्न। ता दात्म्याभावपदस्य भेदार्थकत्वात्*। ननु तादात्म्यबलादेव दृग्दृश्ययोर्भेदोऽपि वाच्य एव अत्यन्ताभिन्नयोस्सिद्धान्ते तादात्म्यास्वी कारात् तत्राह—सत्तादात्म्यापन्नतयैव सिद्धत्वादिति। घटस्सन्नित्यादिव्यावहारिकप्रमया व्यावहारिकसत्तादात्म्यविशि तयैव द्वैतस्य प्रमितत्वादित्यर्थः। एवकारेण व्यावहारिकप्रमया दृग्दृश्ययोर्व्यावहारिकभेदग्रहणं नास्तीत्युक्तम्, तथा च व्यावहा रिकतादात्म्यान्यथानुपपत्त्या कल्प्योऽपि भेदः प्रातीतिक एव कार्यकारणभावादिकाल एव तदन्यथानुपपत्त्या भेदप्रत्ययात्। न च प्रातीतिकेन भेदेनोपपाद्यं कार्यकारणभावादिकमपि प्रातीति कं स्यात्, कल्पितधूमान्यथानुपपत्त्या कल्प्यमानवह्निज्ञान(३)प्राती तिकत्वदर्शनादिति वाच्यम्। पर्वते धूमादर्शनेऽपि धूलीपटलादि कल्पितधूमान्यथानुपपत्त्या कल्पितवह्नेः व्यावहारिकत्वदर्शनेन तथ नियमाभावात्। भेदोपपाद्यतादात्म्यादेः (४)प्रातीतिकत्वादर्शने समसत्त्वयोः तयोर्विरोधेन व्यावहारिकत्वावश्यकत्वात्, कपालघ टाद्यो(५)र्व्यावहारिकस्य प्रातीतिकत्वे क्षतिविरहाच्च। अत एव वारम्भणाधिकरणे भाष्यम्–'न हि कार्यकारणभावादिकं वेदा

(१)–मिथ्यात्वेन शुक्तिरजतादिवत् अध्यस्तस्याधिष्ठानभूततादात्म्यापन्नतयैव सिद्धत्वा त् तत्तादात्म्याभावानुपपत्तिः इति पाठः खघपुस्तकयोः।

(२) * * एतच्चिन्हद्वयमध्यवर्ती पाठो घपुस्तके नास्ति।

(३) ज्ञानशब्दो नास्ति घपुस्तके।

(४)—प्रातीतिकत्वे सति समसत्त्वयोः इति पाठो घपुस्तके।

(५) कपालघटयोः कार्यकारणत्वस्य प्रातीतिकत्वे इति घपुस्तके।

न्यायरत्नावली ।

न्तिभिः स्वीक्रियत' इति । यद्यपि तादात्म्यप्रत्ययमात्रे भेदसमानाधिकरणतादात्म्यत्वेन तादात्म्यस्य संसर्गतया भानमिति सयुक्तिकमुक्तं चन्द्रिकायां भेदाभेदवादप्रस्तावे प्रथममिथ्यात्वलक्षणविचारे, तथापि कार्यकारणभावाद्यज्ञानदशायां तादात्म्यप्रत्ययेनात्यन्ताभेदज्ञानात् न भेदज्ञानम् , (१)तथाहि—कपालद्वय घट इत्यादिप्रत्यये विषयः न घटत्वादिकं जातिः, किन्तु कपालद्वयत्वादिकमिति ज्ञायते । तथा चात्यन्ताभेदे सति संसर्गाभावा(२)द्भेदोऽपि न संसर्गः उक्तप्रकारः । न चैवं 'घटो घटः''तद्धटस्तद्धटवानि'त्यादाविव 'घटो नील' इत्यादावपि भ्रमत्वव्यवहारः स्यादिति वाच्यम् , साम्याभावात् । 'घटो नील' इत्यादौ घटे औपाधिको भेदो भाति, घटत्वे नीलत्वस्य यो भेदस्तस्यैव घटानुयोगिकत्वनीलप्रतियोगिकत्वाभ्यां प्रातीतिकाभ्यां ज्ञानात् । (३)व्यावहारिकोऽपि भेदः ताभ्यां विशिष्टेन रूपेण प्रातीतिक इति विवेका(४)द्भेदविषयके 'घटो नील' इत्यादौ भ्रमत्वव्यवहारः । उक्तविवेकाभावे तूक्तभेदस्य व्यावहारिकत्वग्रहान्नोक्तज्ञाने भ्रमत्वव्यवहारः । 'तद्धटस्तद्धट' इत्यादौ तु भेदस्य प्रातीतिकत्वग्रहे नोक्तविवेकापेक्षा, औपाधिकत्वाभावादिति तत्र तत्काले सदैव भ्रमत्वग्रहः, तथा च 'घटो नील' इत्यादौ भ्रमत्वव्यवहार इष्ट एव, स च 'तद्धटस्तद्घटवानि'त्यादिस्थलीयभ्रमत्वव्यवहारेण न तुल्यः, 'विशिष्टसत्ता सत्ते'त्यादावपि विशिष्टसत्तात्वस्य यो भेदः, तस्मिन् शुद्धसत्त्वानुयोगिकत्वेन व्यावहारिकेण विशिष्टसत्ताप्रतियोगिकत्वं प्रातीतिकं कल्पितम् । घटाकाशमठाकाशयोस्तु औपाधिको-

(१) तदाहि इति घपुस्तके ।
(२)—अत्यन्ताभेदेपि न संसर्गः किन्तु प्रकारः इति पाठो घपुस्तके ।
(३) तथाच व्यावहारिकोपीति घपुस्तके ।
(४)—विवेकादुक्तभेदविषयके इत्यादिः घपुस्तके ।

शुक्तिरजतादिवदध्यस्तस्य तत्तादात्म्याभावानु-

न्यायरत्नावली ।

ऽपि भेदो व्यावहारिकः । घटपटयोस्तादात्म्याभावेन व्यावहारि-कयोस्तादात्म्यभेदयोः विरोधस्य दूषणस्याभावात् । न च तादा-त्म्यं भेदो वा व्यावहारिक इति विनिगमकशून्यमिति वाच्यम्, तादात्म्यान्यथानुपपत्त्या भेदस्य कल्पनीयतया तादात्म्यादेरुपजी-व्यत्वेन प्राबल्यस्यैव व्यावहारिकत्वे प्रयोजकत्वात् । एवं च 'घ-टस्सन्नि'त्यादिप्रतीतेस्तादात्म्यांशे प्रमात्वेऽपि भेदांशे भ्रमत्वं तद्व्य-वहारश्च । वस्तुतो विशेषणाभिन्नतया ज्ञायमाने विशिष्टे तादात्म्यं विशेषणप्रकारकज्ञानत्वं विशेषणांशे तादात्म्येन प्रमात्वम्, न तु विशेषणभेदसमानाधिकरणतादात्म्यसंसर्गकत्वघटितम् । तथा च विशेषणविशेष्ययोर्भेदाग्रहकाले न तादात्म्यप्रमा, तस्या भेदविषय-कत्वानियमेन भ्रमत्वानियमश्च, ज्ञानान्तरेण भेदग्रहेऽपि तादात्म्य-प्रमासम्भवादिति ध्येयम् । प्रातीतिकभेदप्रतियोगित्वं च न परि-च्छिन्नत्वम्, प्रातीतिकध्वंसप्रतियोगित्वस्यापि तत्त्वापत्तेरिति भा-वः । ननु 'घटस्सन्नि'त्यादिप्रत्यये सत्ताजातेः समवायो भाति न तु सद्रूपतादात्म्यम्, अतो दृश्यमात्रे सद्रूपभेदस्य व्यावहारि-कत्वमेवेत्यतोऽधिष्ठानेत्यन्तमुक्तम् । द्वैतस्य—दृश्यस्य, मिथ्यात्वेन सद्रूपज्ञाननिवर्त्यत्वेन । रजतादिवत्—रजतादेरिव । अध्यस्तस्य—सद्रूपाज्ञानमूलकभ्रमविषयस्य । अधिष्ठानेति । कारणीभूताज्ञाना-श्रयेसर्थः । यथा शुक्तिरजतादेः शुक्तिज्ञाननिवर्त्यत्वरूपमिथ्या-

नारायणी ।

र्यस्येत्यर्थः, मिथ्यात्वेन-अधिष्ठानज्ञाननाश्यत्वेन, शुक्तिरजतादिवत्-शुक्ति-रजतादेरिव, अध्यस्तस्य-अधिष्ठानाज्ञानकृतभ्रमविषयस्य, घटः सन्नि-त्यादिप्रतीत्या सद्व्यक्तितादात्म्यविशिष्टतयैव प्रमितत्वात् । तत्तादात्म्या-भावानुपपत्तिः-तादात्म्येनाभावो भेदस्तस्यानुपपत्तिः वस्तुतोऽसंभव इति यावत्, तथा च वस्तुतः शुक्तिरजतादेरन्यत्वेऽपि नेदं रजतमिति भेद-

न्यायरत्नावली ।

त्वेन शुक्त्यवच्छिन्नसद्रूपाज्ञानकल्पितत्वेन उक्ताज्ञानाश्रयस्येदमवच्छिन्नसद्रूपस्य तादात्म्येन भानम्, 'रजतमिदं सदि'ति प्रतीतेः, तथा दृश्यमात्रस्य ब्रह्मज्ञाननिवर्त्यत्वरूपमिथ्यात्वेन सद्रूपाज्ञानकल्पितत्वात् सद्रूपतादात्म्येन भानम्, 'घटस्सन्नि'त्यादिप्रतीतिरज्ञानस्य स्वाश्रयतादात्म्यवैशिष्ट्येनैव दृश्यरूपेण परिणामकल्पनात्, अन्यथा सत्ताजात्या द्रव्यगुणकर्ममात्रवृत्त्या 'ध्वंसस्सन्नि'त्यादिप्रत्ययानिर्वाहात्, अनादिदृश्यानामपि अनादिसत्तादात्म्यविशिष्टतयैव प्रत्ययात् । तथा च सर्वत्र सत्तादात्म्यविशिष्टतया भासमानदृश्ये सद्भेदस्य व्यावहारिकस्यासम्भवः । सद्रूपेऽपि सद्रूपात्मकसत्ताधारत्वोपपादनाय कल्प्योऽपि सद्रूपभेदो न व्यावहारिकः, विचारदशायामेव प्रतीतेरिति भावः । ननु अनुमित्यादिरूपे गुरुत्वादिप्रत्यये सत्तादात्म्यभानानियमात्सत्तादात्म्याविषयानुमित्यादिसिद्धगुरुत्वादौ व्यावहारिकसद्भेदसत्त्वे बाधकाभाव इति चेन्न । द्वैतस्येत्यादिना सिद्धत्वादित्यन्तेन 'सर्वव्यावहारिकद्वैतज्ञानं स्वविषयीभूतद्वैतमात्रसत्तादात्म्यविषयम्, भ्रमत्वात्, प्रातीतिकभ्रमवदि'त्यस्य सूचितत्वात् । न चेदमनुपपन्नम् । ज्ञानजनकसामग्रीमात्रं सत्तादात्म्यविशेषितमेव ज्ञापयतीति नियमस्यानुभवबलेन कल्पनात् । अत एव सर्वोऽपि विषयः कालसम्बन्धित्वरूपसत्त्वेन भातीति भट्टाः । ज्ञानसम्बन्धित्वरूपसत्त्वेनेति प्राभाकराः । अत एव सद्रूपाधारत्वस्यापि पूर्वोक्तरीत्या सर्वदृश्येषु प्रतीतिसिद्धत्वात्सद्रूपात्यन्ताभावो न कुत्राप्यस्ति । न चोक्ताधारत्वस्य कल्पितत्वात् तद्घटितदत्यन्ताभाव इव सद्रूपात्यन्ताभावोऽप्यास्तामिति वाच्यम् । शुद्धस्य सद्रूपस्यात्यन्ताभावो हि न प्रत्यक्षेण गृह्यते किञ्चिद्धर्मविशिष्टप्रतियोगिकाभावस्यैव तेन ग्रहणात् । नाप्यनुमानादिना, व्याप्तिग्राहकतर्काद्यभावात् । प्रत्युत

पत्तेः । तेन आत्मा नाभावप्रतियोगी । अभा
प्रतियोगिनश्च देहेन्द्रियादयः । (१)तेनाऽमी नात्मानः

न्यायरत्नावली ।

'सत्यस्य सत्य'मित्यादिश्रुतिपीडनात् सद्रूपसम्बन्धिनि तदत्यन्
भावस्वीकारे सद्रूपं मिथ्या स्यात् । येन हि सम्बन्धेन यत् ध
शिष्टं तत्सम्बन्धावच्छिन्नं तस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वं
थ्यात्वम् । तथा च सद्रूपस्याधारे आधारत्वसम्बन्धेनाभावस्
कारेण मिथ्यात्वापत्त्या उक्तश्रुतिः पीड्येत, आधारत्वाद्
दृश्यत्वादिना मिथ्यात्वानुमानमुक्तश्रुत्या अनुगृह्यते इति ध्येय
ध्वंसप्रागभावयोरित्यादिना आत्मन अभावाप्रतियोगित्वं (२)स्थि
त्य आत्मन इत्यादिना तत्पूर्ववाक्येन उक्तमर्थमुपसंहरति-ते
त्यादिना । तेन आत्मनः अभावाप्रतियोगित्वग्राहकमानसत्त्वे
आत्मा नाभावप्रतियोगी-आत्मत्वावच्छेदेन आत्माभावप्रतियो
त्वेन न गृह्यते । तेनेति । आत्मत्वव्यापकतया गृहीतं यदभावाप्
योगित्वं तदभावत्वेन हेतुनाऽभावप्रतियोगित्वेऽनात्मत्वव्याप्त
ग्रहात् अनात्मरूपपक्षे वृत्तित्वग्रहाच्चानुमितिसम्भवेनेत्यर्थः
नात्मानः-आत्मस्वरूपत्वाभाववन्तः । यथाश्रुते आत्मभेदस्य
ध्यत्वे तस्य प्रातीतिकस्यैव वाच्यत्वेन देहाद्यात्मवादिनं प्रति उ
न्यासानौचित्येन असङ्गतेः । आत्मस्वरूपत्वं चात्ममात्रविषयक
विषयत्वम् । ननु द्वैतस्य पूर्वोक्तमिथ्यात्वे दृश्यत्वादिकमेव हे

नारायणी ।

प्रतीतिवत् प्रपञ्चभेदप्रतीतिरपि काल्पनिकप्रपञ्चप्रतियोगिककाल्पनिक
दपरतया नेयेति भावः । उक्तार्थमुपसंहरति-तेनेति । आत्मनोऽभावाप्र
योगित्वग्राहकमानसत्त्वेनेत्यर्थः । नाभावप्रतियोगी-नाभावसामान्यप्र
योगी । तावता किं तत्राह-अभावेति । तेनेति । अभावसामान्यप्रतियोगित्वे
अमी-देहेन्द्रियादयः, नात्मान-आत्मस्वरूपाभाववन्तः । यदि नात्मस्व

(१) तेन तेऽमी नात्मान इति ग पुस्तके।

(२) स्थिरीकृत्य तद्धेतुकम् आत्मन इति घपुस्तके पाठः ।

किन्तु स्वप्रकाशबोधरूपाख्ये आत्मनि अद्वैतेऽप्यनाद्य-

न्यायरत्नावली।

दृश्यत्वादिकं च दृक्तादात्म्यादिरूपम्, तस्य कथं मिथ्यात्वव्या-प्यता(१)प्रयोजकत्वमिति चेन्न। मिथ्यात्वव्याप्यत्वं न स्याच्चेत् तर्हि दृश्यत्वं न स्यादिति तर्कसम्भवात्। अथ दृग्दृश्ययोस्ता-दात्म्यमनुपपन्नम्, तस्य दृग्दृश्याभ्यां सम्बन्धान्तर(२)काले त-स्यापि सम्बन्धान्तरम् एवं तस्यापीति अनवस्थानात्। तस्य ता-भ्यां सम्बन्धान्तरास्वीकारे ताभ्यामसम्बद्धस्य तस्य कथं तदुभयं प्रति सम्बन्धता, तथा च तत्तादात्म्यमनुपपद्यमानं सत् स्वमिव स्वप्रतियोगित्वानुयोगित्वोपहितत्वरूपेण दृग्दृश्यावपि मिथ्यात्वेन ज्ञापयतीति चेत्, एवमपि तत्तादात्म्योपहितरूपेणैव दृश इव दृश्य-स्य मिथ्यात्वं स्यात, न तदनुपहितरूपेणापि दृश्यस्य। अथानु-पपद्यमानदृक्सम्बन्धाधीनासिद्धिकत्वात् दृश्यमात्रस्य मिथ्यात्वम्, तर्हि वेदान्तवाक्यजज्ञानीयानुपपद्यमानसम्बन्धाधीनसिद्धिकत्वात् आत्मापि मिथ्या स्यात् अत आह-किन्तु स्वप्रकाशेत्यादि। स्वप्रकाशबोधरूपे कल्पिता अनिर्वचनीया एवेति योजना। स्वप्र-काशतादात्म्यवर्जितस्यानुपपन्नत्वेन कल्पितत्वमेवेत्यर्थः। अनुपप-द्यमानस्सम्बन्धः स्वोपहितमेव मिथ्यात्वेन ज्ञापयतीति वेदान्त-वाक्यजवृत्तिज्ञानोपहितस्य मिथ्यात्वेऽपि न शुद्धब्रह्मणो मिथ्या-त्वम्। न हि यत्र यत्रानुपपद्यमानमस्ति तन्मिथ्येति नियमे मान-मस्ति। मिथ्योपहितं तु मिथ्यैव, मिथ्याघटितत्वात्। दृक्तादा-त्म्यानुपहितमपि सर्वं दृश्यरूपं मिथ्या। उक्तरीत्याऽनुपपद्यमानेन

नारायणी।

पास्तर्हि व्यवहारक्षमास्ते कीदृग्विधा इत्याशङ्क्य स्वरूपमाह-किन्त्विति। स्वप्रकाशरूपे अनिर्वचनीया एवेति योजना। सदसद्भिन्नरूपाऽनिर्वाच्यत्वे

(१) मिथ्यात्वव्याप्यता अप्रयोजकत्वादिसम्भवात्। अथ दृग्दृश्ययोस्तादात्म्यम् इत्यादिः घपुस्तके। (२) सम्बन्धान्तरस्वीकारे इति घपुस्तके।

निर्वचनीयाविद्याकल्पिता अनिर्वचनीया एवेति सिद्धान्तरहस्यम् । ननु 'बोधरूप आत्मेति तवाभ्युपगमात्

न्यायरत्नावली ।

घटत्वादिसम्बन्धेनोपहितत्वात् । न हि दृश इव दृश्यस्य अनुपहितं रूपमस्ति, दृश्यग्राहकप्रमाणमात्रस्य सम्बन्धोपहितदृश्यग्राहकत्वात् निर्विकल्पकप्रत्यक्षस्याप्रामाणिकत्वात् । प्रामाणिकत्वेऽपि सम्बन्धमगृह्णतोऽपि तस्य (१)सम्बन्धोपाहितस्य स्वरूपग्राहकत्वेन चरितार्थत्वात् । अनुपाहितरूपग्राहकत्वकल्पने गौरवात् । वेदान्तजन्यधीविषयस्तु अनुपाहितमेव, तात्पर्यानुरोधात् । तच्च स्वप्रकाशचिदानन्दस्वरूपम् , अन्यथा स्वतःपुरुषार्थरूपमोक्षरूपत्वानुपपत्तेः । तथा च अनात्मानः केनापि स्वरूपेण निर्वक्तुमशक्यत्वात् अनिर्वचनीयाः, उपहितैः स्वीयसर्वरूपैः अनुपपन्नत्वात् विचाराऽसहत्वात् मिथ्याभूता इति भावः । ननु तर्हि स्वप्रकाशे शुद्धात्मनि न दृश्यारोपस्सम्भवति, अप्रकाशमान एव शुक्त्यादौ रूप्याद्यारोपदर्शनात् ; अथ अज्ञानसम्बन्धात् तत्सम्बन्ध इति चेन्न, तस्यापि तत्रासम्भवात् अत आह-अनाद्यनिर्वचनीयेत्यादि । इदमाद्याकारमनोवृत्तिनिर्गमनात् शुक्त्यादौ साक्षिरूपप्रकाशसम्बन्धे सति (२)अज्ञानसम्बन्धेन रूप्याद्यारोपात् प्रकाशमानेऽप्यात्मनि अज्ञानात् दृश्यारोपसम्भवः । न च दृष्टान्तेऽप्यसम्भवः, अज्ञानस्यानादित्वात् अनिर्वचनीयत्वाच्च । प्रमाणजन्यज्ञानरूपेणैव प्रकाशेनाज्ञानस्य विरोधः, न तु चित्प्रकाशेन । मन्ददीपान्धतमसयोरिव

नारायणी ।

हेतुमाह-अविद्याकल्पिता इति । ननु स्वप्रकाशे अज्ञानसम्बन्ध एव कथं? तत्राह-अनाद्यनिर्वचनीयेति । अनिर्वचनीयत्वाद्विभिन्नसत्ताकाऽविद्यासम्बन्धो घटत एव लोकेपि समसत्ताकप्रकाशाप्रकाशयोरेव विरोधदर्शनादिति भावः । आत्मनो बोधरूपत्वमिति पक्षेऽव्यभिचारित्वं प्रतिक्षिपति-नन्विति । सुप्तोत्थितस्य-स्वापानन्तरमुत्थितस्य जाग्रतः पुरुषस्य मूढोहमा

(१) सम्बन्धोपहितदृश्यग्राहकत्वेनेति घपुस्तके । (२) सत्यपीपि घपुस्तके ।

सुप्तौ च बोधाभावात् गाढं मूढोऽहमासं न किञ्चिदवेदिषमिति सुप्तोत्थितस्य परामर्शात् कथमव्यभिचारिता आत्मन इत्याशङ्क्याह—सुषुप्त्यैकसिद्ध इति। अयमर्थः। आत्मनः सुषुप्तिसाक्षित्वान्न तत्र तदभावः। अन्यथा मूढो

न्यायरत्नावली।

तयोः स्वीयसर्वकालेषु मिथः संसृष्टतयैवोपलम्भात्। अथापि तयोर्विरोधः स्यात् यद्यज्ञानमुत्पद्येत। न ह्यन्धतमसमपि कृतमन्ददीपे गृहे उत्पद्यते। अथापि महालोकतमसोरिव समसत्ताकत्वे विरोधः स्यात्, अज्ञानं तु विचारासहत्वेन मिथ्याभूतं न परमार्थचित्प्रकाशसमसत्ताकमिति भावः। सुप्तोत्थितस्य सुषुप्त्युत्तरं जाग्रतः पुरुषस्य अवेदिषमिति परामर्शादिति योजना। परामर्शात्—स्मरणात्। अव्यभिचारिता—अभावाप्रतियोगिता। सुषुप्तीति। मनोऽवच्छिन्नजीवस्य ब्रह्मणो वा स्वप्नाध्यासोपादानत्वे मनोलयसहितं तद्विषयकमवस्थाज्ञानं सुषुप्तिः, शुद्धब्रह्मण एव तदुपादानत्वे(१) तद्विषयकमूलाज्ञानमेव मनोलयसहितं सा। तत्र पक्षद्वयेऽपि (२)गाढमूढोऽहमिति मूलाज्ञानस्योल्लेखः। आद्यपक्षे न किञ्चिदवेदिषमित्यनेन स्वप्नोपादानाज्ञानस्य मनोऽवच्छिन्नचिदज्ञानस्येव व्यावहारिकप्रपञ्चविषयकत्वस्वीकारादिति। अन्यथा

नारायणी।

समिति प्रत्ययस्याज्ञानपरतानिरासायाह—न किञ्चिदवेदिषमिति। न किञ्चिज्ज्ञातवानित्यर्थः। धात्वर्थज्ञानस्य नञर्थेऽभावेऽन्वयात् ज्ञानाभाव एव प्रतीतेर्विषय उचित इति भावः। परामर्शात्—अनुमितेः। (३)जन्यज्ञानसामग्र्यभावादिरूपहेतोरिति शेषः। अव्यभिचारिता—अविनाशिता। अयमर्थ इति। सुषुप्तेन स्वापात्मकेन एकेन मुख्येन असाधारणप्रमाणभूतेन सिद्धो निश्चित इति मूलार्थः। सुषुप्तीति। सुषुप्तिविषयकानुभवरूपत्वादित्यर्थः।

(१) तदुपादानत्वे तु इति घपुस्तके।

(२) गाढं मूढोहमित्यनेन मूलाज्ञानस्योल्लेखः इति घपुस्तके।

(३)—अनुमितेः अनुमितिजन्यज्ञानेत्यादिपाठः खपुस्तके युक्तश्च।

ऽहमासमिति परामर्शानुपपत्तेः। मातृमानमितिमेयाना

न्यायरत्नावली।

न किञ्चिदवेदिषमिति सर्वव्यावहारिकविषयकाज्ञानस्मृतेरनुपपत्तेः वस्तुतो घटादिव्यावहारिकपदार्थानां सुषुप्तौ जागरकालीन अज्ञानान्तरावृतत्वेन प्रकाशाप्रसक्तेः स्वप्नहेत्वज्ञानाविषयत्वात्सा कारेऽपि जीवेशाचिदज्ञानसम्बन्धादौ जागरे सदा भानेन प्रकाश प्रसक्तेः स्वप्नहेत्वज्ञानविषयत्वावश्यकत्वात्, वार्तिकमते जीव स्यानावृतसाक्षितादात्म्येनेशस्य साक्षित्वेन च तयोर्भेदस्य च अना वृतत्वेन साक्षिभास्यत्वप्रसक्तेः 'न किञ्चिदवेदिष'मित्यनेनोक्तभेदा दिविषयकतया मनोऽवच्छिन्नचिदज्ञानस्योल्लेखः, न तु घटादिवि षयकतयापि। द्वितीयपक्षे (१)तु मूढोऽहमासमित्याकारं मूलाज्ञान विषयकस्मरणम्। न किञ्चिदवेदिषमित्याकारकं तु उक्तभेदादि विषयकस्य सुषुप्तावनुभूयमानस्य स्वप्नानुपादानस्यापि अज्ञानाव स्थाविशेषस्य स्मरणमिति ध्येयम्। अन्यथेति। सुषुप्तिरूपाज्ञा नविषयकसाक्षिणः सुषुप्तिकालेऽनङ्गीकार इत्यर्थः। ननु सुषुप्त्या काराया अविद्यावृत्तेरेव तादृशस्मृतिहेतुत्वसम्भवेन किं सुषुप्तिका लीनसाक्षिस्वीकारेण तत्राह—मातृमानमितिमेयानामिति ज्ञातृज्ञानकरणज्ञानज्ञेयव्यक्तीनां-व्यभिचारित्वेऽपि-साक्षिसम्बन्धे

नारायणी।

तत्र-सुषुप्तौ तदभावः-ज्ञानसामान्याभावः। यत्किञ्चिद्व्यक्तेः सामान्याभा वविघटकत्वात् तथाच निरुक्तानुमाने बाध इति भावः। तत्र ज्ञाने प्रमाण माह—अन्यथेति। सुषुप्तावनुभवानङ्गीकार इत्यर्थः। परामर्शानुपपत्ते (२)स्मृतिं प्रत्यनुभवस्य हेतुत्वात्तदानीमनुभवं विनोत्थितस्य स्मृत्यस म्भवादिति यावत्। तदानीं क्लृप्तप्रमाणादिसामग्र्यभावात्कथमनुभवस्त त्राह—मातृमानेति। ज्ञानाश्रयज्ञानकरणवृत्तिज्ञेयव्यक्तीनां (३)व्यभिचारित्वे

(१) 'न किञ्चिदवेदिष'मित्याकारस्योक्तभेदादिविषयकस्य सुषुप्तावनुभूयमानस्य इति घपुस्तके। (२) परामर्शानुपपत्तेः स्मरणानुपपत्तेः स्मृतिं प्रतीत्यादिपाठः खपुस्तके (३)—व्यक्तीनामित्यर्थः। व्यभिचारित्वेपि—तदा विद्यमानाभावप्रतियोगित्वेपि तद वाभावसाक्षिणः ज्ञानादिभावाभावयोर्भासकस्य इति खपुस्तके पाठः युक्तश्चासौ।

व्यभिचारित्वेऽपि तद्भावाभावसाक्षिणः कालत्रयेऽव्य-

न्यायरत्नावली ।

क्वचित्काले अभावेऽपि कालत्रये—ज्ञात्रादेः पूर्वकालस्थितिकालनाशकालेषु । कालत्रयाव्यभिचारित्वे (१)हेतुमाह—तद्भावाभावसाक्षिण इति । ज्ञात्रादिस्वरूपतदभावभासकस्येत्यर्थः । यथा प्रतिकर्मव्यवस्थायां वक्ष्यमाणरीत्या देहस्थविषयस्थतदन्येषां मनोवृत्तिभागावच्छिन्न(२)प्रमातृप्रमाणरूपत्वम्, तथा सुषुप्तौ मनोवृत्त्यभावेन प्रमाणाद्यभावेऽपि अविद्याविशिष्टा चित् ज्ञात्री, अविद्यावृत्त्यवच्छिन्ना ज्ञानं तत्करणावच्छिन्ना ज्ञानकरणं विषयोपहिता ज्ञेयेति ज्ञात्रादिसाधकोऽनुभवोऽवश्यं वाच्यः । न ह्यविद्यावृत्तिरनुभवः येन तयैव (३)स्ववृत्तिर्वाच्या, अस्वप्रकाशरूपत्वेन स्वयं सन्दिग्धत्वेन सुषुप्त्याद्यर्थासाधकत्वात् । तदुक्तम्—

अप्रत्यक्षप्रकाशस्य नार्थदृष्टिः प्रसिध्यति । इति ।

अस्वप्रकाशज्ञानवादिनोऽर्थप्रकाशो नोपपद्यत इत्यर्थः । ज्ञानस्य स्वप्रकाशत्वं च ज्ञानविषयत्वं विनैव संशयादिविषयत्वायोग्यविद्यमानस्वरूपकत्वम् । अत एवोक्तं तार्किकादिभिरपि 'न हि जानन्नेव जानामि न वेत्याद्यनुभवति' । इयांस्तु विशेषः—यत्तार्किकादिमते ज्ञानस्य स्वाभाववत्त्वज्ञाने प्रतिबन्धकत्वात् संशयाद्यविषयत्वं मन्मते त्वनावृतत्वादिति । अत एव तन्मतं तादृशप्रतिबन्धककल्पना(४)द्धेयम् । संशयादिकं प्रति मन्मते

नारायणी ।

तद्भावाभावसाक्षिणः—ज्ञात्रादिरूपभावतदभावभासकस्य, कालत्रये—जागराद्यवस्थात्रये, अव्यभिचारात्—अविनाशात् । तथाच लाघवात्सर्वावभासकतयाङ्गीकृतस्य साक्षिणस्तदानीं सत्त्वान्न सामग्र्यभावेपि

(१) हेतुं विशेषणमाह इति घपुस्तके ।
(२) मनोवृत्तिभागावच्छिन्नचैतन्यानां प्रमातृप्रमितिप्रमाणरूपत्वमिति घपुस्तके ।
(३) स्मृतिर्वाच्येति घपुस्तके । (४) कल्पनागौरवाद्धेयमिति घपुस्तके ।

व्यभिचारात् । ननु प्रमाश्रयः प्रमाता स एव कर्ता भो-

न्यायरत्नावली ।

आवरणस्य हेतुत्वं तन्मते विशेषादर्शने(१) हेतुत्वस्य स्थाने इति न गौरवकरम्, प्रत्युत विशेषादर्शनं व्याप्यतया ज्ञातस्य निश्चयाभावः । तत्त्वं चाज्ञानत्वजातिरूपादावरणत्वाद् गुरुतरम् । गृहीताप्रामाण्यकस्याहार्यस्याव्याप्यवृत्तिविषयकत्वेन गृहीतस्य च निश्चयस्याप्रतिबन्धकत्वात्तदन्यत्वेन निश्चयो विशेषणीयः । ज्ञानस्य स्वरूपसतः प्रतिबन्धकत्वेऽपि तादृशनिश्चयस्य प्रतिबन्धकत्वमावश्यकम् । घटादौ तादृशनिश्चयसत्त्वे 'घटज्ञानवान्न वे'ति तादृशसंशयानुदयात् । आवरणं तु तादृशनिश्चयविषयेऽप्यस्तीति तत्र संशयादिकं स्यादेवेति केवलरूपेण हेतुरिति मे लाघवम् । ज्ञानस्य ज्ञानान्तरेण स्वेन वा प्रकाश्यत्वे तु अनवस्थाऽऽत्माश्रयगौरवादिकम् । 'साक्षात्करोमि जानामि अनुभवामी'त्यनुगताकारबुद्धौ एकस्यैवानुभवस्य भानात् वृत्त्यविषये सुखादौ 'सुखं जानामी'त्यादिप्रतीतेश्च(२) न वृत्तीनामनुभवत्वम् । तस्मादेकस्य भानस्य तादात्म्यात् तदन्येषु सर्वेषु भातीतिव्यवहारः । तस्य चानुभवस्य अनुभवाविषयत्वेऽपि नालीकत्वापत्तिः, वेदान्तवाक्यजन्यप्रमावृत्तिविषयत्वात् कालादिसम्बन्धाच्च । तस्मिन्नुक्तव्यवहारस्तु (३)स्वरूपेणैव, न त्वनुभवान्तरापेक्षः । घटाद्यभावे तद्व्यवहार इव तदन्याभावानपेक्षः । तथा च विषयतासम्बन्धेन उक्तव्यवहारं प्रति अनुभवव्यक्तेः तादात्म्येन हेतुत्वमुक्तव्यवहारपूर्वकालीनत्वाविशिष्टायां

नारायणी ।

काचिदनुपपत्तिरिति भावः । मातृभिन्नं सर्वसाक्षिणं तार्किकप्रभाकरौ

(१) विशेषादर्शनहेतुत्वस्य स्थाने इति गौरवकरं प्रत्युत विशेषादर्शनं ज्ञानस्य निश्चयाभावः इति घपुस्तके ।

(२)—प्रतीतेश्च वृत्तीनामननुभवत्वं च इति घपुस्तके ।

(३)—तत्स्वरूपेणैव इति घपुस्तके ।

क्ता प्रदीपवत्स्वपरसाधारणसर्वभासकश्चेति न घटादिवत्साक्षिसापेक्ष इति चेन्न। विकारित्वेन स्वाविकारसा-

न्यायरत्नावली।

तद्व्यक्तौ तद्व्यक्तेस्तादात्म्यसत्त्वात् कार्यवति स्वस्मिन्नपि कारणस्य सत्त्वम्। सर्वस्यैव हि कारणस्य कार्यप्राक्कालीन एव कार्योपलक्षिते सत्त्वमपेक्ष्यते। कार्यप्राक्कालीनत्वावच्छेदेन हि यत्र यद्वर्तते, तत्कार्यप्राक्कालीन एव तत्र वर्तत इति नियमादिति भावः। प्राभाकरमतमाशङ्कते-नन्वित्यादि। प्रमाश्रयः—ज्ञानाश्रयः। प्रमाता—ज्ञाता। प्रदीपवदिति। यथा दीपः स्वस्य स्वप्रभासंयुक्तस्य च व्यवहारजननरूपावभासने नान्यापेक्षः, विषयतासम्बन्धेन घटादाविव समवायेन ज्ञातरि तादात्म्येन स्वस्मिंश्च(१) घटज्ञानस्य सम्बद्धतया तेषु व्यवहारस्य तत एवोत्पत्तिसम्भवात्। तथा च सुषुप्तौ (२)अविद्यासुखवृत्तिरूपज्ञानस्वीकारेऽपि तत्साक्षिस्वीकारो निर्युक्तिकः। 'जानामी'त्यनुगताकारधीस्तु विप्रतिपन्ना। न ह्यनुगताकारबु(३)द्ध्यर्थमेकं वस्तु स्वीक्रियते, अतिप्रसङ्गादिति भावः। विकारित्वेन—परिणामित्वेन। स्वाविकारसाक्षित्वानुपपत्तेः—स्वपरिणामविषयकज्ञानवत्त्वानुपपत्तेः। सुखादिरूपेण परिणतस्य प्र-

नारायणी।

प्रतिक्षिपतः—नन्विति। प्रमाश्रयः-प्रमाणजन्यज्ञानाश्रयः। ज्ञानवत एव कर्तृत्वसम्भवादाह—स एवेति। कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्यमुचितमित्यभिप्रेत्याह—कर्ता भोक्तेति। स्वपरेति। स्वस्य आश्रयस्य परस्य ज्ञानघटादेश्च वृत्तिद्वारा व्यवहारजनक इत्यर्थः। न साक्षिसापेक्षो—न स्वभिन्नानुगताभासकव्यक्त्यन्तरसापेक्षः। भासकत्वेनान्यव्यक्तिसापेक्षत्वाभावे दीपो दृष्टान्तः व्यतिरेकेण घट इति विवेकः। तथा च न (४)सुषुप्तावनुभवः प्रामाणिक इति भावः। समाधत्ते—विकारित्वेनेति। तार्किकप्रभाकरोभयमते कर्तृत्वादिरूपधर्मवत्त्वेनेत्यर्थः। स्वविकारेति।

(१) स्वस्मिंश्च स्वघटकज्ञानस्येति घपुस्तके। (२) अविद्यावृत्तिरूपेति घपुस्तके।
(३)—बुद्ध्यर्थमेव वस्तु स्वीक्रियते अतिप्रसङ्गापत्तेरिति भावः इति घपुस्तके।
(४) खपुस्तके न इति नास्ति।

क्षित्वानुपपत्तेः दृश्यस्य द्रष्टृत्वाभावात्(१)प्रमातुश्च प॰

न्यायरत्नावली।

मातुः सुखादिरूपापत्त्या पूर्वरूपोच्छेदेन पूर्वरूपस्य न सुखादिप्रमातृत्वसम्भव इति भावः। अथवा विकारित्वेनेत्यादि—भिन्नकालीनसुखादिरूपनानापरिणामित्वरूपापन्नत्वेन तादृशपरिणामान् प्रति द्रष्टृत्वानुपपत्तेः एकस्य भिन्नकालीन(२)परिणामद्रष्टृत्वं प्रत्यभिज्ञायते 'योऽहं पूर्वं सुखमन्वभूवं सोऽहमिदानीं दुःखमनुभवामि'इत्यादिप्रत्यया(३)च्च पूर्वापरकालीनमेकं द्रष्टारं विनाऽनुपपन्नम्—त्वन्मते च न द्रष्टुरेकत्वं सम्भवति, विकारित्वेन नानारूपापन्नत्वादिति भावः। ननु प्रमातुरेकदेश एव सुखादिरूपमापद्यते, तथा च तदीयपूर्वरूपस्यापि विद्यमानत्वेन द्रष्टृत्वोपपत्तिः अत एवोक्तप्रत्यभिज्ञाप्युपपद्यते तत्राह—दृश्यस्य द्रष्टृत्वानुपपत्तेरिति। दृश्यस्यानुभवविषयत्वेन भासमानस्यानुभवाश्रयत्वमात्रानुपपत्तेः। ननु 'अहं सुखमनुभवामी' तिधिया प्रमाश्रयत्वेनैवाहमर्थो भाति न प्रमेयतया तत्राह—प्रमातुश्च परिणामित्वेन दृ॰

नारायणी।

स्वाश्रितकर्तृत्वादिधर्मानुसन्धातृत्वासम्भवात्। घटत्वाद्यनाश्रयस्यैव घटत्वादिविशिष्टानुसन्धातृत्ववत् कर्तृत्वादिरहितस्यैव कर्तृत्वाद्यनुसन्धातृत्वसम्भवादिति भावः। ननु स्वस्वव्याप्यभिन्नं प्रत्येव भासकत्वे भास्यधर्मानाश्रयत्वनियमः अन्यथा दीपस्य स्वीयरूपादिभासकत्वानुपपत्ति रत आह—दृश्यस्येति। दृग्विषयस्य ज्ञानभिन्नस्य जडस्येति यावत्। द्रष्टृत्वाभावात्—सविषयकभानाश्रयत्वाभावात्। तथाचाहमर्थो न द्रष्टा दृश्यत्वाद्घटवदित्यनु(४)मानाद् द्रष्टृत्वाभावसिद्धे दीपादावपि ग्राहकज्ञानाश्रयस्य तृतीयत्वेन तद्दृष्टान्तादभिमतासिद्धेश्च नाहमर्थस्यैव द्रष्टृतेति भावः। नन्वहमर्थस्य अहं जानामीत्याश्रयत्वेन भानात् दृश्यिकमत्वरूपं दृश्यत्वमेवालीकम्, अतः कथं तेन घटादेरिव द्रष्टृत्वाभावसिद्धिस्तत्राह—प्रमातुश्चेति। अहमर्थस्येत्यर्थः। परिणामित्वेन—प्रमाणजन्यवृत्त्याश्रयत्वे

(१)—दृष्टृत्वानुपपत्तेरिति गपुस्तके। (२)—भिन्नकालीननानापरिणामेत्यादिः घपुस्तके (३)—प्रत्ययात्। तच्च पूर्वेत्यादिः घपुस्तके। (४)—इति प्रत्यनुमानात् इति खपुस्तके

रिणामित्वेन दृश्यत्वात् एकस्य(१)कूटस्थस्यैव सर्वसाक्षि-

न्यायरत्नावली।

दृश्यत्वादिति। प्रमातुरपि बीजादिवत् नानाविधभिन्नकालीनपरिणामाश्रयतयाऽनुभवविषयत्वस्वीकारादित्यर्थः। 'अहं सुखी'त्याद्यनुभवस्य सुखादिविशिष्टप्रमातृविषयत्वात् प्रमाश्रयत्वमात्रमहमर्थस्येति वक्तुमशक्यम्। किं च प्रमाविषयत्वमेव तत्र वाच्यम्, नत्वाश्रयत्वम्, उक्तप्रत्यभिज्ञाया (२)विकारिण्यनुपपत्तेः पूर्वरूपस्य उत्तररूपतादात्म्यात्तदुत्पत्तिविनाशाभ्यां तदुत्पत्तिविनाशप्राप्तेरिति भावः। ननु प्रमाता न परिणामी, आरम्भवादस्यैव स्वीकारेण निर्विकारस्यापि प्रमासुखादिसमवायित्वस्वीकारादित्याशङ्क्य धर्मधर्मिणोस्तादात्म्यानुभवात् धर्मस्योत्पत्तिविनाशाभ्यां धर्मिणस्तावदवश्यं वाच्यौ, तदुक्तम्—

उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्। इति।

उपयन जायमानः अपयन् विनश्यन् विकरोति उत्पत्तिविनाशभाजं करोतीत्याशयेन उपसंहरति—एकस्येत्यादि। एकस्य—स-

नारायणी।

दृश्यत्वात्—स्वातिरिक्तस्वप्रकाशसंविद्विषयत्वात्। प्रमाणजन्यज्ञानसापेक्षस्य स्वप्रकाशत्वायोगात् अवेद्यत्वे च शशशृङ्गादिवदलीकत्वापत्तेः, स्वव्यवहारायाहमर्थस्य स्वातिरिक्तस्वप्रकाशसंविद्विषयत्वमावश्यकमिति भावः। ननु तथापि न तत्रेष्टसिद्धिः स्वाश्रितज्ञानस्यैव स्वप्रकाशसंविद्रूपत्वाङ्गीकारात् तेन दृश्यत्वद्रष्टृत्वयोरुभयोरपि समावेशो बाधकाभावादित्यत आह—एकस्यैवेति। सजातीयभेदरहितस्यैवेत्यर्थः। कूटस्थस्य—कूटे प्रपञ्चेऽधिष्ठानतया स्थितस्य। सर्वसाक्षित्वात्—सर्वपदार्थविषयकभानरूपत्वात्। अहमर्थवृत्तेर्जडकार्यत्वेन घटादेरिव स्वतः स्फूर्त्तिमत्त्वस्य कर्तृकर्मविरोधेन सविषयकत्वस्यानवस्थानात्। वृत्त्यन्तरवेद्यत्वस्य चाऽयोगात्। लाघवात्सर्वप्रमाधिष्ठानतया क्लृप्तस्यैकस्यैवाविकारिणः (३)प्रमात्रादिसाधारणसर्वसाक्षित्वकल्पनमुचितमिति भावः।

(१) एकस्यैव कूटस्थस्येति नारायणीसम्मतः पाठः।

(२) विकारिणोऽनुपपत्तेरिति घपुस्तके।

(३)—अविकारिणः सर्वसाक्षित्वकल्पनमिति खपुस्तके पाठः।

न्यायरत्नावली।

र्वेदश्यानुस्यूतस्य। तत्र हेतुः—कूटस्थस्येति। स्वसमसत्ताकं रूपान्तरमापद्यते यः तदन्यस्येत्यर्थः। एवकारात् प्रमाता सुखादिरूपस्वसमसत्ताकपरिणाममापद्यमानो न साक्षीत्यर्थः। ननु गुणादिधर्मस्य धर्मिणि तादात्म्यमेव सम्बन्धः न तु समवायाख्यः तदन्य इत्यत्र का युक्तिरिति चेदत्रोच्यते। यत्र यत्र समवायः प्राभाकराद्यैरुच्यते तत्र तत्र तादात्म्यमेव युक्तम्। तथा हि—संयोगविशेषयुक्तं कपालद्वयं घटः, शाखादिसमुदाय एव सन्निवेशविशेषयुक्तो वृक्ष इत्यनुभवात् तादात्म्यान्यसम्बन्धो न लौकिकानुभवविषयः 'इह कपाले घट' इत्यादिधीस्तु न लोकानां स्वाभाविकी किन्तु (१)तार्किककल्पनामात्रम्, न ततोऽर्थसिद्धिः अतिप्रसङ्गात्। किञ्च (२)नीलादिगुणस्य घटादौ तादात्म्यस्वीकारे 'घटो नील' इत्यादिसर्वज्ञाने घटादौ नीलादिगुणस्य तादात्म्यसम्बन्धेन विशेषणता, न तु समवायेन; तस्यैवासिद्धत्वात्। तथा च 'घटो न नील' इत्यादिज्ञाने नीलादिगुणभेदस्यैव विषयत्वम्, न तु नीलादिसमवायिप्रतियोगिकभेदस्येति नीलादिगुणतादात्म्यधीतद्भेदधियोः 'घटो नीलगुणात्मकः, घटो न नीलगुणात्मक' इत्याकारकयोरेव विरोधित्वं कल्प्यते, सर्वैरेव स्वीकारात्; न तु नीलसमवायितादात्म्यधीनीलसमवायिभेदधियोः, (३)अलीकत्वात्। तथा च लाघवम्। अपि च नीलादेस्तादात्म्यसम्बन्धेन घटादौ विशिष्टबुद्धिं प्रति घटादौ नीलादिगुणभेदविशिष्टबुद्धेर्विरोधित्वं त्वया मया च कल्प्यम्, त्वया तु समवायेन तत्र तद्विशिष्टबुद्धौ समवायेन यो नीलादिगुणात्यन्ताभावः तद्विशिष्टबुद्धेर्विरोधित्वं वाच्यमिति समवा

(१) तान्त्रिककल्पनामात्रम्। न च ततोर्थसिद्धिरिति घपुस्तके।
(२) नीलादिघटादाविति गपुस्तके तत्र गुणस्येत्यावश्यकम्।
(३)—भेदधियोस्तयोरलीकत्वादिति घपुस्तके।

त्वात्। ननु(१)एकः कूटस्थो निर्धर्मकः साक्षी नाद्रियते

न्यायरत्नावली।

यतद(२)त्यन्ताभावतज्ज्ञानतद्विरोधित्वादिकल्पने तु तव महागौरवम्, तस्मात् कपालघटादिसम्बन्धेषु तादात्म्यत्वरूपोऽखण्डधर्म एव कल्प्यते। 'द्रव्यं घट' इत्यादिधीस्थले सम्बन्धनिष्ठतया क्लृप्तत्वात्। न तु समवायत्वरूपः, क्वाप्यक्लृप्तत्वात्। 'अहं सुखी'त्यादावपि तादात्म्यादिसम्बन्धः सुखादेर्वृत्तिनियामकः क्वचित् संयोग इव। तथा 'घटे रूपमि'त्यादिधीस्तु लोकानां वर्तत एव, तत्रापि तादात्म्यं रूपादेः वृत्तिनियामकमिति दिक्। ननु प्रमाश्रयस्यैव लोके साक्षित्वेन व्यवहारात् एकरूपकूटस्थस्य साक्षित्वं न युक्तम्। न च प्रमाश्रयस्य प्रमेयत्वे विरोधः, गमने गन्तुरिव प्रमायां प्रमातुः कर्मत्वासम्भवादिति वाच्यम्। प्रमोपहितप्रमातृविशिष्टरूपेण(३) एकस्यापि प्रमातृत्वप्रमेयत्वोभयोपपत्तेः। अत एव प्रमाया अपि प्रमेयत्वम्, अत्यन्ताभेदे सम्बन्धास्वीकारेऽपि प्रमात्वोपहितप्रमात्वाविशिष्टरूपभेदेन विषयत्वोपपत्तेः। न च विकारिणि प्रमातरि नानारूपे उक्तप्रत्यभिज्ञानुपपत्तिरिति वाच्यम्। सुखादिपरिणामात्मकतया नानात्वेऽपि स्वरूपेण प्रमातुरेकत्वात्। एवं च स्वविषयकजन्यप्रमया धर्मव्यवहारोपपत्तौ तदन्यनित्यज्ञानरूपे साक्षिणि मानाभाव इति शङ्कते-एक इत्यादि। निर्धर्मकः-प्रमादिधर्मशून्यः। एकादिपदं श्लिष्टम्। एको न साक्षी। किन्तु

नारायणी।

साक्षित्वविरुद्धैकत्वकूटस्थत्ववतः साक्षित्वं न युक्तिसहं नवा(४)शास्त्रसिद्धमित्याशङ्कते--एक इति। एकः अद्वितीयः मानसामग्र्या रहित इति यावत्, कूटस्थोऽपरिणामी निर्धर्मकः साक्षित्वादिधर्मरहितः। अप्रामाणिकत्वात्--युक्तिशास्त्राद्यगोचरत्वात्। अप्रामाणिकतोक्तिः श्रुत्यपरिज्ञान-

(१) नन्विति खघपुस्तकयोर्नास्ति।

(२)—समवायतदवच्छिन्नात्यन्तेत्यादिः घपुस्तके।

(३) रूपभेदेनेति घपुस्तके। (४)—युक्तिसहशास्त्रसिद्धमिति कपुस्तके पाठः।

अप्रामाणिकत्वादिति चेन्न। 'तमेव भान्तमनुभाति स
'तस्य भासा सर्वमिदं विभाति, न दृष्टेर्द्रष्टारं पश्येः अ
दृष्टो द्रष्टा, नान्योऽतोऽस्ति द्रष्टे'त्यादि वदता वेदान्त

न्यायरत्नावली।

द्वौ त्रयो वा। कूटे कपटे साक्षित्वे यस्तिष्ठति, यो वा धर्मशून्यः स न साक्षी, धर्मशास्त्रे तथोक्तत्वात् इति श्लेषः। भान्तम्-अपरोक्षव्यवहारविषयम्, अनु-आश्रित्य। किं दृग्दृश्ययोस्सहापरोक्षता व्यवहारमात्रं विवक्षितं तत्राह-तस्य भासेति। तदभिन्नभानेत्यर्थः। विभाति-अपरोक्षव्यवहारविषयः। दृष्टेः-चाक्षुषादिवृत्ति ज्ञानस्य, द्रष्टारम्-अनुभवरूपम्, पश्येः-चाक्षुषादिवृत्तिविषयीकुर्याः। अदृष्टः-वृत्तिभिन्नानुभवस्यापि अविषयः। तर्हि नित्यचिद्रूपसाक्षिण एव वास्तवं नानात्वमस्तु तत्राह-नान्योऽतोऽस्ति द्रष्टेति। यो द्रष्टा सोऽन्तर्यामिस्वरूपादन्यः सन् कुत्रापि नास्ति मिथ्येत्यर्थः। शुद्धेनान्तर्यामिरूपेण द्रष्टा सन् न तु तदन्यरूपेणेति द्रष्टुर्नानात्वं मिथ्येति भावः। तस्य कूटस्थचिद्रूपस्य सर्वसाक्षित्वेन-

नारायणी।

मूलेति दर्शयितुं श्रुतिमादौ उदाहरति-तमेवेति। तमेव-'एको वशी सर्वभूतान्तरात्मे'त्युक्तसाक्षिणमेव। भान्तं-प्रकाशमानं भासकम् अनु आश्रित्य सर्वमिदं सूर्याग्न्यहमर्थादि विभाति भानकर्तृ भवति यथा खादित्यमनु दर्पणादित्यादि भाति। फलितमाह—तस्य भासेति। तदभिन्नभानेनेत्यर्थः। आस्तां सर्वभासकत्वं भास्यत्वासामानाधिकरण्यं तु कुतस्तत्राह-न दृष्टेरिति। दृष्टेः-प्रमाणजन्यवृत्तेः द्रष्टारं-भासकं न पश्येः-न पश्यसि तद् ग्रहीतुमिति शेषः। तथाच भासकत्वभास्यत्वयोरसामानाधिकरण्यं श्रुतावेव स्पष्टमिति भावः। श्रुत्यन्तरमाह-'अदृष्टो द्रष्टेति' अदृष्टः-सर्वप्रमाणागोचरः द्रष्टा सर्वावभासकः। नन्वस्तु द्रष्टृत्वदृश्यत्वयोरसामानाधिकरण्यं द्रष्टुरेकत्वं तु कुतस्तत्राह-नान्योतोस्तीति। अतः--पृथिव्यादिविज्ञानान्तर्यामिसकाशात्, अन्यः-व्यावृत्तः प्रपञ्चान्तर्गतः कोप्यहमर्थादिरूपो द्रष्टा नास्तीत्यर्थः। आदिना 'नान्योऽतोऽस्ति श्रोते'त्यादिपरिग्रहः। अनेन (१) सर्व

(१) अनेन प्रमाणजन्येति खपुस्तके।

प्रमाणराजेन तस्यैव सर्वसाक्षित्वेनाभिषिक्तत्वात्। ननु महदेतदिन्द्रजालम्, प्रमाश्रयानकूटस्थान्विहाय कूटस्थमप्रमाश्रयमेव प्रमाणराजः सर्वसाक्षिणं करोतीति। बाढम्। इन्द्रजालमेवैतत्स्वप्नवदविद्याविलसितत्वात्।

न्यायरत्नावली।

स्वभिन्नं सर्वं प्रत्यनुभवरूपतया अभिषिक्तत्वात्—लाघवतर्कगङ्गाजलेन संशोध्य सर्वान् प्रति ज्ञापितत्वात्। तथा च लाघवतर्कसहकृतयोक्तश्रुत्या स्वभिन्नसर्वविषयकम् अन्याविषयीभूतमेकं नित्यचिद्रूपं ज्ञानं कल्प्यते। चक्षुरादिजन्यप्रमा तु ज्ञानव्यञ्जिका, न तु ज्ञानम्; सुखादौ चित एव ज्ञानत्वस्य क्लृप्तत्वात्। तत्र जन्यज्ञानतत्सामग्र्यादिकल्पने तु महागौरवम्। यद्यपि यथा प्रमितवक्तरि प्रमातर्येव साक्षिशब्दस्य लोके रूढिः क्लृप्ता, तथापि 'साक्षी चेता' 'सर्वस्य साक्षी'त्यादिश्रुत्या गौण्या वृत्त्या चैतन्येऽपि तत्प्रयोगः। प्रमाता रागद्वेषादिविकारवतामनेकेषाम् अन्येषु दुष्टादुष्टत्वव्यवहारं जनयति, चैतन्यमपि सर्वेषां विकारवतां व्यवहारं प्रमातृषु जनयतीति सादृश्यादिति भावः। कूटस्थमप्रमाश्रयमिति। अप्रमाश्रयस्य साक्षिता लोकाविरुद्धा युक्तिविरुद्धा च। सा हि सर्वविकारितादात्म्यरूपा वाच्या। न च कूटस्थस्य विकारितादात्म्यं सम्भवतीति इन्द्रजालवत् सेति भावः। एतत्—कूटस्थस्य साक्षित्वम्,

नारायणी।

माणजन्यवृत्तिमात्रस्यैव ज्ञानरूपता नास्तीति ज्ञापितम्, सर्वसाक्षित्वेन सर्वावभासकत्वेन अभिषिक्तत्वात्—दर्शितयुक्तिभिः संशोध्य सर्वान्प्रति ज्ञापितत्वात्। निरुक्तयुक्तिविरोधसत्त्वेपि श्रुतेः साक्षित्वप्रतिपादनं महामायेत्याशङ्कते—नन्विति। इन्द्रजालं—माया। इन्द्रजालत्वमेव समर्थयति—(१)*प्रमाश्रयानिति। तत्र हेतुः अकूटस्थानिति परिणममानानित्यर्थः। प्रमातुर्द्रष्टृत्वसंभवमुपपाद्यातिरिक्तस्यासंभवमाह*—कूटस्थमिति। कूटवद्विघमानं निर्विकारमिति यावत्। अत एवाप्रमाश्रयमित्यर्थः। इष्टमापादितमित्याह—बाढमिति। एतत्—कूटस्थस्य साक्षित्वम्, अविद्याविलसितत्वात्—

(१) *……*चिह्नद्वयवर्ती पाठः खपुस्तके नास्ति।

तथापि दृश्यस्य घटादिवज्जडत्वेन कथं प्रमाश्रयत्वमिति

न्यायरत्नावली ।

विलसितत्वात्-प्रयुक्तत्वात् । तथापि-अविद्याप्रयुक्तत्वेन मिथ्यात्वात् कूटस्थाकूटस्थतादात्म्यस्यासम्भवपरिहारेऽपि । दृश्यस्य-साक्षिभास्यमनसः। जडत्वेन-साक्षिचिदन्यत्वेन साक्षिचिदाश्रयत्वाभावेन च। कथं प्रमाश्रयत्वमिति। प्रमा हि अज्ञातविषयकस्वप्रकाशकज्ञानम्, स्मृतेः प्रमात्वाभावात् स्वप्रकाशत्वाभावे स्वयं सन्दिग्धत्वेन विषयभासकत्वाभावात्। तथा चाज्ञातं घटादिकं ज्ञात्वा तत्प्रमाजननाय चक्षुर्व्यापारादौ यदा मनः प्रवर्तते, तदा तस्याज्ञातघटादिज्ञातृत्वमनुपपन्नम्, साक्षिण एव तत्सम्भवात्। तदुक्तं विवरणे 'अज्ञाततया ज्ञाततया च सर्वं साक्षिभास्य'मिति। एवं मनसोऽपि घटादिविषयकस्वप्रकाशज्ञानाश्रयत्वमनुपपन्नम्। तथा चाज्ञातघटादिज्ञानाश्रयत्वेनापि मनसः (१)प्रमातृत्वानुपपत्तिः। 'प्रमिणोमी'ति धीविषयस्य ज्ञानाश्रयत्वस्य चानुपपत्तिः। न च चिद्रूपे ब्रह्माणि घटादेरिव मनसोऽपि तादात्म्येनाध्यासात् घटाद्याकाराभिगतमनसो वृत्त्या घटादिचैतन्यस्य मनोऽवच्छिन्नत्वसम्पत्त्या घटादिविषयकस्वप्रकाशकचिदाश्रयत्वं मनसः सम्भवतीति वाच्यम्, मनसो ज्ञानतादात्म्येऽपि ज्ञानाश्रयत्वासम्भवात्। न ह्यधिष्ठानाश्रयत्वमारोप्ये क्वापि दृष्टम्। (२)+ईशस्य जीवस्य वा जगदुपादानत्वे

नारायणी ।

अविद्याप्रयुक्तत्वात्। अविद्याकृतप्रपञ्चविषयकत्वरूपावभासकताप्यविद्याकृतैवेतीन्द्रजालरूपैवेति भावः। ननु यद्यतिरिक्तः साक्ष्येव प्रमा तदाऽन्तःकरणस्य प्रमातृत्वमनुपपन्नं तस्य सर्वाधिष्ठानसाक्ष्याश्रयत्वानुपपत्तेरित्याशङ्कते—तथापीति। अतिरिक्तसाक्ष्यङ्गीकारेपीत्यर्थः। दृश्यस्य—साक्षिभास्यस्य, जडत्वेन—चिद्भिन्नत्वेन चिदाश्रयत्वाभावेन च कथं प्रमाया आश्रयत्वरूपं प्रमातृत्वं तद्वृत्तेः प्रमात्वानङ्गीकारात्साक्षि

(१) प्रवृत्त्युपपत्तिर्न सम्भवति प्रमिणोमीत्यादिः घपुस्तके ।

(२)+ ··· + चिह्नितः पाठो नास्ति घपुस्तके ।

चेन्न। दर्पणादिवत्स्वच्छत्वेन चित्प्रतिबिम्बग्राहकत्वाच्चित्तादात्म्याध्यासाद्वा। ननु नीरूपस्य निरवयवस्य

न्यायरत्नावली।

ऽध्येवमिति भावः+। स्वच्छत्वेन—प्रतिबिम्बसम्बन्धयोग्यत्वेन, चित्प्रतिबिम्बग्राहकत्वात्—साक्षिप्रतिबिम्बवत्त्वात्। तथा च साक्षिरूपज्ञानाधारत्वं मनस उपपन्नम्। प्रतिबिम्बत्वं हि मुखादेर्दर्पणादौ(१) अन्तराश्रितत्वम्, दर्पणस्यान्तर्मुखमस्तीत्यनुभवात्। तद्दृष्टान्तेन साक्षिणा मनस्यन्तराश्रितत्वम्, विशिष्टरूपेणाध्यासकल्पनात्। नन्वन्तराश्रितत्वसम्बन्धमात्रेण साक्षी मनोभासको न स्यात्, तादात्म्यस्यैव घटादौ साक्षिभास्यतानियामकत्वेन क्लृप्तत्वात्। (२) *अपि च साक्षितादात्म्यं विना अज्ञातघटादिप्रमार्थं मनसः प्रवृत्त्यनुपपत्तेरित्युक्तम्*। 'अहमि'ति प्रत्यये साक्षिमनसोस्तादात्म्यस्य भानं सर्वानुभाविकं च तत्राह—चित्तादात्म्याध्यासादिति। साक्षितादात्म्याध्यासादित्यर्थः। 'अविद्योपहितेऽहङ्कारोऽध्यस्यते, तदुपहिते कामादयः, तद्विशिष्टे स्थूलशरीर'मित्यादेः वक्ष्यमाणत्वात् अविद्योपहितसाक्षिणः (३)विशेषरूपेणाधारत्वेन भ्रमे स्फुरणम्, 'अज्ञोऽहमि'ति प्रत्ययात्। शुद्धचित्तु सर्वदृश्यानधिष्ठानमेव नाधार इति न विरोधः। 'इदं रजत'मित्यादिभ्रमे हि इदमादेराधारत्वेन रजततादात्म्येन स्फुरणे-

नारायणी।

णश्च तद्गुणत्वाभावादिति भावः। स्वतोऽसंभवेपि प्रतिबिम्बवैशिष्ट्येन संभवत्येवेत्याह—दर्पणेति। स्वच्छत्वेन—प्रतिबिम्बसम्बन्धयोग्यत्वेन, चिद्बिम्बेति—साक्षिप्रतिबिम्बवत्त्वादित्यर्थः। प्रतिबिम्बवत्त्वेप्यहं जानामीत्येकत्वेन कथं प्रत्ययस्तत्राह—चित्तादात्म्येति। प्रतिबिम्बात्मकचित्तादात्म्यभ्रमादित्यर्थः। नन्वात्मनः प्रतिबिम्ब एव कथं क्लृप्तसामग्र्यभावात्, तथाहि स्वाभिमुखोपाध्यभिहतैश्चक्षूरश्मिभिः परावृत्तैश्चाक्षुषद्वारा ग्री-

(१) दर्पणादाविव इति घपुस्तके। (२)*......* चिह्नितः पाठो नास्ति घपुस्तके।
(३) विशेष्यत्वरूपेणाधारत्वेनेति घपुस्तके।

कथं प्रतिबिम्ब इति चेत्, कात्रानुपपत्तिः ? विभ्रमहेतूनां विचित्रत्वात्। जपाकुसुमरूपस्य (१)नीरूपस्यापि स्फ

न्यायरत्नावली।

ऽपि शुक्तित्वादिविशिष्टस्याधिष्ठानस्य यथा अस्फुरणं तथा प्रकृतेऽपि। जीवेशयोर्मनोऽविद्याप्रतिबिम्बत्वपक्षे बिम्बचिदेव साक्षी, ईशस्य बिम्बत्वं जीवस्याविद्यायां प्रतिबिम्बत्वमिति पक्षे तु शुद्धचित्, वार्तिकमते तु अविद्याचिदाभासरूप (२)ईशस्साक्षीति पक्षत्रयं मूले वक्ष्यते। (३)तथाप्यविद्यायां तद्वृत्तौ वा प्रतिबिम्बितः जीवः साक्षीति पक्षान्तरमद्वैतसिद्धावुक्तम्। सर्वथापि साक्षिण एव ज्ञानत्वात्तस्यैव मनसि प्रतिबिम्बितत्वेन मनसो ज्ञानाश्रयत्वम्, तत्र मनस्तादात्म्याध्यासेन मनोभासकत्वं च बोध्यम्। उक्तानां त्रयाणां पक्षाणां मध्ये आद्ये असाक्षिणो जगदुपादानत्वे साक्षिणस्तद्वारा मनस्तादात्म्यम्। द्वितीये साक्षिण एव जगदुपादानत्वे(४) साक्षादेव तत्, अन्यथा तूपादानद्वारा। तृतीये तु साक्षिण एव जगदुपादानत्वात् साक्षादेव तत्। वस्तुतस्तु यत्पक्षे यस्साक्षी तदेवोपादानम्, अधिष्ठानस्यैवाध्यासिकतादात्म्येन भासकत्वात् अतस्साक्षादेव तादात्म्यम्। निरवयवस्येति। साक्षिण इति शेषः। विचित्रत्वात्—एकविधत्वाभावात्। सरूपस्येव नीरूपस्यापि प्रति-

नारायणी।

वास्थत्वाद्यग्रहादिदोषे सति बिम्बेऽभिमुखोपाध्यन्तर्गतत्वारोपरूपो 'मम मुखं दर्पणान्तर्गत'मित्यात्मकः प्रतिबिम्बभ्रमो जन्यते, तत्र बिम्बचाक्षुषं रूपाधीनम्, उपाधेराभिमुख्यं च सावयवत्वाधीनम्, अतः कथमात्मनः प्रतिबिम्बः रूपाभावादवयवाभावाच्चेत्याशङ्कते—नन्विति। सरूपसावयवस्येव निरूपनिरवयवस्यापि प्रतिबिम्बदर्शनेन सामग्रीभेदस्यावश्यवक्तव्यत्वान्नात्मनः प्रतिबिम्बेऽनुपपत्तिलेशोपीत्याह काका—कात्रेति। न कापीत्यर्थः। हेतुमाह—विभ्रमेति। विचित्रत्वान्नानाविधत्वात्। नानाविधत्वं समर्थयते

(१) नीरूपस्य निरवयवस्यापीति घपुस्तके। (२)—चिदाभासरूपम्, ईशः इति गपुस्तके। (३) तथापीति नास्ति घपुस्तके। (४) जगदुपादानत्वादिति गपुस्तके।

टिकादौ प्रतिबिम्बदर्शनाच्छब्दस्यापि प्रतिशब्दाख्य-प्रतिबिम्बोपलम्भात्तयोः सम्प्रतिपन्नप्रतिबिम्बवैलक्ष-

न्यायरत्नावली।

बिम्बभ्रमरूपकार्योपलम्भात् सरूपस्थलीयकारणाद्विलक्षणं कारणं नीरूपस्थले कल्प्यत इति भावः। (१)ननु प्रतिबिम्बस्य सरूपावयवत्वेन प्रतीतिः रूपावयवविशिष्टस्यैव हि मुखादेर्दर्पणाद्युपाध्यन्तर्गतत्वमारोपितं प्रतिबिम्बशब्देन व्यवह्रियते, तथा च कथं नीरूपादेः प्रतिबिम्बोक्तिस्तत्राह-जपाकुसुमेत्यादि। प्रतिशब्दाख्यप्रतिबिम्बेति। मठमध्यस्थपुरुषक(२)र्णावच्छिन्नत्वेन उपलभ्यमानशब्दस्य मठान्तरुपरिभागावच्छिन्नाकाशरूपोपाध्यन्तर्गतत्वेन प्रतीयमानत्वात् प्रतिबिम्बत्वमस्तीति प्रतिबिम्बीभूतशब्दबोधिका प्रतिशब्द इत्याख्या यस्येत्यर्थः। तथा च प्रतिबिम्बस्य सरूपसावयवत्वेनैव धीरिति न नियमः, किन्तूपाध्यन्तर्गतत्वरूपप्रतिबिम्बत्वेनैवेति भावः। सम्प्रतिपन्नप्रतिबिम्बेति। प्रति-

नारायणी।

रूपादिघटितसामग्र्या व्यभिचारमाह-जपेति। निरूपस्य-गुणानां गुणशून्यत्वेन रूपरहितस्य, निरवयवस्य-द्रव्यत्वाभावापराधेनावयवरहितस्य। प्रतिबिम्बदर्शनात्-उपाध्यन्तर्गतत्वारोपरूपप्रतिबिम्बदर्शनात्। तथा च स्फटिक एव तत्र व्यभिचार इति भावः। ननु साक्षात्परम्परासाधारणसम्बन्धेन रूपं हेतुः, रूपे च परम्परया धर्मिगतरूपादिकमस्ति अतो न व्यभिचार इत्यत आह-शब्दस्यापि इति। प्रतिशब्देति-बिम्बोपाधिका प्रतिशब्देत्याख्या यस्येत्यर्थः। प्रतिबिम्बोपलम्भादिति। मठमध्यस्थपुरुषकण्ठावच्छिन्नस्य मठोपरिभागावच्छिन्नत्वेन प्रतीत्येति भावः। नन्वरुणः स्फटिक इति भ्रमः पीतः शङ्ख इत्यनेन समानः, शब्दस्थले तु प्रतिध्वनिरूपं शब्दान्तरमेव जायतेऽतः कथं तदनुसारेण सामग्रीभेदकल्पनं तत्राह-तयोरिति। रूपशब्दप्रतिबिम्बयोरित्यर्थः। सम्प्रतिपन्नेति। प्रतिबिम्बत्वेन सर्वसम्मतमुखादिप्रतिबिम्बवैलक्षण्याप्रतीतेरित्यर्थः। उपाध्यन्तर्गतत्वरूपारोपितधर्मवि-

(१) न तु इति पाठः प्रामादिको गपुस्तके। ननु प्रतिबिम्बस्य सरूपसावयवत्वेनैव प्रतीतिः इति घपुस्तके। (२)—पुरुषकण्ठावच्छिन्नत्वेन इति घपुस्तके।

व्यानिरूपणात्। तथापीन्द्रियग्राह्यस्यैव प्रतिबिम्ब इ
चेन्न। व्यभिचारात्। अनिन्द्रियग्राह्यस्य साक्षिप्रत्य

न्यायरत्नावली।

बिम्बत्वेन सर्वसम्मतमुखादिप्रतिबिम्बेत्यर्थः। दर्पणाद्यन्तर्गतत्वे भ्रमो यावद्दर्पण(१)सन्निधानं तदनुवृत्तिश्च मुखादिप्रतिबिम्बे ऽस्ति, जपारूपादावपि स्फटिकाद्युपाध्यन्तर्गतत्वभ्रमो याव स्फटिकादूयुपाधिसान्निधानं तदनुवृत्तिश्चेति स्फटिकादौ भा यमानजपाकुसुमरूपादेः (२)मुखादिना साम्यमेव, न तु त ततो वैलक्षण्यं निरूपयितुं शक्यमिति भावः। शङ्कते-तथा पीति। नीरूपादेः प्रतिबिम्बस्वीकारेऽपीत्यर्थः। प्रत्य क्षस्येति—साक्षिभास्यस्येत्यर्थः। ननु नभसः मुखादिवत् सा क्षिभास्यत्वे अन्धस्यापि नभस्साक्षात्करोमीति व्यवहारः स्या दिति चेत्, स्यादेव। जाग्रत्स्वप्नयोर्हि भासमानमूर्तावच्छिन्नतया नभो भासत एव। ननूर्ध्वं व्यापृतचक्षुषो यावति नभोभागे सं योगो जायते तावानेव स भासते तस्मात् नभश्चाक्षुषमिति भा भाकरमतं न युक्तम्। किञ्च घटादौ भासमाने तदवच्छिन्नमेव नभं भातीति कुतस्सम्पूर्णमेव नभो भायात्। नभसश्चाक्षुषत्वे तु घटा दाविव नभस्यपि यावति भागे चक्षुषस्संयोगः तावानेव स भास

नारायणी।

शिष्टबिम्ब एव प्रतिबिम्बः, तादृशं च मुखमिव जपाकुसुमरूपशब्दादि कमपि प्रतीयत एवेति न तयोः प्रतिबिम्बत्वे सङ्कोचतेति भावः। ननु च क्षुर्योग्यत्वस्य व्यभिचरितत्वेऽपि बहिरिन्द्रिययोग्यत्वस्याव्यभिचरि तत्वात्कथं बहिरिन्द्रियायोग्यस्यात्मनः प्रतिबिम्ब इत्यभिप्रेत्याशङ्कते तथापीति। रूपादीनामनपेक्षायामपीत्यर्थः। अयमपि नियमो न युक्तो व्य भिचारादित्याह-नेति। व्यभिचारस्थलमाह-अनिन्द्रियेति। इन्द्रियाग्राह्य स्येत्यर्थः। साक्षिप्रत्यक्षस्य-साक्ष्येव प्रत्यक्षं यस्येति, साक्षिभास्यस्ये

(१) दर्पणोपाधिसन्निधानं तदनुवृत्तिश्चेति स्फुटं मुखादीत्यादिः घपुस्तके।
(२) दर्पणादौ प्रतीयमानमुखादिना इति घपुस्तके।

र्याकाशस्यापि जलादौ प्रतिबिम्बोपलम्भात्। अन्यथा

न्यायरत्नावली।

इति युक्तमिति चेन्न। यथा हि कालस्य साक्षिबोध्यत्वेऽपि भासमानघटाद्यधिकरणरू(१)पकाल एव तदा घटाद्याकारवृत्तेर्घटाद्यधिकरणक्षणावरणविरोधित्वस्वीकारेण तस्यैवानावृतसाक्षिसम्बन्धात्, तद्भानेनैव 'इदानीं घटः, इदानीं पट' इत्यादिप्रत्ययोपपत्तेश्च। (२)परोक्षज्ञानत्वे तु अतीतानागतक्षणानां वृत्तिविषयत्वस्वीकारादेव सर्वप्रत्ययेषु (३)विषयाधिकरणस्वक्षणविषयत्वनियमोपपत्तेश्च, तथा नभसस्साक्षिबोध्यत्वेपि भासमानघटाद्यवच्छिन्नस्यैव तस्य तद्घटाद्याकारवृत्तेरेव घटाद्यवच्छिन्नाकाशावरणविरोधित्वेन तस्यैवानावृतसाक्षिसम्बन्धात्तावतैव (४)घटाकाशः पटाकाश इत्यादिप्रत्ययोपपत्तेश्च। ऊर्ध्वं व्यापृतेन तु चक्षुषा यावानेवालोकभागो गृह्यते तावदवच्छिन्नाकाशं साक्षिणा गृह्यते। अन्धेनापि त्वचा गृह्यमाण एव घटादौ तदवच्छिन्नं नभः साक्षिणैव गृह्यते। यदि च तेन तमो गृह्यते, तदा तदवच्छिन्नं नभोऽपि। एवं मनसि गृह्यमाणे तदवच्छिन्नं नभोऽपि, शरीरस्यान्तर्बहिराकाशस्य प्रतीतेः। यदि च तमआद्यवच्छिन्नं नभो न प्रतीयत इत्यनुभवः तदा घटाद्याकारेन्द्रियजन्यमनोवृत्त्यभिव्यक्तसाक्षिभास्यं तदास्ताम्। नन्वाच्छादितमुखे घटादौ गृह्यमाणे तदन्तराकाशं साक्षिणा गृह्यतामिति चेन्न। अन्तर्भागस्येन्द्रियाद्यसंयुक्तत्वेन तत्र साक्षिणोऽनभिव्यक्ततया तदवच्छिन्नाकाशस्याभिव्यक्तसाक्षिसम्बन्धाभावात्। तस्मा-

नारायणी।

त्यर्थः। बहिरिन्द्रियग्राह्यस्येति वक्तव्ये इन्द्रियग्राह्यस्येति सामान्योक्तिर्मनस इन्द्रियत्वाभावमभिप्रेत्य। प्रतिबिम्बानङ्गीकारेऽनिष्टमाह-अन्यथेति।

(१)—करणक्षणरूपः काल एव तथा, घटाद्याकारवृत्तेरित्यादिः घपुस्तके।
(२) परोक्षज्ञानेप्यतीतेत्यादिः घपुस्तके। (३) विषयाधिकरणकालविषयत्वेत्यादिः गपुस्तके।
(४) घटाद्याकाशं पटाद्याकाशमित्यादीत्यादिः गपुस्तके।

(१) जानुमात्रेऽप्युदके अतिगम्भीरप्रतीतिर्न स्यात्
(२) आकाशप्रतिबिम्बस्य साक्षिभास्यत्वेऽपि अधिष्ठान-

न्यायरत्नावली ।

दाकाशाकारमनोवृत्तिं विनापि यद्देशावच्छेदेन साक्ष्यभिव्यक्तस्त-द्देशावच्छिन्ननभसस्तद्ग्राह्यतेति भावः । जानुमात्रेऽप्युदकेऽति-गम्भीरप्रतीतिरिति । जानुमात्रपरिमाणापेक्षयाऽधिकपरिमा-णविशिष्टस्याकाशभागस्य जानुमात्रोदकान्तर्गतत्वेन प्रतीतिरि-त्यर्थः । जानुद्वयादिपरिमिते जले अन्तर्गततया यावत आकाश-भागस्य धीस्तावतो जानुमात्रजलेऽपीति तदन्यथानुपपत्त्या तत्रो-परिस्थितस्य तावत आकाशस्य प्रतिबिम्बत्वमवश्यं वाच्यमिति भावः । ननूक्तव्यभिचारोक्तिर्न युक्ता, नभसोऽपि चाक्षुषत्वात् चक्षुषा हि जलाभिहतेन नभो गृहीत्वा तत्र जलान्तर्गतत्वमारो-प्यते, अन्यथा 'जानुद्वयादिपरिमितमाकाशमस्मिन्नुदकेऽन्तर्गत'-मिति भ्रमे चक्षुस्संयोगापेक्षा न स्यात्, उक्तभ्रमे आकाशस्य अधिष्ठानत्वेन अधिष्ठानज्ञानार्थं चक्षुरपेक्षेत्यस्य वक्तुमशक्यत्वात् तथा च निमीलितचक्षुषोऽपि पुंसः स स्यात् तत्राह—प्रतिबिम्ब-स्येत्यादि । अधिष्ठानग्रहणार्थमिति । (३)अधिष्ठानसाम-

नारायणी ।

अतिगम्भीरेति । जानुमात्रपरिमाणापेक्षयाऽधिकपरिमाणविशिष्टस्याकाशस्य जानुमात्रोदकान्तर्गतत्वेन प्रतीतिरित्यर्थः । परिमितापेक्षयाऽधिकबुद्धि-रधिकस्यान्तर्गतत्वारोपं विना बाधितैवेति भावः । तथाच तादृशस्या-नियमस्यात्रव व्यभिचार इति भावः । ननु यदि बिम्बस्य नेन्द्रियग्राह्य-त्वमपेक्षितं किन्तु यथाकथंचित् ज्ञानमात्रं तदाऽन्धादेरपि प्रतिबिम्बभ्रमा-पत्तिस्तत्राह-प्रतिबिम्बस्येति । उपाध्यन्तर्गतत्वरूपारोपितधर्मविशिष्टस्या-काशादेरित्यर्थः । अधिष्ठानग्रहणार्थम्-अधिष्ठानसामान्यांशग्रहणा-

(१) जानुदघ्नेप्युदके इति खपुस्तके ।
(२) प्रतिबिम्बस्य साक्षीत्यादिः खपुस्तके । आकाशप्रतिबिम्बस्य साक्षिभास्यत्वे-सालोकस्य साभ्रस्य प्रतिबिम्बितत्वात् तद्ग्रहणार्थम् अधिष्ठानग्रहणार्थमित्यादिः गपुस्तके ।
(३) अधिष्ठानसामान्यांशस्य चाक्षुषार्थमित्यर्थः इति घपुस्तके ।

ग्रहणार्थं चक्षुषोऽपेक्षणात्। एतेन नीलं नभ इत्यादिविभ्रमेऽपि चक्षुरन्वयव्यतिरेकौ व्याख्यातौ। तत्र सालोकस्याकाशस्याधिष्ठानत्वात्। तस्माच्चाक्षुषबिम्बमेव रू-

न्यायरत्नावली।

न्यांशरूपस्य जलस्य चाक्षुषार्थमित्यर्थः। आकाशभागविशेषशून्यजलस्योक्तभ्रममूलीभूताज्ञानविषयत्वरूपमधिष्ठानत्वम्, अतस्तत्सामान्यांशरूपजलज्ञानस्योक्तभ्रमहेतुत्वात्तादृशज्ञानार्थं चक्षुरपेक्षणेऽपि नभसश्चाक्षुषत्वासिद्ध्योक्तव्यभिचारोक्तिर्युक्तैवेति भावः। नन्वेवमपि 'नीलं नभ' इत्यादिभ्रमे नभस एवाधिष्ठानत्वात्तच्चाक्षुषार्थतया चक्षुरपेक्षणं वाच्यम्, तथा च नभसस्साक्षिमात्रवेद्यत्वहानिः; उक्तभ्रमे चक्षुरनपेक्षणे तु निमीलितचक्षुषोऽपि स स्यात्त्राह—एतेनेति। अधिष्ठानसामान्यांशभिन्नस्य साक्षिमात्रवेद्यत्वेऽप्युक्तांशज्ञानरूपस्य भ्रमकारणस्य निष्पत्तये चक्षुरपेक्षणमिति वचनेनेत्यर्थः। व्याख्यातौ—चक्षुषो भ्रमोपयोगिताग्राहकत्वेन सूचितौ। 'नीलं नभ' इति भ्रमश्चक्षुस्संयोगे सति भवति, असति च न भवतीत्यन्वयव्यतिरेकाभ्यां तादृशभ्रमकारणेऽधिष्ठानसामान्यज्ञाने चक्षुरपेक्षेति निर्णीयत इति भावः। ननु तथापि नभसश्चाक्षुषत्वमेवागतं तत्राह—तत्रेति। 'नीलं नभ' इति वाक्येन कथ्यमाने भ्रम इत्यर्थः। सालोकस्य—सालोकस्यैव। अधिष्ठानत्वात्—अधिष्ठानसामान्यांशरूपत्वात्। तथा च नभश्शब्देन सालोकं नभ

नारायणी।

र्थम्। तथा च बिम्बांशे ज्ञानमात्रमधिष्ठानांशे इन्द्रियजन्यमपेक्षितं तावतैवातिप्रसङ्गनिरासादिति दिक्। ननु कथं तर्हि 'नीलं नभ' इति विभ्रमोपपत्तिः भ्रमाधिष्ठानस्य नभसश्चक्षुरयोग्यत्वात् तत्राह-एतेनेति। अधिष्ठानसामान्यांशज्ञानार्थं चक्षुषोऽपेक्षेति वचनेनेत्यर्थः। चक्षुरिति। चक्षुःसंयोगे भ्रमस्तदभावे भ्रमाभाव इत्यन्वयव्यतिरेकौ व्याख्यातौ भ्रमोपयोगिताग्राहकत्वेन सूचितौ। कथं तत्राह-तत्रेति। 'नीलं नभ' इति वाक्येन कथ्यमाने भ्रम इत्यर्थः। सालोकस्य—आलोकविशिष्टस्य भ्रमकारणीभूताज्ञानविष-

पसापेक्षं नान्यदित्यवधेयम् । तथाऽप्यात्मनः प्रतिबि
किं प्रमाणमिति चेत्, शृणु । 'रूपं रूपं प्रतिरूपो बभू

न्यायरत्नावली।

एव कथ्यत इति भावः । नन्वेवं सालोकाकाशस्यैव जले प्रति
म्ब इति वक्तुं शक्यत्वादिन्द्रियग्राह्यस्यैव प्रतिबिम्ब इति नियमे
व्यभिचार उक्तः? इति चेन्न। चक्षुरपेक्षणान्यथानुपपत्त्या नभोने
भ्रमे सालोकाकाशस्यैव भानम्, जले आकाशप्रतिबिम्बभ्रमे
सालोकनभसो नियमेन भाने मानाभावः तत्र चक्षुरपेक्षणस्य
रूपाधिष्ठानग्रहणार्थत्वेनैवोपपन्नत्वादिति भावः । ननु यत्र यत्र
तिबिम्बभ्रमस्तत्र तत्रोपाधिना संयुक्तास्तेनाभिहताश्चक्षूरश्मयो बिम्बे
सह पश्चात्संयुज्य बिम्बे चाक्षुषमुत्पादयन्ति, पश्चाद् बिम्बे उ
ध्यन्तर्गतत्वमारोप्यत इति क्रमनियमः, तथा च रूपं विना बिम्ब
भूतद्रव्यचाक्षुषाभावात्कथं नभसः प्रतिबिम्बत्वमुक्तं तत्राह-तस्मा
दिति । इन्द्रियग्राह्यस्यैव प्रतिबिम्ब इति नियमाभावादित्यर्थः
चाक्षुषप्रतिबिम्बं-चाक्षुषद्रव्यस्य प्रतिबिम्बम् । रूपसापेक्षम्-उक्त
रीत्याऽपेक्षितबिम्बचाक्षुषजनकरूपसापेक्षम् । तथा च सर्वत्र प्र
बिम्बभ्रमे नोक्तक्रमनियम इति नभःप्रतिबिम्बे (१)बाधकाभाव इ
भावः । किं प्रमाणमिति । ननूक्तरीत्या प्रमाश्रयत्वान्यथानुप

नारायणी ।

यत्वात्, तथाच नभःशब्देन सालोकं नभः कथ्यते, तत्र च आलोका
सामान्यांशस्तस्य चक्षुषा ज्ञानं सम्भावितमेवेति न तत्र व्यभिचार इ
भावः। उपसंहरति-तस्मादिति । सर्वत्र भ्रमे रूपादीनां कारणत्वे व्यभि
रादित्यर्थः। चाक्षुषप्रतिबिम्बं-चाक्षुषपदार्थस्य प्रतिबिम्बं रूपसापे
साक्षात्परम्परया वा रूपसापेक्षं नान्यत्-न प्रतिबिम्बान्तरम्। अस्तु नी
पनिरवयवस्यात्मनः प्रतिबिम्बे बाधकाभावस्तथापि साधकं तु किमि
पृच्छति शिष्यः-तथापीति । निरूपनिरवयवस्य प्रतिबिम्बोपपादने इत्यर्थ
किं मानम् ? आकाशादीनामिवावश्यकं प्रमाणम्। रूपमिति । रूप्यतेऽहमि

(१) बाधकाभावादिति गपुस्तके ।

न्यायरत्नावली ।

त्तिर्मनस आत्मप्रतिबिम्बवत्त्वे मानमित्यस्योक्तत्वात्कथं पुनर्मानप्रश्न इति चेत्, उच्यते । प्रमिणोमीत्यादिप्रत्यये प्रमातादात्म्यमेव भाति, न तु प्रमाश्रयत्वम् । भातु वा तदेव, तथापि प्रमाया अज्ञातविषयकज्ञानरूपत्वात् ज्ञानस्य चासत्त्वापादकाज्ञानविषयत्वाभावप्रयोजकविशिष्टचिद्रूपत्वात्तादृशचिद्रूपस्यैव ब्रह्मणीव मनस्यप्याश्रयत्वं कल्पितं स्वीक्रियते । अत एव 'आनन्दो विषयानुभवः नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त' इत्यादिपञ्चपाद्युक्त्या निर्धर्मकब्रह्मणो धर्मो देहादौ कथमध्यस्यत इति पूर्वपक्षस्समाहितः। तथा च तत एव 'ब्रह्मणि ज्ञान'मितिवत् 'मयि ज्ञानम्, अहं ज्ञानवा'निति व्यवहारः । न च अहं जानामीतिवद्घटो जानाती'ति व्यवहारः स्यादिति वाच्यम् । (१)उक्ताज्ञानविरोधिविशिष्टचिद्रूपज्ञानस्य ब्रह्मधर्मस्य देहमनसोरेव संसर्गाध्यासात् पूर्वपूर्वतदध्याससंस्काररूपकारणस्य तयोरेव सम्भवेन तयोरेव तदध्यासस्वीकारादुक्तज्ञानसमानाधिकरणतदनुकूलव्यापारविशेषस्यैवोक्तव्यवहारविषयत्वेन तस्य घटादावसत्त्वात् । तथा (२)चासत्त्वापादकाज्ञानविरोधिविशिष्टरूपेण चितो मनआश्रितत्वस्वीकारेऽपि साक्षिणो मनस्यन्तर्गतत्वरूपप्रतिबिम्बितत्वे न मानम् । अत एव वाचस्पतिमते तत्र स्वीक्रियत इति श्रुतेरेव तत्र मानतां वक्तुं किं प्रमाणमिति प्रश्नोपन्यासः । रूपमिति । रूप्यते अहमिति धिया व्यवह्रियते आत्मा येन मनसा तत् (३)रूपम्, रूपं रूपं प्रति प्रतिरूपः । प्रतिबिम्बशब्दस्येव बिम्बस्वरूपार्थकरूपपदान्तकस्य प्रतिरूपशब्दस्यापि प्रतिबिम्बार्थकत्वात् । 'स पक्षी भूत्वा पुरः पुरुष आविशदि'ति पूर्ववाक्येन मनोरूपासु पूर्षु तदन्तर्गतत्वरूपस्य प्रवेशस्योक्तत्वात्तदुत्त-

(१) उक्तरूपज्ञानस्य ब्रह्मधर्मस्य देहमनसोरेव संसर्गाध्यासात् संस्काररूपकारणस्यानयोरेव सम्भवेन इत्यादिः घपुस्तके । (२) तथाचोक्तज्ञानत्वविशिष्टरूपेणेति घपुस्तके ।

(३)--तत् रूपं रूपं प्रतिरूपः इति सर्वत्र सङ्कुचितः पाठः युक्तत्वादत्र वर्धितोऽस्माभिः।

तदस्य रूपं प्रतिचक्षणाय, मायाभासेन जीवेशौ करोति
त्यादिश्रुतिः 'एकधा बहुधा चैव दृश्यते जलचन्द्रवदि

न्यायरत्नावली।

रेण 'तदेतदृषिः पश्यन्नवोचद् रूपं रूपं प्रतिरूपो बभूवे'तिवाक्ये
क्तप्रवेशस्यैवोक्तेर्युक्तत्वात्। तदिति। प्रतिबिम्बात्मकमित्यर्थः।
तिचक्षणाय—अहमित्यादिव्यवहाराय। माया—अविद्या, आ
सेन—स्वगतप्रतिबिम्बेन, जीवेशौ—प्रतिबिम्बबिम्बरूपौ, करो
सर्वान्प्रति व्यवहारयति। जीवत्विषयकव्यवहारस्याभासप्रयुक्त
स्फुटमेव। ईशविषयकस्यापि व्यवहारस्य तदस्त्येव। (१)जीवत्वे
पहितचिद्रूपस्य आभासप्रयुक्तत्वेन ईशप्रयुक्तस्येशत्वविषयकव्यवहा
स्येशद्वारा आभासप्रयुक्तत्वसम्भवात्। इत्यादिश्रुतिरित्यादिपदे

यथा ह्येको ज्योतिरात्मा विवस्वा-
नपो भिन्ना बहुधैकोऽनुगच्छन्।
उपाधिना क्रियते भेदरूपो
देवः क्षेत्रेष्वेवमजोऽयमात्मा॥

इत्यादिश्रुतयो ग्राह्याः। एकधेत्यादि। परमार्थत एकरूप ए
त्मा, तथाप्युपाधिप्रतिबिम्बितबहुप्रकारैर्दृश्यते प्रतीयते, जलप्र
बिम्बितनानाप्रकारैश्चन्द्र इवेत्यर्थः।

नारायणी।

धिया व्यवह्रियते येनान्तःकरणेन तद्रूपम्, रूपं रूपं प्रत्यन्तःकरणं प्रति
पः प्रतिबिम्बरूपः, तद्रूपं प्रतिबिम्बात्मकम् अस्य परमात्मनः प्रतिचक्ष
अहमिति व्यवहाराय। श्रुत्यन्तरम्—जीवेशाविति। आभासेन—स्वग
प्रतिबिम्बेन, करोति—सर्वान्प्रति व्यवहारयति। इत्यादिश्रुतिः—साक्षात्
तिबिम्बार्थकश्रुतिः। आदिना—

यथा ह्येको ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेव मजोयमात्मा॥

इत्यादिपरिग्रहः। एकधा—एकप्रकारः, बहुधा—बहुप्रकारः, दृश्यते

(१) बिम्बत्वोपहितचिद्रूपस्येशस्याभासेत्यादिः घपुस्तके।

स्मृतिः। 'स एष इह प्रविष्ट आनखाग्रेभ्यः' स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत, तत्सृष्ट्वा तदेवानुप्राविशद्'-दित्यादिप्रवेशश्रुत्यर्थापत्तिः, 'आभास एव च, अत एव

न्यायरत्नावली ।

एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।

इति पूर्वार्धम् । तदित्यादि । तत् जगत् सृष्ट्वा ब्रह्म तदेव जगत् अनुप्राविशदित्यर्थः । यद्यप्यविद्यायां मनसि च प्रतिबिम्बरूपः प्रवेशः, न तु शरीरघटादौ;(१) तथाप्यविद्यामनस्तद्वृत्तिद्वारा सर्वत्र दृश्ये प्रवेशः । अतीन्द्रियार्थेष्वपीश्वरीयमायावृत्तिविशिष्टरूपेषु प्रतिबिम्बत्वरूपप्रवेश इति बोध्यम् । न चैवमीश्वरीयमायावृत्तिद्वारैव सर्वत्र प्रवेशसम्भवात् मनस्तद्वृत्तिषु प्रवेशस्य प्रकृतश्रुतिबोध्यत्वे मानाभाव इति वाच्यम् । 'रूपं रूप' मित्यादिश्रुत्या—

पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः ।
पुरः स पक्षी भूत्वा पुरः पुरुष आविशत् ॥

इत्यादिपूर्विकया मनःप्रवेशस्यैव प्रतीतेः । 'स एष इह प्रविष्ट आनखाग्रेभ्य' इत्यादिपूर्विकया 'प्राणन्नेव प्राणो नाम भवति वदन्वागि' त्यादिश्रुत्या च तथैव प्रतीतेः । श्रुत्यर्थापत्तिः—श्रुतेर-

नारायणी ।

प्रतीयते । उपाधौ प्रतिबिम्बितः सन्निति शेषः । दृष्टान्तमाह—जलचन्द्रवदिति । यथा वस्तुत एक एव चन्द्र उपाधौ प्रतिबिम्बितः सन्नानाकार उपलभ्यते । 'एक एव तु भूतात्मा भूते भूते व्यवस्थित' इति पूर्वार्धम् । श्रुत्यन्तरमाह—स एष इति । स एषः परमात्मा इह—ब्रह्मादिस्तम्बपर्यन्तेषु देहेषु प्रविष्टः—प्रतिबिम्बीभूतः । स एष इति सामानाधिकरण्याज्जीवात्मना प्रविष्ट इति लभ्यते । आनखाग्रेभ्यः—नखाग्रं मर्यादीकृत्य । सकलदेहावच्छेदेनैवाहमित्यभिमानादित्थमुक्तम् । श्रुत्यन्तरमाह—तदिति । तदाकाशादिकार्यम्, सृष्ट्वा—उत्पाद्य, तदेव—आकाशादिकार्यमेव, अनुप्राविशत्—तदन्तर्गतत्वेनाभिव्यक्तो बभूव । प्रवेशश्रुत्यर्थापत्तिः—प्रवेशश्रुतेरन्यथानुपपन्नत्वधीः । साव-

(१) न तु शरीरघटादाविति । तेषां स्वच्छत्वाभावेनेति भावः ।

चोपमा सूर्यकादिव'दित्यादिसूत्राणि च तत्र तत्र भा-

न्यायरत्नावली।

न्यथानुपपन्नत्वधीः। प्रवेशबोधनमात्रेण न मनसि प्रतिबिम्बलाभः, अधिष्ठानतयापि प्रवेशसम्भवात्; परन्तु घटादावप्यधिष्ठानतया प्रवेशसम्भवान्नखाग्रपर्यन्तप्रवेशस्य मनस्येवोक्तेः प्रतिबिम्बत्वरूप-मनोन्तर्गतत्वरूपप्रवेशविशेषतात्पर्यकत्वं विनाऽनुपपन्नत्वग्रहाल्लक्षणया तादृशप्रवेशबोधनमिति भावः। 'आभास एव चे'त्यस्य द्वितीयाध्यायतृतीयपादस्थसूत्रस्यायमर्थो भाष्योक्तः-'आभास एव च एष जीवः परस्यात्मनो जलसूर्यकादिवत्प्रतिपत्तव्यः न स एव साक्षात्। नापि वस्त्वन्तरम्। ततश्च यथा नैकस्मिन् जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते एवमेकैकस्मिन् जीवे कर्मफलसम्बन्धिनि जीवान्तरस्य न तत्फलसम्बन्ध' इति। 'अत एव चोपमा सूर्यकादिवदि'ति तृतीयाध्यायाद्वितीयपादस्थसूत्रस्यायं भाष्योक्तार्थः-'यत एकोयमात्मा निर्विशेषचिद्रूपो 'नेति नेती'त्यादिश्रुतिप्रमितः, अत एवापारमार्थिकीं विशेषवत्तामभिप्रेत्य जलप्रतिबिम्बितसूर्यवदित्युपमोपादीयते 'यथा ह्येको ज्योतिरात्मा विवस्वानि'त्यादिवाक्येष्विति। इत्यादीत्यादिपदेन 'अम्बुवदग्रहणा-

नारायणी।

काशद्रव्यान्तर्नयनरूपस्य प्रवेशशब्दार्थस्य निरवयवेऽसम्भवात्। प्रवेशपदस्य प्रतिबिम्बपरत्वमेवाद्रियत इति भावः। नायं श्रुत्यर्थः स्वकल्पितः किन्तु भगवद्बादरायणसंमत इति ज्ञापयितुं सूत्राण्युदाहरति-आभास एव चेत्यादि अयमर्थः। आभास एवायं जीवः परमात्मनोऽवगन्तव्यो न स एव नापि वस्त्वन्तरम्, यथा जलसूर्यः-सूर्यप्रतिबिम्बः। सूत्रान्तरमुदाहरति-अत एवं यतोयमात्मा निर्विशेषः श्रुतिषु प्रमितः-अतएव सूर्यकादिवत्-सूर्यप्रतिबिम्बवत्, उपमा 'यथा ज्योतिरात्मे'त्याद्युपमा भवतीत्यर्थः। तत्रैवात्रापि बिम्बप्रतिबिम्बयोरभेद इति भावः। नन्वात्मनः प्रतिबिम्बः सत्यो मिथ्या वा? नाद्यः। प्रतिबिम्बस्य सत्यत्वानुपपत्तेः। नान्त्यः। मोक्षभागित्वानुपपत्तेरि-त्याशङ्क्य सिद्धान्ते मोक्षभागितायाः शुद्ध एव व्यवस्थापयिष्यमाणत्वा-

नानि । तस्य च प्रतिबिम्बस्य सत्यत्वमेवेति प्रतिबिम्ब-

न्यायरत्नावली ।

नु न तथात्वम्, वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्, दर्शनाच्चे' ति सूत्राणि गृह्यन्ते । मूर्तसूर्यदेशापेक्षया दूरदेशस्थत्वं सूर्यप्रतिबिम्बोपाधेरम्बुनो गृहीतम्, तथा (१)मूर्तात्मदेशापेक्षया दूरदेशस्थत्वं च मनसो न दृष्टम् । अतो नात्मनो मनसि प्रतिबिम्बोदयः । उपमावाक्यं तु वृद्धिह्रासभाक्त्वं यथा जलगतसूर्यके प्रतीयते, तथा मनोगतमात्मनीति बोधयति, (२)न तु यथा जले सूर्यस्यान्तर्भावः सूर्यप्रतिबिम्बत्वम्, तथा मनस्यात्मन इत्याद्यसूत्रार्थः । 'अहं सुखी दुःखी'त्यादिप्रत्ययेष्वात्मनोन्तर्भावरूपं प्रतिबिम्बत्वमादायैव वृद्धिह्रासभाक्त्वमेव पूर्वोक्तोपमावाक्येन बोध्यते, न त्वन्तर्भावं त्यक्त्वा, उभयोर्विप्रकृष्टमूर्तप्रतिबिम्बस्य सन्निकृष्टामूर्तप्रतिबिम्बस्य च सामञ्जस्यादुपपन्नत्वात्, सन्निकृष्टामूर्ताकाशादेर्जलादाविव तादृशात्मनोऽपि अहङ्कारप्रत्ययेन मनस्यन्तर्भावासिद्धिः भ्रमहेतूनां नानाविधानामनुभवबलेन कल्पनादिति द्वितीयसूत्रार्थः । 'स पक्षी भूत्वा पुरः पुरुष आविश'दित्यादिश्रुत्या आत्मनो मनोन्तर्भावोक्तिदर्शनाच्चोक्तार्थः प्रामाणिक इति तृतीयसूत्रार्थः । ननु (३)'प्रतिबिम्बस्योपाध्यन्तर्गतत्वाविशिष्टबिम्बरूपत्व'मिति विवरणकारादिमते मनःप्रतिबिम्बस्वरूपस्य चिद्रूपत्वादहमित्याकारधीविषयत्वं युक्तम्, 'तद्धियश्चेतनविषयकत्वात्प्रतिबिम्बस्वरूपमुपाध्यन्तर्गतमारोपितं मिथ्ये'ति वार्तिककारादिमते तु तस्य कथमहमित्याकारधीविषयत्वं तत्राह—तस्येत्यादि ।

नारायणी ।

त्यक्ते तच्चिन्तनमनतिप्रयोजनकमित्यभिप्रायेणोपेक्षते–तस्येति । प्रतिबिम्ब-

(१) तथा मूर्तत्वमात्मनः आत्मदेशापेक्षयेत्यादिः घपुस्तके ।

(२) न तथात्वं यथा जले सूर्यस्यान्तर्भावरूपप्रतिबिम्बत्वमित्यादिः घपुस्तके ।

(३) 'प्रतिबिम्बरूपं सत्यमिति' इति घपुस्तके ।

वादिनः । मिथ्यात्वमेवेत्याभासवादिनः । स्वरूपे तु विवाद एवेत्यन्यदेतत् । अचेतनाविलक्षणत्वन्तु श्रुतिसिद्धम् अनुभवसिद्धं च तस्मात्सिद्धमन्तःकरणस्य प्रतिबिम्बाध्यासद्वारा प्रमातृत्वम् । ननु अध्यासोऽपि नोपपद्यते ।

न्यायरत्नावली ।

श्रुतिसिद्धमिति । 'तदस्य रूपं प्रतिचक्षणाय' इत्यादिश्रुतिसिद्धमित्यर्थः । मिथ्यात्वपक्षेऽपि तस्याधिष्ठानीभूतचित्तादात्म्याध्यासाच्चेतनत्वमिति भावः । अनुभवसिद्धम्—अहं चेतन इत्याद्यनुभवसिद्धम् । एवं च मनसि चित्प्रतिबिम्बे श्रुत्यादिसिद्धे तत एव प्रमाश्रयत्वं तत्रोपपादनीयम् । प्रेमास्पदत्वनित्यत्वादेर्ब्रह्मधर्मस्य दृश्यमात्रे संसर्गाध्यासस्वीकारेऽपि देहमनसोरेव ज्ञानरूपब्रह्मधर्मसंसर्गाध्यास इति कल्पने मानाभावात् । वाचस्पतिमते त्वमूर्तस्य प्रतिबिम्बास्वीकारेऽपि स प्रामाणिक इत्याशयेनाह-तस्मादिति । चित्प्रतिबिम्बस्य प्रामाणिकत्वादित्यर्थः । प्रतिबिम्बेति । अविद्योपहितचित्प्रतिबिम्बेत्यर्थः । प्रमातृत्वं—प्रमाश्रयत्वम् । नन्वध्यासोऽपीत्यादि । मनसः प्रमातृत्वानुपपत्तिम्

नारायणी ।

स्य सत्यत्वं-बिम्बात्मतामादायाबाधितत्वम्, अनिर्वचनीयख्यात्यनुरोधेनातिरेक्यमादाय शुक्तिरजतादिवत्कल्पितत्वम् । अन्यदेतत्-विचारान्तरम् प्रकृतविचारानर्हं तत्र शङ्काया अग्रे व्यवस्थापयिष्यमाणत्वादिति भावः सत्यत्वमिथ्यात्वयोर्यदि न निर्णयस्तदेदंरूपात्सम्प्रतिपन्नप्रतिबिम्बाद्वैलक्षण्यसिद्धिः कथं ? तत्राह-अचेतनेति । अचेतनात् इदंरूपात् सुखादिप्रतिबिम्बात् विलक्षणत्वं-चित्स्वरूपत्वं श्रुतिसिद्धं-'योयं विज्ञानमय'इत्यादिश्रुतिसिद्धम् । श्रुतेस्तत्परत्वे विवदमानं प्रत्याह-अनुभवेति । अहं चेतन इति प्रतीतिसिद्धमित्यर्थः । उपसंहरति-तस्मादिति । चित्प्रतिबिम्बस्य चेतनत्वादिना प्रामाणिकत्वादित्यर्थः । प्रतिबिम्बाध्यासद्वारा-प्रतिबिम्बतादात्म्याध्यासद्वारा, प्रमातृत्वं-प्रमातृरूपता । अध्यासमूलकं प्रमातृत्वमुक्तम्, अध्यास एव तु कथं क्लृप्तसामग्र्यभावादित्यभिप्रेत्याक्षिपति-नन्विति । अपिशब्दादध्यासमूलकप्रमातृत्वासम्भवं समर्थयिष्यन्नादौ विकल्पयति

तथा हि—आत्मनि वाऽनात्मा अध्यस्यते अनात्मनि वा आत्मा ? नाद्यः। तस्य निस्सामान्यविशेषत्वेन सर्वदा भासमानत्वेन सादृश्यादिरहितत्वेन चाधिष्ठानत्वासम्भवात् । नापि द्वितीयः । तस्य मिथ्यात्वाभ्युपगमात् ।

न्यायरत्नावली।

त्प्रतिबिम्बाध्यासेन निरासो न युक्तः, अध्यासस्यात्रानुपपत्तेरित्यर्थः। निस्सामान्येत्यादि। आत्मनः स्वप्रकाशत्वेन सदा भानात्सादृश्यादिदोषहीनत्वाच्च नाधिष्ठानता। अज्ञातं हि दोषसंसृष्टमधिष्ठानं भवति । ननु चिद्रूपेणात्मा स्वप्रकाशः न तु पूर्णानन्दरूपेण, तथा चेदन्त्वेन ज्ञातापि शुक्तित्वेनाज्ञाता शुक्तिरिव सोऽधिष्ठानं स्यात् अत उक्तं—निस्सामान्यविशेषत्वेनेति । चिद्रूपः सामान्यांशः धर्मिणि भासमानत्वात्। पूर्णानन्दस्तु विशेषांश इति विभागस्याप्यध्यासत्वेन अध्याससामान्यप्रति न तस्योपपादकतेति भावः। तस्य—अनात्मनः। मिथ्यात्वाभ्यु-

नारायणी।

तथाहीति । अध्यासे ज्ञातसामान्यधर्मवत्त्वम्-अज्ञातविशेषवत्त्वम् अधिष्ठानावरणम् आरोप्याधिष्ठानयोः सादृश्यम्, अधिष्ठानारोप्ययोर्भेदाग्रहश्च (१)दोषसामग्री, न चैते निर्धर्मके आत्मनि सन्ति अतो नाध्याससम्भव इत्याशयेनाह--निःसामान्येति । अधिष्ठानत्वासम्भवादित्यत्रान्वेति । निर्गतौ सामान्यविशेषौ यस्मात्स निःसामान्यविशेषस्तस्य भावस्तत्त्वम्, सत्त्वपरिपूर्णानन्दत्वादिसामान्यविशेषधर्मरहितत्वं तेनेत्यर्थः। सत्त्वं--सामान्यधर्मः, परिपूर्णानन्दत्वं--विशेषधर्म इत्यादि सामान्यविशेषभावस्याप्याध्यासिकत्वादिति भावः। सर्वदा भासमानत्वेन-वृत्तितदभावकालेऽपि स्वतः स्फूर्तिमत्त्वेन, निर्धर्मकत्वमेव सादृश्याभावे आदिपदोक्तदोषाभावे च हेतुर्बोध्यः, अधिष्ठानत्वासम्भवात्-अध्यासकारणीभूताज्ञानविषयत्वासम्भवात् । तस्य—अनात्मनः। मिथ्या-

(१) सादृश्यादीति मूलस्थेनादिपदेनोपात्तेषु अध्याससामग्रीघटकेषु दोषसामग्रीत्वमुक्तं टीकाकृता तन्मन्दम्। अपि तु दोषोप्यध्याससामग्रीत्वेनैव निर्वाच्यः तथैव सर्वत्र स्वीकारादिति ।

मिथ्यावस्तुनोऽधिष्ठानत्वे शून्यवादप्रसङ्गात्। तस्य च स-त्यत्वे तदनिवृत्तेरनिर्मोक्षप्रसङ्गाच। न हि सत्यं कश्चि-न्निवर्तते निवर्त्यमानं वा ज्ञानेन। श्रुतयश्च-'भिद्यते हृद-

न्यायरत्नावली।

पगमात्-सिद्धान्तिना स्वरूपतो मिथ्यात्वस्वीकारात्। मिथ्याव-स्तुनः—मिथ्यास्वरूपस्य। शून्यवादप्रसङ्गात्-शून्यवादिनं प्र-त्यापादितदोषप्रसङ्गात्+(१)सर्वस्य मिथ्यात्वे हि ज्ञानानां बाध्य-बाधकत्वव्यवस्था न स्यात्+प्रमयैव भ्रमो बाध्यते। शून्यवादे च सर्वस्य मिथ्यात्वात् न प्रमास्तीति बाध्यबाधकभावो न का-पीति दोष आपादितः। तस्य-अनात्मनः। अनिर्मोक्षेति। नि-श्शेषसंसारोच्छेदाभावेत्यर्थः। निवर्तते-उच्छिन्नं भवति। ननु प्रा-श्वसत्यतामते घटादिकं दण्डादिप्रहारेणोच्छिद्यत एव तत्राह-नि-वर्त्यमानमिति। उच्छिद्यमानमित्यर्थः। सत्यमित्यनुषज्यते। तथा च सत्यं यत् तत् ज्ञानोच्छेद्यं न भवतीत्यर्थः। ननु सेतुदर्शना-

नारायणी।

त्वेति। स्वरूपतो बाधितत्त्वरूपमिथ्यात्वस्वीकारादित्यर्थः। ननु वस्तु-त्या बाधितस्यैव शुक्त्यादिवदधिष्ठानत्वमस्तु तत्राह—मिथ्यावस्तुन इति। बाधितवस्तुन इत्यर्थः। अधिष्ठानत्वे च-आत्माध्यासाधिष्ठानत्वे तु। शून्यवादप्रसङ्गात्-सर्वमिथ्यात्ववादप्रसङ्गात्। अध्यस्ताधिष्ठानयोर्द्वयो-रपि मिथ्यात्वप्राप्तेरिति भावः। ननु मिथ्यात्वमनात्मनोऽसम्प्रतिपन्नमतो न दोषस्तत्राह—तस्येति। तस्य-अनात्मनः। चस्त्वर्थो विभिन्नक्रमः सत्य-त्वे त्वित्यर्थः। तदनिवृत्तेः-तस्य अनात्मनः अनिवृत्तेः—अबाधात्। अनिर्मोक्षप्रसङ्गात्-परिपूर्णानन्दस्वरूपात्मनाऽनवस्थितिप्रसङ्गात्। मि-थ्यावस्त्वेव बाध्यमित्यत्र युक्तिमाह—नहीति। सत्यं-परमार्थसद्रूपं त्रिका-लाबाध्यम्, निवर्तते—बाधितं भवति। अबाध्यस्य बाध्यत्वायोगादिति भावः। ननु वर्तमानकालेऽबाधात्त्रैकालिकबाधविधुरत्वे घटादेर्मुद्गरप्र-हारादिना पापादेः प्रायश्चित्तज्ञानादिना नाशदर्शनात् कथं सत्यं न नि-वर्तते—तत्राह निवर्त्यमानं वेति। नश्यमानं चेत्यर्थः। ज्ञानेन—अधिष्ठान-

(१)+ … + चिह्नद्वयमध्यगः पाठो घपुस्तके नास्ति।

यग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि त-

न्यायरत्नावली।

दिना पापादिकं सत्यमुच्छिद्यत एव परमत इति चेन्न। ज्ञानशब्द-स्य स्वप्रयोजकाज्ञानसमानविषयकज्ञानार्थकत्वात्। तथा च यद-सत्यं तत् स्वप्रयोजकाज्ञानसमानविषयकज्ञानेनोच्छिद्यत इत्यर्थः। स्वपदं ज्ञानपरम्। तादृशश्च ब्रह्मज्ञानमेव। भिद्यत इत्यादि। हृदयस्याहङ्कारचित्तादात्म्याध्यासस्य ग्रन्थिरिव मूलीभूतमज्ञानम् भिद्यते विदार्यते आवरणशक्तिमुच्छिद्य भोगसमाप्तिपर्यन्तं विक्षेप-शक्तिमात्रविशिष्टं स्थाप्यते। शक्तिद्वयानङ्गीकारे अज्ञानस्वरूपमु-च्छिद्य तत्कार्यसंस्कारदेहादिमात्रं स्थाप्यत इत्यर्थः। सर्वसंशयाः— आत्मा कर्ता न वा? अकर्तापि भोक्ता न वा? अभोक्तापि ब्रह्म न वेत्यादिसंशयाः। छिद्यन्ते—भिद्यन्तेआवरणशक्तिरूपमूलोच्छेदादु-त्पत्त्ययोग्याः क्रियन्त इति यावत्। कर्माणि—अभुज्यमानानि पूर्वसञ्चितपापपुण्यानि। क्षीयन्ते(१) *उपादानीभूतविक्षेपशक्तिवि-शिष्टाज्ञानसत्त्वपर्यन्तं विद्यमानान्यपि* स्वाश्रये मनसि सुखादिकं न जनयन्ति। 'तस्य पुत्रा दायमुपयान्ति सुहृदः साधुकृत्यां द्विषन्तः

नारायणी।

क्षात्कारेण, सत्यं दृष्टमिति शेषः। शुक्त्याद्यात्मकाधिष्ठानसाक्षात्कारना-श्यस्य शुक्तिरजतादेस्त्रैकालिकाभावप्रतियोगित्वरूपमिथ्यात्वदर्शनात्। ब्रह्मसाक्षात्कारनाश्यस्यानात्मनोऽपि त्रैकालिकबाधप्रतियोगित्वरूपमि-थ्यात्वमावश्यकमिति भावः। यथा च त्रिकालबाध्यत्वेऽपि सत्यादि-व्यवहारोपपत्तिस्तथोपरिष्टाद्व्यक्तीभविष्यति। मिथ्यात्वेन सह गृहीतव्या-प्तिकस्य ज्ञाननाश्यत्वहेतोरनात्मजातवृत्तित्वज्ञानसंपत्तये श्रुतिमुदाहर-ति-भिद्यत इत्यादि। हृदयग्रन्थिः—हृदयस्यान्तःकरणस्य ग्रन्थिरिव ग्रन्थिः, हृदयवृत्तिवासनामूलमज्ञानम्, भिद्यते—भेदं विनाशमायाति। सर्वसंश-याः—अहं भोक्तृकर्तृस्वरूपो न वेत्यादिसन्देहाः। छिद्यन्ते—उच्छिद्यन्ते, तत्कारणीभूतावरणनाशात्। अस्य—निवृत्ताविद्यस्य, कर्माणि—सञ्चि-

(१)*···*चिह्नद्वयमध्यस्थपाठो घपुस्तके नास्ति।

स्मिन् दृष्टे परावरे ॥' 'तमेव विदित्वातिमृत्युमेति, ना-
न्यः पन्था विद्यते अयनाय ।' 'तरति शोकमात्मवि-
दि(१)त्याद्याः ज्ञानात्सर्वसंसारनिवृत्तिं दर्शयन्त्यः नाश-
च मिथ्यात्वं सूचयन्ति । 'एकमेवाद्वितीयम्' 'अनोऽन्यदा-

न्यायरत्नावली ।

पापकृत्याम्' इति श्रुत्या ज्ञानिनः पुण्यादिना तदीयसुहृदादौ फल-
जननोक्तेः । (२)=उक्तप्राप्त्यस्वीकारे तु नश्यन्तीत्यर्थः=। अस्य-
दृष्टतत्त्वस्य । हृदयग्रन्थ्यादिषु त्रिषु तदन्वयः । तस्मिन्—प्रत्यगा-
त्मनि, दृष्टे-साक्षात्कृते, परावरे-परः ईशोऽपि अवरः अधस्तत्त्वेन
पकृष्टः यस्माच्छुद्धब्रह्मणः तदभिन्ने । तमेव-आत्मानमेव, अतिमृत्यु-
मेति-अज्ञानमतिक्रामति, नाशयतीति यावत्, अन्यः-तन्मात्रज्ञाना-
दन्यः, पन्थाः—उपायः, अयनाय—स्वरूपप्राप्तये । तरति-ना-
शयति, शोकम्-अज्ञानम् । सर्वसंसारेति । सर्वप्रपञ्चमूलाज्ञा-
नेत्यर्थः । तस्य-सर्वप्रपञ्चस्य । सूचयन्तीति । अज्ञानादेर्ज्ञानानि-
वर्त्यत्वरूपमिथ्यात्वोक्त्या तन्मूलकसर्वप्रपञ्चस्य मिथ्यात्वं सूचितम्,
अज्ञानोच्छेदकस्याज्ञानमूलकदृश्योच्छेदकत्वानियमादित्यर्थः । एकं

नारायणी ।

तानागतानि, क्षीयन्ते—विनश्यन्ति, तस्मिन्परमात्मनि, परावरे-
ईश एवावरो यस्मादित्यखण्डार्थे, दृष्टे—साक्षात्कृते सतीत्यर्थः । तमेव-
परमात्मानमेव, विदित्वा-साक्षात्कृत्य, मृत्युं—प्रमादरूपमज्ञानम्, अत्ये-
ति—अतिक्रामति, नाशयतीति यावत् । साधनान्तरसमुच्चयनि-
रासायाह—नान्य इति । अन्यः—आत्मज्ञानादन्यः, पन्थाः—उपायः, अय-
नाय स्वरूपप्राप्तये, नास्तीत्यर्थः । श्रुत्यन्तरं—तर त्यादि । शोकम्-
अज्ञानम्, तरति-नाशयति । ज्ञानहेतुकतरणस्य नाशपदार्थत्वात् । तस्य-
प्रपञ्चस्य, मिथ्यात्वम्-सर्वदेशयित्रैकालिकाभावप्रतियोगित्वम्, सूचयन्ति-
अधिष्ठानसाक्षात्कारनाश्यत्वहेतोः पक्षवृत्तिताबोधसम्पादनेन ज्ञापयन्ति-
साक्षान्मिथ्यात्वप्रतिपादिकां श्रुतिमुदाहरति—एकमिति । 'सदेव सौम्ये-

(१) 'ब्रह्मविदाप्नोति परम्' ब्रह्म वेद ब्रह्मैव भवतीत्याद्याः इत्यधिकः पाठो घपुस्तके ।
(२)=…=एतच्चिह्नद्वयमध्यगः पाठो नास्ति घपुस्तके ।

न्यायरत्नावली।

सजातीयद्वितीयरहितम् । एव—स्वगतधर्मरूपद्वितीयरहितम् । अद्वितीयं—विजातीयद्वितीयशून्यम् । 'सदेव सोम्येदमग्र आसी'दिति पूर्ववाक्यम्। ननु नानेन वाक्येन सर्वदृश्यमिथ्यात्वं बोध्यते, सृष्टिपूर्वकालावच्छेदेन ब्रह्मणो दृश्याभावबोधनादिति चेन्न। दृश्याभावे अग्रकालावच्छिन्नत्वानन्वयात्। इदं हि वाक्यं सद्रूपं जगत्कारणमनभ्युपगच्छतां सौगतानामद्वितीयजगत्कारणमनभ्युपच्छतां तार्किकादीनां च मतनिराकरणाय। तथा च यदग्रे सृष्टेः पूर्वमासीत् तत् सत् अद्वितीयञ्चेति बोध्यते। तत्र निषेधस्य प्राप्तिपूर्वकत्वात् येन सम्बन्धेन यद्देशकालावच्छेदेन यस्य दृश्यस्य सद्रूपवैशिष्ट्यं प्राप्तम्, तेन सम्बन्धेन तदवच्छेदेन तदभावसम्बन्धस्य तत्र बोधनात् सर्वदृश्यस्य मिथ्यात्वं सिध्यत्येव। 'सदेव सोम्येद'मित्यत्र इदंशब्देन प्रपञ्चात्मकब्रह्मणि द्वितीयसामान्याभावबोधनात्, इदन्तादात्म्यस्य उद्देश्यतावच्छेदकत्वेन उद्देश्यतावच्छेदकप्रपञ्चतादात्म्यकालावच्छेदेन द्वैताभाववत्त्वलाभेन मिथ्यात्वलाभात्। यद्यपि प्रतियोगिसत्त्वकालावच्छेदेनाभावस्य बोधः, तथापि स नाहार्यः। प्रतियोगिन इदन्त्वरूपदृश्यत्वेन भानात्, आत्मभिन्नत्वरूपद्वितीयत्वावच्छिन्नाभावत्वेनाभावस्य भानात्। 'नेह नानास्ती'त्यादौ तु इहपदेन प्रपञ्चवतो बोधनादुद्देश्यतावच्छेदकप्रपञ्चसत्त्वकालावच्छेदेन द्वैताभाववत्त्वधीः, अतो नानेत्यादिवाक्यान्यपि व्याख्यातानि। अतोऽन्यदार्तमिति। अतः—आत्मनः,

नारायणी।

दमग्र आसीदिति पूर्ववाक्यम्। इदं—नामरूपात्मकम्। अग्रे—सृष्टेः पूर्वम्। सदेवासीत्—कालत्रयाबाधितस्वरूपं ब्रह्मैवासीत्, न नामरूपात्मकम्, एतेन ब्रह्मव्यतिरेकेण जगन्नास्तीति ज्ञापितम्, तदेव समर्थयति एकं—सजातीयद्वितीयरहितम्, एव—स्वगतद्वैतरहितम्। अद्वितीयं—न विद्यते द्वितीयं यस्मिन्निति विजातीयद्वितीयरहितम्, तथा च प्रतीयमानस्य जगतो ब्रह्मवृत्त्यत्यन्ताभावप्रतियोगित्वलाभान्मिथ्यात्वसिद्धिः। श्रुत्यन्तरं—

र्नम्' 'नेह नानास्ति किं चन' 'अथात आदेशो नेति नेती'- त्याद्याः श्रुतयः साक्षादेव मिथ्यात्वं प्रतिपादयन्ति । दृश्यत्वेन शुक्तिरजतादिवन्मिथ्यात्वानुमानाच्च ।

न्यायरत्नावली ।

अन्यत् आर्त्त-पीडितम् । येन सम्बन्धेन यदवच्छेदेन यत् यत्र तिष्ठति, तत्तदवच्छेदेन तत्र वर्तमानाभावस्य तत्सम्बन्धावच्छिन्नप्रतियोगिताविशिष्टमित्यर्थः । एतस्यापि निषेधवाक्यत्वेन प्राप्त्यनुसारेण निषेधबोधकत्वात् । दृश्यत्वेनेत्यादि । 'ब्रह्मान्यत् मिथ्या दृश्यत्वात् शुक्तिरूप्यव'दित्यनुमानादित्यर्थः । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् शुक्तिरूप्यादौ न सिद्धसाधनम् । ब्रह्मणि बाधवारणाय ब्रह्मान्यदित्यत्र पक्षः । दृश्यत्वञ्च-दृग्विषयत्वम् । मिथ्यात्वञ्च-सत्स्वरूपान्यत्वम् । ननु सत्स्वरूपस्य ब्रह्मणो भेदे साध्ये सिद्धसाधनम् , सत्त्वावच्छिन्नप्रतियोगि-

नारायणी ।

नेहेति । इह ब्रह्मणि किञ्चन किमपि नाना भिन्नवस्तु नास्तीत्यर्थः । श्रुत्यन्तरम्—अत इति । अतः-आत्मनः सकाशात् , अन्यत्-मायातत्कार्यम्, आर्त्त-पीडितम्, आत्मतत्त्वसाक्षात्कारेण हतमिति यावत् । श्रुत्यन्तरमाह-'अथात आदेश इति । अथ-सोपाधिकस्वरूपोक्त्यनन्तरम्. अतः-ब्रह्मण एवाविशेषात्, आदेशः-निर्देशः, (आकाशादिप्रपञ्चारोपः) । नेति नेति निषेधदार्ढ्यायाभ्यासः । 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च' इत्यादिना प्रतिपादितं सर्वं सोपाधिकं नास्तीत्यर्थः । एतदभिप्रायको 'न ह्येतस्मादिति, नेत्यन्यत्परमस्ती'ति भागः । हि यस्मादेतस्माद् ब्रह्मणः अन्यन्नास्ति इति हेतोः 'नेति नेति' इति निर्देशो न पुनर्ब्रह्म नास्तीत्यभिप्रायेण, कुतः अन्यत्परमस्ति यतो निरस्तात् प्रपञ्चादन्यत् सर्वावभासकं ब्रह्मास्ति सर्वबाधावधित्वेन तस्यावश्यकत्वात् तथा च स्फुटमेव प्रपञ्चस्य मिथ्यात्वमिति भावः । इत्याद्या इत्यनेन 'इन्द्रजालमिव मायामयं स्वप्न इव मिथ्यादर्शनम्' इत्यादि मैत्रायणीयादिवाक्यपरिग्रहः । श्रुतिप्रमितं मिथ्यात्वं नानित्यत्वमात्रं किन्तु शुक्तिरजतादेरिव त्रिकालाबाध्यत्वमिति ज्ञापयितुमनुमानमाह—दृश्यत्वेनेति । प्रपञ्चो मिथ्या दृश्य-

न्यायरत्नावली ।

ताकभेदे साध्ये, किमिदं सत्त्वं ? ज्ञाननिवर्त्यत्वादिरूपमिथ्यात्वशून्यत्वं चेत्? तर्हि तादृशमिथ्यात्वमेव साध्यमस्तु । किञ्च तादृशमिथ्यात्वशून्यं सिद्धान्ते ब्रह्मैव, तथा च ब्रह्मत्वापेक्षयोक्तशून्यत्वस्य गुरुत्वेन प्रतियोगितानवच्छेदकत्वात् साध्याप्रसिद्धिरिति चेन्न । परमते उक्तशून्यत्वस्य ब्रह्मभिन्नेऽपि स्वीकारेण पररीत्या पराम्प्रत्युक्तसाध्योपन्याससम्भवात्, गुरुरूपस्यापि नव्यैः प्रतियोगितावच्छेदकत्वस्वीकारात्, ज्ञानानिवर्त्यं सत्वं ज्ञेयमित्याकारकयत्किञ्चिद्धीविषयत्वावच्छिन्नप्रतियोगिताकभेदस्य साध्यत्वसम्भवात्, प्रपञ्चसत्त्ववादिना उक्तधीविषयत्वस्य ब्रह्मणीव प्रपञ्चेऽपि स्वीकारात् न सिद्धसाधनम् । उक्तधीविषयताव्यक्तेः शुद्धाया एवावच्छेदकतया निवेशान्नावच्छेदकगौरवनिबन्धनसाध्याप्रसिद्धिः । अलीकवादिनं प्रत्यनुमानोपन्यासे अलीकभेदोऽपि पक्षे विशेषणं वाच्यम्, अन्यथा अलीके भागासिद्ध्यापत्तेः । अनुकूलतर्कस्तु 'दृश्यं यदि मिथ्या न स्यात् अनुपपद्यमानसम्बन्धकं न स्यात्' इत्यादि पूर्वमेव दर्शितम् । ज्ञाननिवर्त्यत्वं वा साध्यम्, तच्च स्वप्रयोजकाज्ञानाधिकरणकालपूर्वत्वशून्यवृत्तिज्ञानकालिकत्वरूपं ज्ञानोच्छेद्यत्वम् । तत्त्वज्ञानरूपस्य वृत्तिज्ञानस्य कालोपहितत्वात् प्रयोजकाज्ञानाधिकरणकालपूर्वत्वशून्येत्युक्तम् । स्वपदं यत्र ज्ञाननिवर्त्यत्वं साध्यं तत्परम्, शुक्तिरूप्यादावपि ब्रह्मज्ञानमादायैव साध्यसत्त्वम्, अज्ञानाधिकरणकालपूर्वत्वस्थले लाघवादज्ञानकालत्वमेव निवेश्यम् । ननु जीवेशभेदादेरनादित्वेन स्वप्रयोजकाप्रसिद्ध्या तत्र लक्षणासङ्गतिरिति चेन्न । स्वप्रयोजकपदेन स्वकाले वर्तमानमात्रस्योक्तत्वात्, तथा च जीवेशभेदकाले अज्ञानं वर्तत इति तत्र लक्षणान्वयः, (१)अत एवाज्ञान-

(१) अतएवाज्ञाने ऽपि सः इति पाठः घपुस्तके ऽधिकः ।

न्यायरत्नावली ।

स्याज्ज्ञानकाले सत्त्वादेतस्य साध्यस्य मिथ्यात्वलक्षणत्वे वृत्तिज्ञानं स्वाविषयकं निवेश्यम्, तेन ब्रह्मणि नातिव्याप्तिः । अथवा येन सम्बन्धेन येन रूपेण यदवच्छेदेन यत्र यदस्ति तदवच्छेदेन तत्र विद्यमानाभावस्य तदवच्छिन्नतद्रूपावच्छिन्नप्रतियोगित्वं साध्यम्, कपालादौ समवायादिसम्बन्धेन घटत्वादिरूपेण यदवच्छेदेन घटादिकमस्ति, तदवच्छेदेन कपालादिनिष्ठस्यात्यन्ताभावस्य समवायादिसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगित्वस्य व्यधिकरणधर्मावच्छिन्नाभावमते घटादौ स्वीकारात् । तत्सम्बन्धावच्छिन्नायास्तादृशाभावप्रतियोगिताया अवच्छेदकत्वं वा तद्रूपे साध्यते, तेन न साध्याप्रसिद्धिः । ननु व्याप्यवृत्तिपदार्थेषु नैतादृशसाध्यसम्भवः, तदवच्छेदकाप्रसिद्धेः । किञ्च सिद्धान्ते अभावानां सर्वदेशकालवृत्तित्वेन किञ्चिद्देशकालावच्छिन्नत्वे मानाभावः, तथा च उक्तसाध्यं सिद्धान्ते अप्रसिद्धमिति चेत्, तर्हि यदवच्छेदतदवच्छेदानिवेश्यावच्छिन्नवृत्तिकत्वशून्याभाव एव निवेश्यः । न चैवं घटादेस्सर्वदेशकालनिष्ठाभावप्रतियोगित्वस्वीकारेऽलीकत्वमेव स्यादिति वाच्यम् । घटादेस्सत्तादात्म्यवत्त्वेन प्रतीयमानत्वेनालीककवैलक्षण्यात्, अलीकं तु न तथा प्रतीयते, अलिकं सत् इति बुद्धेः बौद्धेनाप्यस्वीकारात्, सत्तादात्म्यविनाशवत्त्वादिमत्त्वेनैव घटादेरलीकवैलक्षण्यसम्भवाच्च । तथा च 'सर्वदेशकालनिष्ठात्यन्ताभावप्रतियोगित्वे सति सत्तादात्म्यशून्यत्वम्' 'अविनाशित्वं' वा अलीकलक्षणम् । बौद्धमतेऽपि यद्यत् सत् तत् क्षणिकमिति नियमात् प्रपञ्चस्य क्षणिकत्वेन विनाशित्वम्, अलीकस्य स्थिरत्वेनाविनाशित्वमिति स्वीक्रियत एवेति ध्येयम् । आदेशः–उपदेशः ज्ञापनम्(१) । नेति नेतीति । प्रत्यक्षादिप्रमाणैर्यद्यत् प्राप्तं तत्

(१) अज्ञातार्थज्ञापनम्' इति घपुस्तके पाठः ।

न्यायरत्नावली।

इतिशब्दद्वयेन उच्यते, तथा च कपालादौ घटादिकं समवायसम्बन्धेन कालविशेषावच्छेदेन वर्तत इति यत्, तत् नेत्यर्थः-तत्र

नारायणी।

त्वात् शुक्तिरजतादिवदित्यनुमानादित्यर्थः।(१)*दृश्यत्वं साक्षिभास्यत्वम्, मिथ्यात्वं स्वाश्रयनिष्ठत्रैकालिकात्यन्ताभावप्रतियोगित्वम्*। तदेवमना-

(१) *दृश्यत्वं सप्रकारकवृत्तिविषयत्वम्, साक्षिण्यनिर्वाच्यतादात्म्येनाध्यस्तस्वरूपं साक्षिरूपदृग्विषयत्वम्। मिथ्यात्वं च अवच्छिन्नवृत्तिकत्वशून्याभावप्रतियोगित्वम्। न चालोकसाम्यम्, सत्त्वेन प्रतीत्यर्हत्वात्। अत एव न ततोपि व्यवहारानुपपत्तिरपीत्यग्रे स्फुटीभविष्यति। न च दृष्टान्तासिद्धिः। तस्यार्थापत्तिमानादिभिरग्रे व्यवस्थापयिष्यमाणत्वात्। न च स्वबाधकाभिमताबाध्यदोषाऽजन्यत्वेन सत्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम्। अप्रयोजकत्वात्। मम त्वस्ति 'द्वैतं यदि मिथ्या न स्यात् तर्हि अनुपपद्यमानसाधकं न स्यादि'त्यनुकूलस्तर्कः। न च तथापि लाघवात् वृत्तिविषयत्वरूपदृश्यत्वेन ब्रह्मणि गृहीतव्याप्तिकेन सत्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम्। दोषाजन्यत्वस्य उपाधित्वात्। नापि सत्तावगाहिना 'सन् घट' इत्यादिना प्रत्यक्षेण बाधः। स्वप्रकाशाद्वितीयचैतन्यरूपसत्तायाः परमात्मन्येव क्लृप्तत्वेन जगति बाधात् 'सन् घट' इति प्रत्यक्षेण घटादावग्रहात्। न च सार्वदेशिकत्रैकालिकात्यन्ताभावप्रतियोगित्वं तुच्छत्वम्, तदभावः सत्त्वम्, तच्च घटादावप्यस्ति, सर्वदेशकालमध्ये स्वदेशकालस्यापि प्रवेशात्, तत्र च स्वस्य विद्यमानतया स्वविरोधिनो निषेधस्यापि बाधेन सर्वदेशकालिकनिषेधप्रतियोगित्वस्यापि बाधादिति वाच्यम्। परिच्छिन्नत्वादिहेतुभिरेव शुक्तौ रजततदभावयोरिव भिन्नसत्ताकयोः स्वस्वाभावयोरविरोधेन स्वदेशकालेपि समावेशात्, तादृशाभावप्रतियोगित्वरूपमिथ्यात्वस्यैव सत्त्वेन तदभावरूपसत्त्वस्य घटादौ बाधितमिथ्यात्वानुमाने प्रात्यक्षिकबाधत्वायोगात्, सार्वदेशिकत्वसार्वकालिकत्वयोः प्रत्यक्षायोग्यत्वेन तादृशनिषेधप्रतियोगित्वाभावस्य सुतरां प्रत्यक्षायोग्यत्वाच्च। ननु मास्तु बाधादिस्तथापि 'ब्रह्म मिथ्या व्यावहारिकत्वात् शुक्तिरजतादिवदि'त्याभाससाम्यं दुष्परिहरमिति चेन्न। तादृशानुमानस्य शून्यवादापत्तिरूपप्रतिकूलतर्कपराहतत्वेन अप्रयोजकत्वात्। ननूक्तमिथ्यात्वं मिथ्या न वा? अन्त्ये कथं ब्रह्मभिन्नसर्वमिथ्यात्वम्, प्रपञ्चधर्मस्य मिथ्यात्वस्य सत्यत्वस्वीकारात्, तद्वदेव प्रपञ्चसत्यत्वापत्तेश्च। आद्येपि कथं प्रपञ्चसत्यत्वम्, मिथ्यात्वस्य स्वाश्रयजगन्निष्ठाभावप्रतियोगित्वस्वरूपमिथ्यात्वलाभे तदाश्रयस्य जगतो मिथ्यात्वाभावरूपसत्त्वलाभात्। तथाचोभयथाप्यद्वैतभङ्ग एवेति चेत्, भ्रान्तोसि। पृथिवीत्वधर्मधर्मितावच्छेदकीकृत्य गन्धवत्त्वादिहेतुभिरनुमेयस्य इतरभेदादेः पृथिवीत्वव्याप्यधर्मावच्छिन्ने घटादाविव द्वैतत्वावच्छेदेन दृश्यत्वादिहेतुभिरनुमेयस्य मिथ्यात्वस्य द्वैतत्वव्याप्यधर्माव-

आत्माध्यस्ततयैवानात्मनि सिद्धेः तत्रात्माध्यासः ।

न्यायरत्नावली ।

तेन सम्बन्धेन तदवच्छेदेन तत् नास्तीति यावत् । घटादौ तु घटत्वादिकं समवायादिसम्बन्धेन अवच्छेदकमनपेक्ष्यैव प्राप्तं तथैव निषिध्यते-साक्षादेवेति । आर्तपदेन पीडितोक्त्याऽबोधपीडितत्वलाभेन ज्ञाननिवर्त्यत्वरूपमिथ्यात्वविशिष्टं बोध्यते, अद्वितीयमित्यादौ तु नञ्पदेन प्रतियोग्यवच्छेदकावच्छिन्नाभाववति व्याप्यवृत्त्यभाववति वा लक्षणया । 'नेह नानास्ती'त्यादौ तु नञ्पदेन तादृशाभावो लक्षणया बोध्यते, यत्किञ्चिदवच्छेदेन वर्तमानस्यावच्छेदकाविशेषितस्य वा द्वितीयाभावस्य ब्रह्मणि प्रत्यक्षादिप्राप्ततया उक्ताभावबोधने उक्तवाक्यावैयर्थ्यात् । उक्ताभावघटितमिथ्यात्वस्यानुमानव्याख्याने व्युत्पादितत्वेन तदुत्तरमथात इति ग्रन्थो व्याख्यातः। तदेवमनात्मनो मिथ्यात्वेन श्रुतिसिद्धत्वात्तस्यात्मसंसर्गाध्यासम्प्रति अधिष्ठानत्वानुपपत्तिमुक्त्वाऽऽत्माश्रयादिदोषदपि तामाह-आत्माध्यस्ततयेत्यादि । आत्माध्यस्ततया-आत्मसंसृष्टत्वेनैव प्रतीयमानतया, आत्माध्यासः-आत्मसंसर्गाध्यासः, सिद्धान्ते आत्मनोऽनध्यासात् । तथा च आत्मनो घटस्साक्षि

नारायणी ।

त्मनो मिथ्यात्वेनाधिष्ठानत्वासंभवमुक्त्वा आत्माश्रयादिदोषेभ्योऽपि त माह—आत्माध्यस्ततयेति । सन् घट इत्यात्मनि कल्पितत्वेनैवेत्यर्थः। अनात्मनि-नामरूपात्मके देहादौ, सिद्धे-वस्तुत्वेन सिद्धे, तत्र-अनात्मनि, आत्माध्यासः-आत्मन इदमंशस्येव संसृष्टरूपेण अध्यासो वाच्य इति शेषः

च्छिन्ने मिथ्यात्वेपि व्यापकधर्मपुरस्कारेणैवासति बाधके सिद्धत्वात्, पूर्वपक्षस्यैवानवकाशात् साध्यसिद्धेः पूर्वं व्याप्यधर्मावच्छिन्ने बाधाग्रहाच्च । न च 'द्रव्यं क्रियावत् गुणवत्त्वा दित्याभाससाम्यम् । तत्राकाशादौ क्रियावत्त्वबाधस्य प्रागेव ग्रहणात्, इह तु दृश्यत्वादि तुना मिथ्यात्वसाधारणद्वैतत्वावच्छेदेन मिथ्यात्वसिद्धेः पूर्वं न मिथ्यात्वे मिथ्यात्वबाधग्र तस्यैवाप्रमितेः । स्वसाधारण्येन प्रमिते च तस्मिन्सुतरां न तद्ग्रहः इत्याद्यन्यत्र विस्तरः ।
अयमधिकः पाठः खपुस्तके । तदेवमनात्मनो मिथ्यात्वेन इत्यादि सममग्रे ।

अनात्माध्यासेन चात्मनो दोषसादृश्यादिसम्भवात्। तत्र चानात्माध्यास इत्यात्माश्रयादिदोषप्रसङ्गाच्च । एतेना-

न्यायरत्नावली।

तत्तादात्म्येनैव प्रसयादनात्माध्यासस्य आत्मसंसर्गघटितस्यात्मसंसर्गस्यापेक्षणीयत्वादात्माश्रयः, आत्मसंसर्गापेक्षोऽनात्मा तत्सापेक्ष आत्मसंसर्ग इत्यन्योन्याश्रयश्चेति भावः। सादृश्यादीति। सादृश्यादिज्ञानेनेत्यर्थः। अध्यासकारणसंस्कारोद्बोधकतया सादृश्यादिज्ञानापेक्षयेति भावः। आत्माश्रयादीति। अनात्मव्यक्तीनां मध्ये स्वस्य स्वं प्रति दोषविधया कारणत्वे आत्माश्रयः, द्वयोः परस्परं प्रति तत्स्वीकारे अन्योन्याश्रयः, स्वकारणकारणं प्रति स्वस्य तत्स्वीकारे चक्रकम्, एकं प्रत्यन्यस्येत्यादिस्वीकारे अनवस्थेत्यर्थः। एतेनेति। अव्यवहितपूर्वोक्तात्माश्रयादिना व्यवहितपूर्वोक्तेनानिर्मोक्षप्रसङ्गश्रुतिविरोधप्रसङ्गाभ्यामनात्मनः सत्यत्वासम्भवेन चेत्यर्थः। आत्मानात्माध्यासस्य—व्यावहारिकयोरात्मसंसर्गानात्माध्यासयोः, अविद्यात्मकत्वात्—अविद्यारूपदोषमूलकत्वात्। व्यावहारिकाध्यासे यद्यपि=कामकर्मणोरपि दोषत्वम्, 'आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा। कामरूपेणे' त्यादिगीतोक्तेः। अज्ञानं—भ्रमाधिष्ठानचैतन्यम्, तथा चाधिष्ठानावारकत्वेनैव दोषत्वलाभात्,

नारायणी।

इत्थं च भवत्यात्माश्रयादिदोष इत्याह—अनात्माध्यासेन चेति। अज्ञानान्तःकरणादेरध्यासेन चेत्यर्थः। तत्र—आत्मनि, अनात्माध्यासः—आत्माध्यासाधिष्ठानस्यानात्मनः साधकोऽनात्माध्यासः। अध्यासमूलकत्वादनात्मनः, अध्यासस्य च सादृश्यादिमूलकत्वात्, सादृश्यादेश्चानात्माध्यासमूलकत्वादिति स्वाध्यासे स्वस्यापेक्षया आत्माश्रयः, अन्यकल्पने परस्परापेक्षाऽतोऽन्योन्याश्रयः, तदन्यकल्पने त्रयाणां परस्परापेक्षा अतश्चक्रकम्, तत्राप्यन्यकल्पने अनवस्थेति भावः। एतेनेति। आत्माश्रयादिदोषप्रसङ्गेन अपास्तमित्यन्वयः। आत्मानात्माध्यासस्य—आत्मानात्मनोः

त्मानात्माध्यासस्याविद्यात्मकत्वान्न विकल्पावसर इ-
त्यपास्तम् , स्वप्रकाशात्मनि अविद्याया अप्यनुपपत्तेः।
तथाहि साप्यध्यस्ता, अनध्यस्ता वा? तत्राद्ये कथं नात्मा-

न्यायरत्नावली।

'कर्मक्षये ज्ञानमपास्तदोष'मित्यादि

मही घटत्वं घटतः कपालः कपालिका चूर्णरजस्ततोऽणुः।

जनै(१)स्स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते--

इत्यादिविष्णुपुराणोक्तेश्च।=[ ]तथापि पूर्वपूर्वकामकर्म-णोरुत्तरोत्तरतद्धेतुत्वेनानवस्थादोषे प्राप्ते प्रवाहरूपेण बीजाङ्कु-रादिवत् अनादित्वेन तत्परिहारो वाच्यः। अविद्याया दोष-विधया हेतुत्वे तु नानवस्थादोष इत्याशयेन तदेव सिद्धान्ति-नोक्तम्। विकल्पावसरः-आत्माश्रयादिविकल्पावसरः, अवि-द्याया अनादित्वेन तत्रान्यदोषानपेक्षेति भावः। स्वप्रकाशेति। स्व-प्रकाशस्य सत्यत्वात् तदप्रकाशरूपाविद्या मिथ्यैव, तथा च वक्ष्यमा-णदोषापत्तेस्तदनुपपत्तिरिति भावः। आत्माश्रयादीति। अविद्या-रूपदोषस्य उत्पत्तौ तस्यैव हेतुत्वे आत्माश्रयः, तत्कार्यस्य हेतुत्वेऽ-

नारायणी।

परस्पराध्यासस्य, आविद्यकत्वात्--दोषविधयाऽनाद्यविद्याप्रयुक्तत्वात्, न विकल्पावसरः--आत्मनि अनात्माऽध्यस्येत? अनात्मनि वात्मेति विकल्पस्यावकाशो नास्ति, द्वयोरप्यध्याससम्भवेन विकल्पवैयर्थ्यादिति भावः। स्वप्रकाशेति। न जानामीत्यज्ञानस्याप्यवभासकतया सिद्धे स्वतः स्फूर्तिमतीत्यर्थः। अविद्याया आवरणात्मिकाया अपिशब्दाद्दोषान्तरस्य च अनुपपत्तेःतमःप्रकाशवद्विरोधेनासम्भवात्। असम्भवं प्रकटयति--तथाहीति। आत्माश्रयादीति। दोषसादृश्यादिकं विनाऽऽत्मन्यविद्याध्यासा-

(१) स्वकर्मभिः स्तिमितः प्रतिबद्धः आत्मनिश्चयो येषान्ते। अयं पाठः मूले एव [ ] चिह्नितस्थले आसीत् परन्तु--"व्यावहारिकाध्यासे यद्यपि कामकर्मणोरपि दोषत्वं...तथापि...अनवस्थादोषे प्राप्ते...तत्परिहारो वाच्यः" इत्यस्मिन्वाक्ये सम्बन्ध-विच्छेदकरत्वात् टिप्पणीस्थ एव मूले पतित इत्यालोक्य टिप्पण्यामेव निवेशितः।

श्रयादिदोषप्रसङ्गः । अन्त्ये तस्यानुच्छेदादनिर्मोक्षप्रसङ्गः । सर्वस्याध्यासमूलत्वे भ्रमप्रमादिव्यवस्था च न स्यात् । एकस्यैवात्मनः प्रमाणप्रमेयप्रमितिप्रमातृरूपता च विरुद्धा । अविरोधाभ्युपगमे वा सौगतमताप-

न्यायरत्नावली ।

न्योन्याश्रयः, अविद्यान्तरस्य हेतुत्वे तत्रापि अविद्यान्तरस्येत्यादिस्वीकारे त्वनवस्थादिकम् । अकार्यत्वन्तु नाविद्यारूपाध्यासस्य सम्भवति प्रातीतिकाध्यासे तददर्शनादिति भावः । सर्वस्य—व्यावहारिकप्रातीतिकरूपस्य, अध्यासमूलत्वे—भ्रममात्रविषयत्वे । भ्रमप्रमादिव्यवस्था—'इदं रजत' मित्यादिधीर्भ्रमः, 'इयं शुक्तिरित्यादिधीः प्रमा, आद्या बाध्या, द्वितीया बाधिकेत्यादिव्यवहारः । एकस्येत्यादि । चित एव प्रमाणत्वादिकं सिद्धान्ते स्वीक्रियते, तद्विरुद्धमित्यर्थः । ननु अध्यासोपाधिभेदेन एकस्यापि प्रमाणादिरूपत्वं न विरुद्धम्, तत्राह—अविरोधेत्यादि । सौगतेति ।

नारायणी ।

सम्भवात्तदर्थमपेक्षिताविद्याध्यासस्य स्वापेक्षात आत्माश्रयोऽविद्यान्तराध्यासाद्यपेक्षातोऽन्योन्याश्रय इत्यादिपूर्वोक्तः प्रकारः स्फुट इति भावः । तस्या अविद्यायाः अनुच्छेदात्—आत्मन इव नाशायोगात् । अनिर्मोक्षप्रसङ्गः—अज्ञाननिवृत्त्युपलक्षितस्वरूपावाप्तिरूपमोक्षाभावप्रसङ्गः । नन्वज्ञानाध्यासस्याप्यनादित्वान्नोक्तदोष इत्यतो दूषणान्तरमाह—सर्वस्येति । द्वैतज्ञानस्येत्यर्थः । अध्यासमूलत्वे—भ्रममात्रसिद्धत्वे, 'शुक्तिज्ञानं प्रमा रजतज्ञानं भ्रम' इति व्यवस्था न स्यादित्यर्थः । तयोर्बाध्यबाधकभावो न स्यादिति भावः । तेषां भ्रममात्रशरीरत्वेऽपि चितः प्रमाणादिकमङ्गीक्रियतेऽतो नाव्यवस्था तत्राह—एकस्यैवेति । अद्वितीयस्येत्यर्थः । प्रमाणत्वाद्युपपादकधर्मादिना रहितस्येति यावत् । विरुद्धा—अन्यतरसत्त्वेनासम्भाविता । प्रमां प्रति करणत्वेऽङ्गीकृते प्रमाया विषयत्वमनुपपन्नं विषयत्वे तु विषयिप्रमारूपताऽनुपपन्ना तथात्वे तदाश्रयत्वमनुपपन्नम्, एवं परस्परमपीति संक्षेपः । ननु स्वतो विरुद्धाप्यध्यासिकोपाधिभेदेनाविरुद्धाऽत आह—अविरोधेति । अध्यस्ताहंत्वाद्याकारभेदेन ज्ञानमेव प्रमाणादिरूपमिति सौगतमतादविशेषापत्तिरित्यर्थः । नन्वध्यासोऽपि नो-

स्तिरिति। अत्रोच्यते। अहं मनुष्यः कर्ता भोक्तेत्यादि प्रतीतिस्तावत्सर्वजनसिद्धा। सा च न स्मृतिरपरोक्षावभासत्वाद्भेदाग्रह(१)पूर्वकत्वाच्च। नापि प्रमा, श्रुतियु-

न्यायरत्नावली।

(२)अध्यस्तकारणभेदेन ज्ञानमेव प्रमात्रादिरूपमिति सौगतमतादविशेषापत्तिरित्यर्थः। ननु अध्यासोऽपीत्यादिना सौगतमतापत्तिरित्यन्तेन उक्तान् सर्वपूर्वपक्षान् समाधातुं प्रतिजानीते—अत्रोच्यते इति। न स्मृतिरिति। यद्यपि नावाधितार्थकस्मृतिरित्येव वक्तुमुचितम्, भ्रमत्वमात्रस्यैव प्रकृते वाच्यत्वात्, तथापि ग्रहणस्मरणोभयरूपत्वेन यो भ्रमत्वनिषेधः सांख्यादिसम्मतः तन्निराकरणाय स्मृतित्वनिषेधः। अपरोक्षावभासत्वात्—प्रत्यक्षरूपतया प्रतीयमानत्वात्। ननु अहमित्यंशे प्रत्यक्षम्, मनुष्य इत्यंशे तु स्मृतिः, तयोस्तद्विषययोश्च भेदाग्रहादेकत्वव्यवहारः, अथवा 'अहं मनुष्य' इत्यत्र मनुष्यदेहस्वामी आत्मा विषयः, एवम् 'अहं कर्ते'त्यत्र कर्तृमनस्स्वामी,(३) 'अहं भोक्ते'त्यत्र सुखाद्याश्रयमनस्स्वामी, तथा च स्वामित्वतत्संसर्गयोस्स्मृतिरूपमपि विशेष्ये प्रत्यक्षमेकं सम्भवति तत्राह—भेदाग्रहपूर्वकत्वादिति। भेदाग्र-

नारायणी।

पपद्यत इत्यादिना सौगतमतापत्तिरित्यन्तेनोक्तान्सर्वान् पूर्वपक्षान् समाधातुं प्रतिजानीते— अत्रेति। प्रतीत्यन्यथानुपपत्त्या भ्रमसामग्रीं व्यवस्थापयिष्यन् प्रथमतः प्रतीतिं शोधयति—अहं मनुष्य इत्यादि। सूचीकटाहन्यायेन प्रथममख्यातिवादं निराचष्टे-सा चेति। अपरोक्षेति। 'मनुष्यं मां जानामी'ति प्रत्यक्षरूपतया प्रतीयमानत्वादित्यर्थः। ननु मनुष्योऽहमित्यादिप्रतीतिर्मनुष्यदेहस्वाम्यात्मविषयापि देहाद्यंशे स्मृतिरूपा आत्मांशे प्रत्यक्षरूपेति तथा प्रतीयत इत्यत आह—भेदेति। भेदाग्रहजन्यविशि-

(१)—भेदाग्रहः अपूर्वकत्वाच्च इति पाठो गपुस्तके प्रामादिकः।

(२) अध्यस्ताकारभेदेनेति, घपुस्तके,

(३) आत्माविषयः इत्यनुषङ्गः एवमग्रेपि।

क्विबाधितत्वात् । तथा च श्रुतयः—'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः, अयमात्मा ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म, य

न्यायरत्नावली ।

हजन्यविशिष्टबुद्धित्वादित्यर्थः । उपस्थितविशेष्यविशेषणयोर्भेदाग्रहत्वेन विशिष्टविषयकप्रवृत्त्यादिहेतुत्वे गौरवात्, विशेष्यविशेषणविशिष्टविषयकधीत्वेनैव तदुचितमिति भ्रमत्वंबाधितवैशिष्ट्यज्ञानत्वरूपं न तूपस्थितयोर्भेदाग्रहत्वम्, आत्मनि शरीरादिस्वामित्वविषयकम्, तस्यात्मनि शरीरादेर्भेदग्रहपूर्वकत्वनियमादिति भावः । श्रुतय इति । ब्रह्मस्वरूपतां दर्शयन्तीसग्रे अन्वयः । विज्ञानमयः—'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इति श्रुत्युक्तकर्तृरूपविज्ञानशब्दितबुद्ध्यभिमानी 'स्त्रीमयोऽयं जाल्म' इतिवत्तदभिमानित्वोक्त्या तद्भेदलाभः, एवं प्राणेषु प्राणाभिमानी, हृदि मनस्यभिमानसम्बन्धेन विद्यमानम्, अन्तर्जन्यज्ञानरूपबाहिर्ज्योतिर्भिन्नम्, ज्योतिः—स्वप्रकाशचैतन्यम्, पुरुषः—पुरुषु दृश्येषु अनुस्यूत इत्यनेनापि सर्वदृश्यभिन्नाचिद्रूपलाभात् अकर्तृभोक्तृत्वलाभः, । अत एव 'ध्यायतीव लेलायतीवे'त्याद्युत्तरवाक्येन परमार्थतो ध्यानादिशून्यत्वमुक्तम्, । विज्ञानं—स्वप्रकाशचित्स्वरूपम्, आनन्दम्—

नारायणी ।

बुद्धित्वादित्यर्थः । देहादिस्वामित्वविषयत्वे भेदग्रहपूर्वकत्वं स्याद्भेदग्रहं विना स्वस्वामिभावभावनायोगादिति भावः । विशिष्टप्रमारूपतां निराकरोति—नापि प्रमेति । श्रुतय इति । अकर्तृभोक्तृरूपतामात्मनो दर्शयन्ति इत्यनेनान्वेति । विज्ञानमयः—बुद्ध्यभिमानी, प्राणेषु हृदि अभिमानसम्बन्धेन विद्यमानः प्राणाभिमानी मनोऽभिमानी चेत्यर्थः । अन्तर्ज्योतिः—जन्यज्ञानरूपवहिर्ज्योतिर्भिन्नः स्वप्रकाशः, पुरुषः—सर्वदृश्यानुस्यूतः, अनेन कर्तृभोक्तृविज्ञानभेदलाभादकर्तृभोक्तृरूपता सिद्धिः । अयमात्मा जीवः ब्रह्म परमात्मा समानस्वभावत्वादिति भावः । अभेदोक्त्याऽत्राकर्तृभोक्तृरूपतासिद्धिः । सत्यमिति । अत्रानन्तमित्यनेनापरिच्छिन्नत्वोक्त्या अभेदलाभात् [तथार्थलाभः] । विज्ञानमिति । स्वप्रकाशचिद्रूपत्वोक्त्याऽत्रापि

आत्मा अपहतपाप्मा, यत्साक्षादपरोक्षात् ब्रह्म, य आत्मा सर्वान्तरः, योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्ये-

न्यायरत्नावली ।

आनन्दस्वरूपम्, न तु मत्वर्थप्रत्ययलोपात् आनन्दयुक्तम्, 'आनन्दो ब्रह्म, एष एव परमः आनन्दः, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'त्यादिश्रुतिभ्यः । अन्यानि-औपाधिकभेदेन एतस्मात् भिन्नानि, भूतानि-जीवाः, मात्रां-विषयसुखरूपमंशम्, उपजीवन्ति-भुञ्जते, अनन्तम्-अभावाप्रतियोगि, ब्रह्म शुद्धत्वाद्यतिशयवत् । अपहतो निर्गतः पाप्मा यस्मात् सोऽपहतपाप्मा । साक्षादपरोक्षात्-अपरोक्षचिद्रूपम्, न तत्तादात्म्येन घटादिवदपरोक्षः । सर्वान्तरः-सर्वदृश्याधिष्ठानम् । अशनायापिपासे प्राणस्य, शोकमोहौ मनसः,जरामृत्यू देहस्य-धर्मौ । अत्येति-तेषामनाधारः । स यत्त्वेत्यादिवाक्यं जाग्रदाद्यवस्थाबोधकवाक्यानामेकैकोत्तरमस्ति, तथा च (१)जागरिततद्वाक्योत्तरवाक्यस्थस्य तत्रेरयस्य जाग्रदवस्थायामित्यर्थः । एवं स्वप्नसुषुप्तिवाक्योत्तरस्थस्य स्वप्ने

नारायणी ।

तथार्थलाभः । कर्त्रादिस्वरूपत्वे परिच्छिन्नत्वापत्त्या भासकत्वानुपपत्तेः । य आत्मेति । अपहतः पाप्मा कर्माशयो यस्मादित्यकर्तृभोक्तृरूप इत्यर्थः । यत्साक्षादिति । साक्षात्-अगौणम्, अपरोक्षात्-अपरोक्षम्, स्वत एवापरोक्षं न घटादिवत्सत्तादात्म्येनापरोक्षमित्यर्थः । अयमिति । सर्वान्तरः-सर्वस्य कार्यजातस्यान्तरे स्थितः, अधिष्ठानतयेति भावः । तथा च सर्वदृश्याधिष्ठानतया सर्वावभासकत्वसूचनादकर्तृभोकृतासिद्धिः, अन्यथा भासकत्वानुपपत्तेरिति भावः । साक्षादेवाकर्तृत्वादिप्रतिपादिकां श्रुतिमुदाहरति-योऽशनायेति । अशितुमिच्छाऽशनाया पातुमिच्छा पिपासा ते प्राणाधर्मौ, शोकम्-अज्ञानम्, मोहः-प्रमादः तौ मनसः । जरा-अङ्गजीर्णता मृत्युः-प्राणवियोगः, तौ स्थूलदेहस्य धर्मौ । अत्येति-

(१) जाग्रद्वाक्योत्तरेत्यादिः घपुस्तके ।

ति,स यत्तत्र किं चित्पश्यत्यनन्वागतस्तेन भवति,असङ्गो ह्ययं पुरुष' इत्याद्या अकर्तृभोक्तृपरमानन्दब्रह्मरूपतामात्मनो दर्शयन्ति। युक्तयश्च-विकारिणः परिच्छि-

न्यायरत्नावली।

सुषुप्तावित्यर्थः। स-जीवो, यदिति ज्ञेये ज्ञानक्रिययाश्च विशेषणम्, पश्यति-जानाति, अनन्वागतः-असंसृष्टः, तेन-ज्ञेयेन ज्ञानेन च, अपरोक्षविषयस्यापि सर्वानुस्यूतसद्रूपचिदात्मके जीवे तादात्म्यप्राप्त्या निषेधो न व्यर्थः। असङ्गः-सम्बन्धसामान्यशून्यः, हि शब्दोऽसङ्गत्वहेतुतां द्योतयति। अयं-दृग्रूपः, पुरुषः-सर्वदृश्येषु अधिष्ठानत्वेनानुस्यूतः, तथा च दृग्दृश्ययोस्सम्बन्धानुपपत्तेः सर्वदृश्यानां दृशि कल्पितत्वात्। असङ्गत्वहेतुर्नासिद्ध इति भावः। इत्यादिपदेन 'सलिल एको द्रष्टाऽद्वैतो भवती'त्यादिश्रुतिसङ्ग्रहः। ब्रह्मरूपताम्-अद्वितीयेशरूपताम्। श्रुतिबाधितत्वं प्रदर्श्य युक्तिबाधितत्वंप्रदर्शयति-युक्तयश्चेति इत्याद्याः। इत्यग्रेऽन्वयः। युक्तयोनुमानं तदनुकूलतर्काश्च तत्र निर्धर्मकनित्यस्वप्रकाशसुखात्मक एक एवात्मेति अनेन वक्ष्यमाणवाक्येन 'आत्मा निर्धर्मकः नित्यत्वात्; नित्यः स्वप्रकाशसुखरूपत्वाद्, इत्यनुमानद्वयं विवक्षितम्। (१)(स्वप्रकाशसुखरूपतयोः स्वप्रकाशानभ्युपगमे इत्यादिनानुमानद्वयं विवक्षितम्) विकारिण इत्यादिना च तर्का विवक्षिताः, तत्र

नारायणी।

अतिक्रामति, तद्रहित इत्यर्थः। श्रुत्यन्तरं—स यदिति। सः-अवस्थात्रयसाक्षी, यत्किञ्चिद्-दृश्यम्, तत्र-जाग्रत्स्वप्नसुषुप्तिषु, पश्यति-साक्षात्करोति, तेन-दृश्येन, अनन्वागतः-असंस्पृष्टो भवति। हि-यस्मात्, अयम्-अहमिति धिया व्यवह्रियमाणः, असङ्गः-सङ्गसामान्यरहितः। भासकस्य भास्येन समं धर्मधर्मिभावप्रयोजकसम्बन्धाभावादित्यन्यत्र विस्तरः। आद्यशब्देन 'अमूढो मूढवद् भुङ्क्ते मायया वे'त्यादिश्रुतिसंग्रहः। श्रुतिबाधितत्वं प्रदर्श्य युक्तिबाधितत्वं प्रदर्शयति—युक्तय इति। इत्याद्या इत्यग्रेतनेना-

(१)(...) एतच्चिन्हान्तर्गतपाठो घपुस्तके नास्ति पुनरुक्तिदुष्टश्च।

न्नत्वेन अनात्मत्वापत्तेः, स्वेनैव स्वस्य ग्रहणे कर्तृकर्म-

न्यायरत्नावली।

निर्धर्मकत्वं-परमार्थत्वरूपेण धर्माभावः। तेन धर्माभावरूपधर्मस्य साध्यस्य व्यावहारिकत्वे स्वव्याघातः, प्रातीतिकत्वे अनुमानस्याभासत्वम्, पारमार्थिकत्वे अद्वैतश्रुतिविरोधः, धर्माभावस्वरूपत्वे साध्ये सधर्मकत्वाप्रतिक्षेपापत्तिरित्यादि परास्तम्। वस्तुतो व्यावहारिको धर्माभावो न स्वव्याघातकः, धर्मतदभावयोर्व्यावहारिकयोः स्वाप्नयोर्गजतदभावयोरिवाविरोधात्। अत्र गज इति स्वाप्नज्ञानोत्तरं कदापि नात्र गजोऽस्तीति स्वाप्नज्ञानस्येव इहात्मनि धर्मोऽस्तीति ज्ञानोत्तरमात्मा निर्धर्मक इत्यनुमितेः प्रतियोगिसमसत्ताकाभावविषयकत्वसम्भवात्। विस्तृतश्चैतच्चन्द्रिकायाम्। ननु यदि निर्धर्मको न स्यात् तदा नित्यो न स्यात् धर्मधर्मिणोस्तादात्म्येन धर्मोत्पत्तिनाशाभ्यां धर्मिण उत्पत्तिनाशरूपविकारापत्तिरिति तर्को वाच्यः, तत्र इष्टापत्तिरेवेत्यत आह—विकारिण इत्यादि। आत्मनो विकारस्वीकारे अभावप्रतियोगित्वरूपपरिच्छेदा(१)दात्मत्वस्याभावापत्तिरित्यर्थः। आत्मा यदि कर्तृत्वादिमान् स्यात्तदा द्रष्टा न स्यादित्य-

नारायणी।

न्वेति। युक्तयोऽनुमानानि तदनुकूलतर्काश्च। तत्र निर्धर्मकनित्यस्वप्रकाशसुखात्मक एवात्मेत्यनेन वक्ष्यमाणवाक्येन आत्मा निर्धर्मकः नित्यत्वात्, आत्मा नित्यः स्वप्रकाशसुखात्मकत्वादिति विवक्षितानुमानद्वयेऽनुकूलतर्कानाह—विकारिण इत्यादिना। कर्तृत्वभोक्तृत्वरूपविकारवतः आत्मनः परिच्छिन्नत्वेन—विभुत्वे भोगसाङ्कर्यात् अणुत्वे सर्वदेहव्यापिसुखाद्युपलब्धेरवश्यवाच्यमध्यमपरिमाणवत्त्वेन। अनात्मत्वापत्तेः-घटादेरिवात्मस्वरूपताभावापत्तेः। मध्यमपरिमाणवतो विनाशिन आत्मत्वायोगादिति भावः। तथा च यद्यात्मा सधर्मकः स्यात् तदाऽनात्मैव स्यादिति तर्कः पर्यवसितः। तत्रात्मा यदि कर्तृत्वादिधर्मवान्स्यात्तदाऽहं कर्त्तेति द्रष्टा न स्याज्जडस्य मनआदेर्द्रष्टृत्वायोगात्कर्तृकर्मविरोधेन स्वेनैव स्वस्य

(१)—परिच्छेदापत्त्या परिच्छेदाऽभावव्याप्यात्मत्वस्येत्यादिः घपुस्तके पाठः।

विरोधात्, दृग्दृश्यसम्बधानुपपत्तेर्भेदेनाभेदेन वा धर्मध-

न्यायरत्नावली।

र्भेदे द्रष्टृदृश्यभावानुपपत्तिरिति तर्कमाह—स्वेनेत्यादि। स्वेन—आत्मना, स्वस्य—कर्तृत्वादिमदात्मनो, ग्रहणे—विषयीकरणे, कर्त्ता साक्षी विषयी व्यवहर्तृत्वात्, स एव कर्म—विषयः व्यवहार्यत्वात् तत्र विरोधः—एकत्वे सम्बन्धासम्भवेन विषयिविषयभावसम्पादकतादात्म्यसम्बन्धानुपपत्तिरित्यर्थः। कर्तृत्वं ज्ञानं चिद्रूपं मत्यपि सम्भवति, जन्यविषयतावच्छिन्नं ज्ञानमपि क्षेमसाधारणजन्यतावदिति वा, तथा च कर्तृकर्मत्वयोर्व्यवहाराक्रियापेक्षत्वेऽपि न क्षतिः। (१)ननु तादात्म्यं प्रत्यनुयोगित्वं विषयत्वं प्रतियोगित्वं विषयित्वम्, तत्राद्यं कर्तृत्वादिविशिष्टरूपेण द्वितीयं शुद्धरूपेणैकस्यात्मनस्सम्भवत्येव तत्राह—दृग्दृश्येत्यादि। दृग्दृश्ययोस्सम्बन्धनिर्वचनस्य पूर्वोक्तरीत्या असम्भवात्, दृगात्मनि विषयिणि विषयरूपं सर्वं मिथ्येति निर्धर्मकत्वमात्मन इति भावः। आत्मा यदि पारमार्थिक-

नारायणी।

ग्रहणायोगाच्चेति तर्कान्तरमाह—स्वेनेति। स्वेनात्मना स्वस्य—कर्तृत्वादिमदात्मनः, ग्रहणे—विषयीकरणे। कर्ता द्रष्टा विषयी व्यवहर्तृत्वात्, कर्म दृश्यं विषयः व्यवहार्यत्वात्, तत्र विरोधः—द्रष्टृत्वे दृश्यत्वस्य दृश्यत्वे द्रष्टृत्वस्यानुपपत्तिः, तयोरेकत्रासमावेशस्य साधनादिति भावः। यद्यात्मा सधर्मकः स्यात्तदा निरूपणार्हतत्सम्बन्धवानपि स्यादिति तर्कान्तरमाह—दृग्दृश्येति। दृगात्मा भासकः, दृश्यं कर्तृत्वादिकम्(२) तयोः सम्बन्धस्य तादात्म्यस्य समवायस्य वा अनुपपत्तेः—असम्भवात्। तथाहि—न तादात्म्यं सम्बन्धः, आत्मनो विनाशित्वापत्तेः, तदभिन्नधर्मनाशे तस्यापि नाशावश्यम्भावात्, कूटस्थनित्यताभङ्गप्रसङ्गाच्च। धर्माणामप्यनाशे त्वनिर्मोक्षप्रसङ्गः, अशेषविशेषगुणवियोगस्यैव पुमर्थत्वोक्तेः। नापि समवायः, तस्य सम्बन्धत्वासम्भवात्। तथाहि—सम्बन्धिभ्यां भिन्नत्वे सति सम्बन्धिनि सम्ब-

(१) ननु तादात्म्यं प्रति प्रतियोगित्वं विषयत्वम् तादात्म्यं प्रत्यनुयोगित्वम् विषयित्वम् इति घपुस्तके पाठः, युक्तश्च।

(२) दृश्यं घटादिकं तयोः सम्बन्धस्य विषयविषयिभावस्य अनुपपत्तिरपि बोध्या।

र्मिभावानुपपत्तेश्च, ज्ञाननित्यत्वपक्षे तत्तद्व्यक्तिभेद-

न्यायरत्नावली।

धर्मवान् स्यात्तदा निरूपणार्हधर्मसम्बन्धवान् स्यादिति तर्कमा-ह—भेदेनेति। तादात्म्यान्यसम्बन्धेनेत्यर्थः, अभेदेन तादात्म्य-सम्बन्धेनानुपपन्नेनेति शेषः। अनुपपत्तेरिति। तादात्म्येन तद-न्येन वा सम्बन्धेन सम्बद्धयोर्धर्मधर्मिता वाच्या, तादात्म्यादिस-म्बन्ध एव तु न सम्भवति सम्बन्धान्तरेणासम्बद्धस्य तस्य सम्ब-न्धस्य सम्बन्धत्वासम्भवेन सम्बन्धान्तरं वाच्यम्, एवं तस्यापि सम्बन्धान्तरमिति अनवस्थापत्तेः। न च सम्बन्धस्य सम्बन्धान्त-रेण न सम्बन्धता किन्तु स्वेनैव सम्बन्धेनेति वाच्यम्। स्वस्य स्वप्रतियोगिकसम्बन्धत्वासम्भवात्, स्वं न स्वीयमित्यनुभवात्, अन्यथा धर्मधर्मिणोरपि स्वेन सम्बन्धतापत्त्या सम्बन्धमात्रलोपा-पत्तेः। अथ तयोस्सम्बन्धान्तरं प्रतीयते, तस्य तु न प्रतीयत इति

नारायणी।

द्धः सम्बन्धः, तत्र समवायो न स्वेन सम्बद्धः, स्वेन स्वं वर्तत इति प्रती-त्यभावात्, नापि सम्बन्धान्तरेण, तस्य तस्यापि सम्बन्धान्तरापेक्षायाम-नवस्थापत्तेरिति संक्षेपः। यद्यात्मा वस्तुतः कर्तृत्वादिमान्स्यात्तदा तैः सह धर्मधर्मिभावो निर्वचनार्हः स्यादिति तर्कान्तरमाह—भेदनाभेदेनेति। भेदेन आत्यन्तिकभेदेन, अभेदेन-भेदसहिष्णुनाऽभेदेन ऐक्येन वा, धर्मध-र्मिभावानुपपत्तेः-कर्तृत्वादीनां धर्मत्वस्य आत्मनो धर्मित्वस्यासम्भवात्। अत्यन्तभेदनिबन्धनस्तादात्म्यैक्यनिबन्धनो वा धर्मधर्मिभावो न सम्भ-वतीति यावत्। तथाहि-तौ यद्यत्यन्तं भिन्नौ तदा हिमवद्विन्ध्ययोरिव धर्मधर्मिभावो दूरापास्तः, यदि भिन्नाभिन्नौ तदाऽऽत्मनः कूटस्थत्वव्या-घातः, परिणामपरिणामिनोरेव तत्सम्भवात्; यद्यैक्यं तदा 'घटो घटः' इतिवद्धर्मधर्मिभावेन न व्यपदेशार्हौ ऐक्ये तदसम्भवात्। न च राहोः शिर इतिवद्भविष्यतीति वाच्यम्। अनिर्मोक्षप्रसङ्गस्योक्तत्वादिति सं-क्षेपः। एतेन सम्बन्धानिरूपणे घटो नील इत्यादिवदहं कर्तेत्यादि प्रमो-पपत्तेर्भ्रमवार्ता न युक्तेति निरस्तम्। अविकारित्वेनात्मनस्तद्द्वेषस्यात्। आत्मा यदि कर्तृत्वादिधर्मवान्स्यात् तदा कालत्रयाव्यभिचारितद्भासक-ज्ञानस्वरूपो न स्यादिति मूलीभूतान्वयव्यतिरेकनिश्चयसाधनायाह—

ध्वंसप्रागभावसमवायज्ञानत्वजात्याद्यभ्युपगमे गौरवात, एकत्वाभ्युपगमे चातिलाघवात, घटज्ञानं पट-

न्यायरत्नावली।

चेत्, सत्यम्, प्रतीयमानमनुपपन्नं मिथ्यैवेति भावः। 'आत्मा यदि कर्तृत्वादिधर्मकस्स्यात् तदा कर्तृत्वादिधर्मविशिष्टस्य तस्य ज्ञानरूपत्वन्न स्यादि'ति तर्के 'आत्मा ज्ञानरूपो न भवत्येव तस्य नित्यत्वेनोत्पत्तिनाशवत्त्वेनानुभूयमानज्ञानरूपत्वासम्भवात्' इतीष्टापत्तिं निरस्यति—ज्ञानेत्यादि। अनित्यत्वपक्षे—अनित्यत्ववादितार्किकादिमते। तत्तद्व्यक्तीत्यादि। तत्तज्ज्ञानव्यक्तयस्तासां भेदध्वंसप्रागभावाः, समवायः, ज्ञानत्वजातिः, आदिपदेन तज्ज्ञानतद्ध्वंसेषु अनन्तकारणानीत्येतेषामनन्तानां स्वीकारे गौरवादित्यर्थः। एकत्वाभ्युपगमे—एकैव ज्ञानव्यक्तिः सर्वविषयिकेति स्वीकारे, अतिलाघवात्—आत्मन एव ज्ञानस्वरूपत्वसम्भवेन ज्ञानस्वरूपस्याप्यकल्पनीयत्वेनातिलाघवात्। ननु घटज्ञानं न पटज्ञानमिति भेदप्रतीतेः कथमेकं ज्ञानं सर्वस्येत्यत आह—घटज्ञानमित्यादि।

नारायणी।

ज्ञानेति। ज्ञानानित्यत्वपक्षे—आत्ममनःसंयोगादिना ज्ञानमुत्पद्यते तच्च क्षणिकमिति पक्षे। तत्तद्व्यक्तीति। तत्तज्ज्ञानव्यक्तयः तासां भेदाः ध्वंसाः प्रागभावाः समवायः ज्ञानत्वजातिः आदिपदेन ज्ञानकरणतत्सम्बन्धादिकं चेत्येतेषां स्वीकारे गौरवादित्यर्थः। एकत्वाभ्युपगमे-सर्वपदार्थगोचरैकैव ज्ञानव्यक्तिरिति स्वीकारे। अतिलाघवात्-तस्या एवात्मत्वाङ्गीकारेण धर्म्यन्तरकल्पनातोऽतिलाघवात्। ननु यदि सर्वविषयमेकमेव ज्ञानं का गतिस्तर्हि घटज्ञानं पटज्ञानाद्भिन्नमिति ज्ञानभेदप्रतीतेस्तत्राह—घटज्ञानमिति। घटज्ञानं पटज्ञानमित्यादौ य उपाधिभेदः अवच्छेदकवृत्तिविशेषः तत्पुरस्कारेण तद्वैशिष्ट्येन ज्ञानभेदप्रतीतेः—घटज्ञानं पटज्ञानाद्भिन्नमिति घटमठादिनाऽऽकाशस्येव स्वरूपज्ञानस्य भेदप्रतीतेः। तथा च वस्तुतस्तत्र प्रमाणजन्यवृत्तीनां धात्वर्थरूपाणामेव भेदो विषयो न स्वरूपज्ञानस्य अनुव्यवसायस्थानीयस्य तस्य लाघवादेकत्वाभावः।

ज्ञानमित्युपाधिभेदपुरस्कारेणैव ज्ञानभेदप्रतीतेः, स्व-
तस्तु ज्ञानं ज्ञानमित्येकस्वरूपावगमात्, तदुत्पत्तिविना-
शप्रतीत्योश्चावश्यकल्प्यविषयसम्बन्धविषयतयाप्युपप-

न्यायरत्नावली।

इत्युपाधिभेदपुरस्कारेणेति। धर्मिप्रतियोगिरूपोपाध्योरित्थं-
भूतौ घटविषयकत्वपटविषयकत्वरूपौ यौ भेदौ विशेषौ तत्पुरस्का-
रेण तदुल्लेखेनेत्यर्थः। एवकारार्थं स्फुटयति—स्वत इति। उपा-
धिपुरस्कारं विनेत्यर्थः। ज्ञानं ज्ञानमित्येकरूपावगमात् ज्ञानमित्या-
कारकसर्वप्रत्ययैरेकस्यैव ज्ञानस्वरूपस्य विषयीकरणात्, तुशब्दे-
तज्ज्ञानव्यक्तिरेतज्ज्ञा(१)नव्यक्तिभिन्नेत्युपाध्यपुरस्कृतप्रत्ययो ना-
स्तीत्युक्तम्। ननु ज्ञानस्य उत्पत्तिनाशप्रत्ययात् कथमात्मरूपत्
तत्राह—तदुत्पत्तीत्यादि। विषयसम्बन्धेति। विषयज्ञानो-
भयसम्बन्धेत्यर्थः। विषयज्ञानयोस्सम्बन्धमविषयीकृत्य 'ज्ञानमुत्प-
न्नन्नष्टमि'ति प्रत्ययस्यानुदयात् ज्ञानोत्पत्त्यादिप्रत्यये ज्ञानविषय-
सम्बन्धविषयकत्वमवश्यं कल्प्यम्, तथा च 'घटज्ञानमुत्पन्नन्नष्टमि'ति

नारायणी।

एवकारार्थमाह—स्वत इति। उपाधिपुरस्कारं विनेत्यर्थः। एकरूपावग-
मात्-एकाकारेणावभासमानत्वात्। तथा चात्रायं प्रयोगः 'घटज्ञानं प-
ज्ञानात्स्वतो न भिद्यते उपाधिपरामर्शमन्तरेणागृह्यमाणभेदवत्त्वाद्गग-
नवत्, एकस्या एव संविदो गगनस्येवोपाधिभेदेन भिन्नव्यवहारो-
पपत्तौ स्वतस्तद्भेदकल्पनायां गौरवमिति दिक्। (२)+ज्ञानव्यक्तेरेकत्वा-
देव+भेदप्रतीतिवदुत्पत्तिविनाशप्रतीतिरप्यन्यथासिद्धेवेत्याह—तदुत्पत्ती-
ज्ञानमुत्पन्नं नष्टमिति ज्ञानोत्पत्तिविनाशप्रतीत्योस्त्वित्यर्थः। अवश्यकल्प्येति
अवश्यकल्प्यो यो विषयस्य ज्ञानेन सह सम्बन्धः विषयविषयि-
भावप्रयोजकः साक्षिणि विषयाकारवृत्तिप्रतिबिम्बितत्वरूपः विषय-
प्रतिबिम्बाश्रयवृत्तिवैशिष्ट्यरूपस्तद्विषयतया विनाशित्वेन तद्विषयक-
त्वेन उपपत्तेः—चरितार्थत्वात्। तादृशसम्बन्धसत्त्व एव 'साक्षात्करो-

(१)—रेकज्ञानेति पाठः प्रामादिको गपुस्तके।
+...+(२) चिह्नितः पाठो नास्ति खपुस्तके

न्यायरत्नावली ।

धीरुपपद्यते, 'अयमिदानीं शिखी जातः, अयं शिखी नष्ट' इति धीवत् विशेषणोत्पत्तिनाशविषयकत्वात् । तथा हि प्रत्यक्षज्ञानस्थले यावन्मनोऽवच्छिन्नचिता घटादेस्सम्बन्धस्तिष्ठति तावदेव 'घटमहं साक्षात्करोमी'ति व्यवहारात्, तादृशसम्बन्धोत्पत्तिनाशावेव 'घटप्रत्यक्षमुत्पन्नन्नष्टमि'ति धीविषयौ। स च सम्बन्धो वृत्तेः चिदुपरागार्थत्वपक्षे मनोऽवच्छिन्नचिति घटादेः स्वावच्छिन्नवृत्तिप्रतिबिम्बितत्वम् । आवरणनाशार्थत्वपक्षे स्वनिष्ठस्याज्ञानविषयत्वस्य प्रयोजकं यत् स्वावच्छिन्नवृत्त्यादिकन्तद्विशिष्टत्वम्(१) । 'अर्थविवेचनज्ञानामी'तिधीस्थले घटादिविषयकस्यासत्त्वापादकाज्ञानस्य आश्रयत्वाभावः । यावन्मनोऽवच्छिन्नचितिः तावदेव घटादि जानामीति व्यवहारात् तादृशाभावरूपस्य घटादिसम्बन्धस्य उत्पत्तिनाशावेवोक्तधीविषयौ, असत्त्वापादकाज्ञानाश्रयत्वाभावविशिष्टचितः स्वाकारवृत्तिप्रतिबिम्बितचितस्तादृशाज्ञानाविषयकत्वप्रयोजकविशिष्टचितो वा जानात्यर्थत्वेनोक्तव्यवहारे उक्ताभावस्य विशेषणत्वात् । ननूक्ताभावोऽत्यन्ताभाव एव, अज्ञाननाशो हि न ज्ञानेन जन्यते, किन्तु ज्ञानम् अज्ञानतत्कार्यविरोधीत्युक्तम् तथा च कथं तस्योत्पत्तिविनाशाविति चेत्, सत्यम् । तथापि तत्तत्कालस्योत्पत्तिविनाशसम्भवेन तत्तत्कालविशिष्टाधिकरणात्मकविशेषणतासम्बन्धविशिष्टरूपेण उक्ताभावस्य उत्पत्तिनाशसम्भवात् तदतिरिक्तानित्यविशेषणतादेरभावीयसम्बन्धत्वपक्षे तत्तत्कालावच्छिन्नरूपेण तस्य तत्सम्भवात्। स हि सम्बन्धो नित्योऽपि प्रतियोगिमति देशे प्रतियोगिसम्बन्धानवच्छेदककालावच्छिन्न एव, तथा च घटाद्याकारमनोवृत्तिकाल एव घटाद्यज्ञानाभावसम्बन्धस्य प्रमातरि

(१)—इति विवेचनमिष्यते इदं जानाति साक्षात्करोति इत्यर्थविवचने जानामि० इति घपुस्तके पाठाधिक्यम् ।

न्यायरत्नावली ।

स्वीकारात्, तत्कालावच्छिन्नरूपेण तदुत्पत्त्यादिसम्भवः । सुखादेरपि विद्यमानत्वदशायामेव प्रमातर्यज्ञानाभावस्वीकारात् तत्कालावच्छिन्नस्य तदभावस्य उत्पत्त्यादिसम्भवः । घटादिकार्यं प्रति जीवस्योपादानत्वपक्षे घटादौ विद्यमाने जीवतादात्म्यस्य तदा सदा सत्त्वात् 'सदैव घटादिकं जानामी'ति प्रत्ययापत्तिः, विद्यमानसुखादाविव भासकतानियामकतादात्म्यरूपस्य जीवोपरागस्य सत्त्वात्, अतोऽसत्त्वापादकाज्ञानं तादृशप्रत्ययविरोधिघटाद्यवच्छेदेन स्वीक्रियते । तथा चोक्ताज्ञानाविषयत्वघटित एव जानात्यर्थः, न तु घटादितादात्म्यापन्नजीवचित् अतो नोक्तानुपपत्तिः । यदा तु ब्रह्मैव घटाद्युपादानं तदा उक्ततादात्म्यास्वीकारात् असत्त्वापादकाज्ञाने मानाभावात् तदविषयत्वघटितो जानात्यर्थो न सम्भवतीति घटाद्याकारवृत्तिप्रतिबिम्बितचैतन्यं घटादिज्ञानम्, सुखादिप्रतिबिम्बितं सुखादिज्ञानम् । न च जीवस्य जगदुपादानत्वपक्षेऽप्युक्ताज्ञाने मानाभावः, घटाद्याकारवृत्तिप्रतिबिम्बिता चित् घटादिज्ञानमित्यादेर्वक्तुं शक्यत्वात् इति वाच्यम्(१)। जीवोपादानस्य वाचस्पतिसम्मतत्वेन सिद्धान्तबिन्दावुक्तत्वात् । वाचस्पतिमते च वृत्त्यादौ चित्प्रतिबिम्बास्वीकारात् आवरणभङ्गार्थत्वमेव वृत्तेस्स्वीक्रियते, न तु प्रतिबिम्बघटितापरागार्थत्वम् । यदि च वाचस्पतिमतेऽपि चिदुपरागो वृत्तेः प्रयोजनम् अन्यथा तन्मते पल्लवाज्ञानस्वीकारे त्वावरणभङ्गस्य प्रयोजनत्वसम्भवेऽपि तदस्वीकारपक्षे प्रयोजनाभावात्, तदा विषयावच्छिन्नचिति जीवचितोर्भेदनाश एव प्रयोजनम् वृत्तेरिति वाच्यम्, सोऽयं वृत्तेरभेदाभिव्यक्त्यर्थत्वपक्षः । असत्त्वापादकाज्ञानास्वीकारपक्षे जीवचैतन्यस्य घटादिना तादात्म्यस्वीकारपक्षे च घटाद्याकारवृत्तिप्र-

(१) अत्र 'इति वाच्यम्' इति पाठस्त्रुटितो गपुस्तके ।

त्तेः, उपाधिपरामर्शमन्तरेण स्वत एव घटात् घटान्तरस्य भेदप्रतीतेः, तत्प्रतिबन्दिग्रहासम्भवात्, आका-

न्यायरत्नावली।

तिबिम्बितरूपेण सुखादिप्रतिबिम्बितरूपेण च चित उत्पत्त्यादिसम्भवात्। चित्प्रतिबिम्बानङ्गीकर्तृवाचस्पतिमते तु वृत्तिविशिष्टरूपेण सुखादिविशिष्टरूपेण च चित (१)उत्पत्त्यादिव्यवहार इति भावः। ननूपाधिविशिष्टरूपेण भेदमादाय भेदबुद्धिमुपपाद्यैकत्वसमर्थने घटादावप्येकत्वं स्यात्तत्राह—उपाधीति। तत्तद्देशकालाविशिष्टत्वरूपोपाधीत्यर्थः। परामर्शमुल्लेखमन्तरेण (२)विना। स्वतः-तत्तद्घटव्यक्तित्वाभ्याम्, तत्प्रतिबन्दिग्रहासम्भवात्—घटादेरप्येकत्वमस्तु भेदधीस्त्वौपाधिकभेदेन उपपादनीयेति प्रतिद्वन्द्विन उपादानासम्भवात्। ननु तथापि पुरुषभेदेन ज्ञानं वाच्यम् चैत्रीयं ज्ञानं न मैत्रेऽस्तीत्यादिप्रत्ययात्तत्राह—आकाशेत्यादि। 'घटाकाशं पटे नास्ति,

नारायणी।

मीत्यादिप्रतीतेः, असत्त्वे चाप्रतीतेस्तादृशसम्बन्धनाश एव लाघवात्तादृशप्रतीत्योर्विषय इति भावः। अपिना वृत्तिनाशसमुच्चयः। नन्वेवं घटादेरपि 'स घट एतद्घटाद्भिन्न' इति तत्तेदन्तोपाधिपरामर्शेनैव भेदप्रतीतेः स्वरूपत एकत्वमस्तु तत्राह—उपाधीति। तत्तद्व्यक्तिस्वरूपतत्वादेर्वक्ष्यमाणरीत्या स्वरूपत्वात्तदतिरिक्ततत्तद्देशकालविशिष्टत्वरूपोपाध्युल्लेखं विनेत्यर्थः। स्वत एव—तत्तद्व्यक्तित्वाभ्यां, भेदप्रतीतेः—भेदप्रत्यक्षात्। तत्प्रतिबन्दिग्रहासम्भवात्—ज्ञानैकत्वप्रतिबन्दिनो घटादेरेकत्वस्य ग्रहासम्भवात्, घटादीनां भेदप्रतीतेरुपाधिपरामर्शविषयकत्वं विनाप्युपपत्तेर्ज्ञानभेदप्रतीतिसमकक्षत्वाभावादिति संक्षेपः। स्वमते प्रतिबन्दिशङ्कामपाकृत्य परमते तामाह—आकाशेति। घटमठाद्युपाधिपुरस्कारेणैव भिन्नतया प्रतीयमानस्य वस्तुतः स्वतो भेदाङ्गीकारे घटाकाशो

(१)—चितः उत्पत्त्यादिसंभवाच्च घटसुखादिज्ञानस्य उत्पत्त्यादि० इत्यधिको घपुस्तके पाठः।

(२) अन्तरेण नाना इति गपुस्तके पाठः प्रामादिकः। घपुस्तके तु परामर्शमुल्लेखं स्वतस्तु इत्यादिः पाठः।

शकालदिशामपि नानात्वापत्तेश्च, कर्तृत्वादेर्वास्तवत्वे-

न्यायरत्नावली।

तद्धटकाल एतद्धटकालो न, प्राची न प्रतीची' इत्यादिप्रत्ययैराकाशादिस्वरूपभेदो विषयीक्रियताम् । अथ तत्र घटकालोपाधिदिगुपाधिविशेषविशिष्टरूपेण भेदो विषयस्तर्हि प्रकृतेऽपि चैत्रीयत्वादिविशिष्टरूपेणाभावो विषय इति न ज्ञानं नानेति भावः । ननु 'न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वा' दित्यादिश्रुत्या घ्राणजमनोवृत्त्यादिसामर्थ्यरूपघ्रात्यादेरविनाशोक्तेः आत्मनः कृत्यादिजननशक्तिरूपकर्तृत्वादेर्ज्ञानानुच्छेद्यतया सत्यत्वेन कथमात्मनः पारमार्थिकत्वेन धर्माभाववत्त्वम् तत्राह—कर्तृत्वादेरित्यादि । अनिर्मोक्षेति । 'विद्वान्नामरूपाद्विमुक्तः' इत्यादिश्रुत्या सर्वनामरूपोच्छेदस्य ज्ञानाधीनतया बोधितस्य त्यागेत्यर्थः । तथा च न हीत्यादि(१)श्रुतिर्घ्राणेन्द्रियाद्यभिव्यक्तचित्स्वरूपानाशबोधिका, अत एव 'न तु तद्द्वितीयमस्ति ततोन्यद्विभक्तं यज्जिघ्रे'दित्याद्युत्तरवाक्येन चिदन्यस्य विषयतदाकारवृत्तितत्साधनेन्द्रियाभावेन घ्राणजप्रत्यक्षाभावो न तु चिदभावादिति उक्तमिति भावः । अथवा कर्तृत्वादिधर्मोत्पत्तिनाशाभ्यामात्मन उत्पत्त्याद्यावश्यकत्वे कथं नित्यज्ञानरूपता तत्राह—कर्तृत्वादेरिति । तथा च मिथ्याधर्मोत्पत्त्या-

नारायणी।

मठाकाशाद्भिन्नः, पूर्वकालो नोत्तरकालः, प्राची न प्रतीचीत्यादिप्रत्ययैराकाशकालदिशामपि स्वरूपतो नानात्वापत्तेरित्यर्थः । ज्ञानैकत्वनित्यत्वे प्रसाध्य निर्धर्मकत्वसाधकं 'यदि वस्तुतः कर्तृत्वादिरूपधर्मवान्स्यात्तदा प्रागभावासहवृत्तियावद्गुणनाशस्य धर्मिनाशनान्तरीयकत्वात्कर्तृत्वादेरनिवृत्त्या अशेषगुणनिवृत्तिरूपमोक्षभागी न स्यादि'ति तर्कान्तरमाह—कर्तृत्वादेरिति । कृतिमत्त्वादेरित्यर्थः। आदिपदेन प्रमातृत्वभोक्तृत्वादेः परिग्रहः । अनिर्मोक्षेति । अशेषविशेषगुणनिवृत्तिरूपमोक्षस्यासम्भवप्रसङ्गात् । स्वप्रकाशसुखरूपत्वान्नित्य इत्युक्तम्, तत्र हेतुतावच्छेदकं स्वप्रकाशत्वं

( १ )—श्रुतिः प्राणेन्द्रियादि॰ इत्यादिः पाठः घपुस्तके ।

ऽनिर्मोक्षप्रसङ्गात्, स्वप्रकाशानभ्युपगमे च जगदान्ध्यप्रसङ्गात्, परमप्रेमास्पदत्वेन च तस्यानन्दरूपत्वात्,

न्यायरत्नावली।

द्विना नात्मन उत्पत्त्यादीति भावः। ननु स्वप्रकाशसुखरूपत्वेन नित्यत्वं साधनीयं तत्र 'स्वप्रकाशसुखरूप आत्मा यदि नित्यो न स्यात् तदा मोक्षरूपपरमपुरुषार्थो न स्यादि'ति तर्कोऽनुकूलो वाच्यः, स्वप्रकाशत्वे तु किं साधकम्? तत्राह—स्वप्रकाशेत्यादि। चकारस्तुशब्दार्थे। सुखरूपस्यात्मनो यदि स्वप्रकाशत्वं न स्वीक्रियते, तदा जगतः श्रवणाद्यधिकारिमात्रस्य मोक्षबोधरूपपरमपुरुषार्थादर्शनरूपान्ध्यप्रसङ्गः, द्वितीयाभावेन मोक्षरूपात्मसुखस्य परप्रकाश्यत्वासम्भवात्। अप्रकाशमानसुखस्यापुरुषार्थत्वात्। अथवाऽऽत्मनः स्वप्रकाशत्वास्वीकारे जगत्सु सर्वदृश्येष्वान्ध्यस्याप्रकाशनस्य प्रसङ्गः। अप्रकाशेनात्मचैतन्येन दृश्यप्रकाशनासम्भवात्, प्रकाशान्तराणां कल्पने अनवस्थानादित्यर्थः। आस्तां स्वप्रकाशत्वं सुखरूपत्वे को हेतुः? तत्राह—परमप्रेमास्पदत्वेनेति। चकारस्तुशब्दार्थे, माभूवमिति न, किन्तु भूयासं सदेतिच्छा प्रेमा, सा परमा अन्येच्छानधीना, तद्विषयत्वेनात्मनः सुखरूपतासिद्धेः। असुखे हीच्छा सुखरूपफलेच्छाधीनैव न तदनधीना। यद्यपि सुखरूप आत्मा सिद्धः, तथाप्युत्तरकालसम्बन्धविशिष्टरूपेण तस्य भावित्वेनैवेच्छाविषयत्वम्। ननु सुख इव

नारायणी।

साधयति—स्वप्रकाशेति। आत्मनः स्वकाशत्वानङ्गीकारे जगतो-दृश्यजातस्य आन्ध्यप्रसङ्गात्-व्यवहारानुपपत्तेरित्यर्थः। सर्वस्यापि जगतो मायिकत्वेन जडस्य (१)प्रकाशकत्वासम्भवात्, आत्मनोप्यस्वप्रकाशत्वेन प्रकाशान्तरसापेक्षस्य प्रकाशकत्वायोगाज्जगद्व्यवहारलोपप्रसङ्गात्। दृश्यजातव्यवहारजनकः स्वतः स्फूर्त्तिमानात्मेति यावत्। हेतुं साधयति—परमेति। स्वत इच्छाविषयत्वेनेत्यर्थः। तस्य-आत्मनः, स्वत-

(१) स्वप्रकाशत्वासंभवादिति खपुस्तके

निर्धर्मकनित्यस्वप्रकाशसुखात्मक एवात्मा-इत्याद्याः। तस्मात् परिशेषात् भ्रान्तिरियमिति स्थिते तत्कारणमपि

न्यायरत्नावली।

दुःखाभावेऽपि परमप्रेमदर्शनात् दुःखाभाव एव आत्मा किं न स्यादिति चेन्न । सुखत्वेन ज्ञातत्वमेवोक्तप्रेम्णः प्रयोजकम्, न तु दुःखाभावत्वेन ज्ञातत्वम्, गौरवात् । तथा च सुखाभिव्यक्तिसाधनत्वज्ञानेनैव दुःखाभावे प्रेमेति सुखाभिव्यक्तीच्छाधीनोऽयं परमप्रेमविषय इति परमप्रेमाविषयत्वेन दुःखाभावरूपत्वानुमानासम्भव इति भावः । अत्रेदं पर्यवसितम्। (१)धर्मधर्मिभावानुपपत्तेश्चेत्यन्तं निर्धर्मकेत्यत्र तर्काणां हेतुत्वबोधकम्, नानात्वापत्तेश्चेत्यन्तं तु नित्येत्यत्र, अनिर्मोक्षप्रसङ्गादित्यन्तं तदुभयत्र, परिशिष्टं स्वप्रकाशसुखरूपत्वे हेतुपरम् । तस्मात्-आत्मनः निर्धर्मकत्वेनात्मनि प्रतीयमानस्य मनुष्यादितादात्म्यकर्तृत्वादेर्मिथ्यात्वात् । इयम्-अहं मनुष्यः कर्त्ता भोक्तेत्यादिधीः, तत्कारणं-सविषयकभ्रमस्य परि

नारायणी।

त्वम्-अन्यविषयकेच्छानधीनत्वम्। तथा चायं प्रयोगः।'आत्मा सुखस्वरूपः अन्यविषयकेच्छानधीनेच्छाविषयत्वात्, यन्नैवं तन्नैवम्, यथा पुत्रादयः' तदिच्छायाः स्वीयसुखेच्छाधीनत्वात्, आत्मनि तु स्वत्व इच्छाविषयत्वं 'माभूवं न किन्तु भूयास'मिति स्वानुभवसिद्धमिति सुखरूपतासिद्धिरिति संक्षेपः। फलितमाह—निर्धर्मकेति । उपसंहरति—तस्मादिति । श्रुतियुक्तिभिरकर्तृभोक्तृरूपतालाभादित्यर्थः । परिशेषात्—(२) स्मृतित्वप्रमातृत्वयोर्बाधात्। इयम्-अहं कर्ता मनुष्य इत्यादिधीः । तत्कारणमपि—भ्रान्तेः कारणमपि, योग्यं—भ्रमत्वनिर्वाहकं परिणामितासमर्थं च किञ्चिद्भावरूपं कल्पनीयम्-अनुमेयम् 'अहं मनुष्य इत्यादिभ्रमः सोपादानकः कार्यत्वाद्घटवदि'त्याद्यनुमानेनानुमेयमिति भावः। नन्वनुमानप्रमाणसिद्धस्य तस्य प्रामाणिकत्वेन सत्यत्वापत्ते

(१) धर्मधर्मिभावापत्तेश्चेति सर्वत्र पाठः स प्रामादिक एव मूले धर्मधर्मिभावानुपपत्तेश्चेत्यस्यैव सत्त्वात् तथैव ग्रन्थसङ्गतेश्चेति ।

(२)—स्मृतित्वप्रमात्वयोर्बाधात इति खपुस्तके पाठः युक्तश्च ।

योग्यं किञ्चित्कल्पनीयम् । कल्प्यमानं च तदद्वितीयात्मनि अध्यस्ततयैव धर्मिग्राहकमानेन सिद्ध्यतीति 'न जानामी'ति साक्षिप्रतीतिसिद्धमनिर्वाच्यमज्ञानमेव तत् । न

न्यायरत्नावली ।

णामिकारणम्, योग्यं—परिणामितायोग्यम् । ननु तस्य कल्पनारूपमानविषयत्वेन सत्त्वादद्वैतश्रुतिविरोधः तत्राह—कल्प्येत्यादि । यतो अद्वितीयत्वेन श्रुत्यनुमानसिद्ध आत्मनि कल्प्यमानम् अतत्स्वरूपात्मकधर्मिग्राहकमानेन कल्पनारूपेण तदध्यस्तं मिथ्याभूतमेव कल्प्यं भवतीत्यर्थः । इति न जानामीत्यादि । यतः कल्पनया मिथ्यात्वेन सिध्यति, अतोऽनिर्वाच्यं तद्वस्तु अहमात्मानं न जानामीत्याकारसाक्षिसिद्धाज्ञानाभिन्नमेवेत्यर्थः । तस्य साक्षिसिद्धाज्ञानैक्योक्तेः फलमाह—न चेत्यादि । इदम्—उक्तसा-

नारायणी ।

द्वैतानुपपत्तिस्तत्राह—कल्प्यमानमिति । श्रुतियुक्तिसिद्धाद्वैतान्यथानुपपत्त्या द्वैतभ्रमकारणतया कल्प्यमानमित्यर्थः । अद्वितीयात्मनि—द्वितीयसामान्याभाववति, धर्मिग्राहकमानेन—अद्वितीयत्वान्यथानुपपत्तिगर्भिततत्काल्पनिकानुमानेन, अध्यस्तमेव—प्रतीतिमात्रशरीरमेव, सिध्यति—अनुमितिविषयो भवति । अध्यस्ततयैवेति पाठे तु कल्पितत्वेनैव सिध्यति, कल्पितत्वप्रकारकानुमितिविषयो भवतीति यावत् । अद्वैतश्रुत्या सत्यत्वबाधादिति भावः । न केवलमानुमानिकं किन्तु प्रत्यक्षसिद्धमपीत्याह—न जानामीति । भ्रममात्रशरीरत्वात् जानामीत्याकारसाक्षिरूपप्रतीतिविषयसदसद्भिन्ना(१)ज्ञानमेव तत्कल्प्यमानम्, तथाच प्रत्यक्षानुमानयोः एकविषयकत्वे लाघवान्न जानामीति पदम् अधर्मादिपदवद्भावपरमेव नाभावपरमिति भावः । ज्ञानाभावसमनियतस्य ज्ञानाभावरूपतायामपि लाघवमस्तीत्याशङ्क्य प्रत्यक्षप्रतीतेरभावपरत्वं कण्ठतो वारयति—नचेदमिति । इदम्—उक्तप्रतीतिसिद्धमज्ञानम्, अभावरूपम्—ज्ञानाभावरूपम्, ज्ञानस्य—ज्ञानत्वेन प्रतिपादितसाक्षिण्युक्तेः, नित्यत्वेन—ध्वंसप्रागभावाप्रतियोगित्वेन, तदभावानुपपत्तेः—स्वरूपज्ञानाभावस्यासम्भवात् ।

(१) सदसद्भिन्नाज्ञानाभिन्नमेव तत्कल्प्यमानमित्यर्थः ।

चेदमभावरूपम् । ज्ञानस्य नित्यत्वेन तदभावानुपपत्ते-रित्युक्तत्वात् । धर्मिप्रतियोगिज्ञानाज्ञानाभ्याञ्च व्याघा-

न्यायरत्नावली।

क्षिसिद्धम् अज्ञानम्—अभावरूपम्—आत्मज्ञानाभावरूपम् । ज्ञान-स्य-आत्मव्यवहारप्रयोजकसाक्षिरूपस्य । (१)तदभाव इति। आत्मव्यवहारप्रयोजकज्ञानाभावेत्यर्थः । नन्वात्मविषयकज्ञानाभा-वरूपं तत्, साक्षिज्ञानन्तु न तथा तत्राह—धर्मीत्यादि । 'आत्मा-नमहं न जानामीति' प्रत्यये आत्मज्ञानाभावस्याहमर्थे धर्मिणि विषयी-करणे अभावबुद्धौ धर्मिप्रतियोगिज्ञानयोर्हेतुत्वात् पूर्वं तयोस्सत्त्वे अहमर्थे आत्मज्ञानाभावस्यासत्त्वादुक्तप्रत्ययस्याप्रमात्वापत्तिः । पूर्वं तयोरसत्त्वे कारणाभावादुक्तप्रत्यय एव नोत्पद्यते । अथ तयो-र्नाशोत्पत्तिक्षणे उक्तप्रत्ययोत्पत्तौ नोक्तदोष इति चेन्न । तादृशज्ञा-नयोस्स्वरूपसतोरेवाभावधत्त्वधीप्रतिबन्धकत्वेन उक्तक्षणेऽपि तद-नुपपत्तेः । तदुक्तं—'न हि जानन्नेव न जानामीति प्रत्येती'ति। उक्तप्रत्ययस्य धर्मिप्रतियोगिविषयकत्वतदभावाभ्यां व्याघातस्या-परिहाराच्च । यथा ह्युक्तप्रत्ययस्य उत्पत्तिक्षणे पूर्वोत्पन्नयोस्तयो-

नारायणी ।

अस्तु तर्हि वृत्तिज्ञानाभाव एव तद्विषयस्तत्राह–धर्मीति । धर्मी अहमर्थः प्रतियोगिज्ञानं तयोर्ज्ञानसत्त्वे ज्ञानसामान्याभावस्यासिद्धतया तादृशप्रत्ययस्याप्रमात्वप्रसङ्गो व्याघातः । ज्ञानासत्त्वे तु न जानामीति ज्ञानाभावप्रमाया अनुत्पत्तिप्रसङ्गो व्याघातः । धर्मिप्रतियोगिनोर्ज्ञानस्याभावबुद्धिकारणत्वात् तयोर्ज्ञानं विना तादृशप्रमोत्पत्तेरसम्भवादित्यर्थः । ननु सामान्यतो न 'जानामीत्यहमज्ञ' इत्यादिप्रतीतिर्नास्त्येव किं'न्त्वहमात्मानं न जानामी'त्याद्याकारिकैव, तस्याश्चात्मादिज्ञानप्रागभाव एव विषयो लाघवादिति नाज्ञानसिद्धिरिति चेन्न । यथाकथंचिद्यत्किञ्चिदात्मज्ञानव्यक्तिसत्त्वे सामान्यतो ज्ञानप्रागभावविषयकत्वस्य वक्तुमशक्यत्वात्

(१) ज्ञानाभाव इति प्रतीकः सर्वत्र दृश्यते, मूलेऽत्रैतादृशं पदं न विद्यते अतःतदभावानुपपत्तेरिति पदघटकस्य तदभाव इत्यस्य ज्ञानाभाव इति प्रतीको बोध्यः ।

तापत्तेः। नापि भ्रमसंशयतत्संस्कारपरम्परारूपम्। अपरोक्षत्वात्, अतीतानागतभ्रमसंशयतत्संस्काराणा(१)-

न्यायरत्नावली।

त्त्वे तयोरात्मविषयकत्वेन व्याघातः, तथोक्तप्रत्ययस्यैव धर्मिप्रतियोगिनोरात्मघटितत्वेनात्मविषयत्वात् वर्तमानमात्मज्ञानाभावं गृह्णतः उक्तप्रत्ययस्यानुपपत्तिरिति भावः। ननु निर्विकल्पकात्मज्ञानाभावरूपत्वे नोक्तदोष इति चेन्न। तादृशस्य आपातात्मज्ञानस्य सत्त्वेऽप्यात्माज्ञानप्रत्ययोदयात्। न च मुक्त्युपधायकज्ञानाभावरूपत्वे न दोष इति वाच्यम्। मुक्त्युपधायकत्वमविषयीकुर्वतोऽपि तादृशप्रत्ययस्योत्पत्तेः। नापीति। इदमित्यनुषज्यते। भ्रममात्रं नाज्ञानम्, दिनद्वयादिवर्तिन एकाज्ञानस्य प्रत्यभिज्ञानात्, अतो भ्रमादिपरम्परारूपं वाच्यम्, तथा च नापरोक्षत्वसम्भव इत्याशयेनाह—अतीतेत्यादि। ननु सति भात्यपि आत्मनि 'नास्ति न भाती'-त्यादिव्यवहारोत्पादकत्व'मस्ति भाती'तिव्यवहाराभावप्रयोजकत्वञ्चावरणात्मकत्वम्, तच्च भ्रमादेरपि सम्भवति, अपरोक्षं तु अतीतानागतांशे न स्वीक्रियते, किन्तु वर्तमानभ्रमाद्यंशे अत आह—

नारायणी।

विशेषज्ञानत्वग्रहं विनापि तादृशप्रतीतेर्विशेषव्यक्तिप्रागभावविषयकत्वस्याप्ययोगादित्यन्यत्र विस्तरः। साङ्ख्यमतं निराकरोति नापीति। इदमित्यनुषज्यते। भ्रममात्रं नाज्ञानं दिनद्वयादिवर्त्तिन एकाज्ञानस्य प्रत्यभिज्ञानात् अतो भ्रमादिपरम्परारूपं वाच्यं तथाच नापरोक्षतया प्रतीयत इत्याशयेनाह—अतीतेति। ज्ञातुमशक्यत्वात्—न जानामीत्यपरोक्षतया ग्रहीतुमशक्यत्वात्। ननु 'सुरभि चन्दनम्' इत्यादौ सौरभांशे परोक्षमपि चन्दनांशेऽपरोक्षं यथा तथा न जानामीत्यादिकमप्यतीताद्यंशे परोक्षमपि वर्तमानाद्यंशेऽपरोक्षमतो ज्ञानस्य भ्रमाद्यात्मकत्वे न कि-

(१) परोक्षत्वेनेति कखपुस्तकयोः पाठः तथात्वे पूर्वेणान्वयः, अपरोक्षत्वेनेति पाठ उत्तरपदे इति द्वयोः पाठयोः साधुत्वम्।

श्चापरोक्षत्वेन ज्ञातुमशक्यत्वात् । आवरणात्मकत्वात् भ्रमाद्युपादानत्वाच्च आत्मनो निर्विकारत्वात् । अन्तः

न्यायरत्नावली ।

भ्रमाद्युपादानत्वादिति । नन्वात्मैवोपादानमास्ताम् तत्राह—आत्मन इति । निर्विकारत्वादपरिणामित्वात् । तथा च परिणामिकारणमनात्मैवेति भावः । तज्जन्यत्वादिति । तथा च प्राथमिककार्यादिसर्वकार्येषु एकमेव परिणामिकारणं कल्प्यते, (१)ईश्वररूपैककर्तृवत् । न च प्रतिसर्गं प्राथमिककार्येषु निमित्तकारणतया कॢप्तानां संस्काराणामेव परिणामित्वसम्भवादतिरिक्तैककारणकल्पने गौरवमिति वाच्यम् । वीक्षणरूपाद्यकार्ये वीक्षणसंस्कारो वा परिणामिकारणम् ईश्वरप्रसाद(२)रूपमदृष्टं वेत्यत्र विनिगमकाभावात् । ननु वीक्षणत्वावच्छिन्नं प्रति निमित्ततया नादृष्टं कॢप्तम् ,किन्तु ईक्षणाकाशादिसाधारणरूपावच्छिन्नं प्रति, तथा च तादृशरूपविशिष्टे अदृष्टस्य परिणामित्वमस्तु, वीक्षणत्वावच्छिन्नं प्रति निमि-

नारायणी ।

मपि बाधकमित्यत आह—आवरणेति । 'अज्ञानेनावृतं ज्ञान'मित्यादिना प्रतीयमानावरणशक्त्यात्मकत्वादित्यर्थः । अनेकभ्रमादिव्यक्तीनामावरणात्मकल्पनाऽपेक्षयाऽऽवरणात्मकत्वेनैकव्यक्तिकल्पनाया एव लघीयस्त्वादिति भावः । ननु कल्प्यापेक्षया कॢप्तभ्रमवृत्तीनामेव विरुद्धव्यवहारजनकत्वरूपावरणात्मत्वमुचितं धर्मिकल्पनातो धर्मकल्पनाया एव लघुत्वादित्यत आह—भ्रमेति । भ्रमादेः कार्यत्वेन सोपादानत्वावश्यकत्वात् तदुपादानभूतैकव्यक्तिरेवाज्ञानपदवाच्या लाघवात् इति भावः । नन्वात्मैवास्तूपादानं तत्राह—अतमन इति ।। अनात्मनामधिष्ठानभूतेत्यर्थः। निर्विकारत्वात्--अपरिणामित्वात् । तर्ह्यन्तःकरणमेवोपादानमस्तु भ्रमाश्रयतया तस्य कॢप्तत्वादिति तत्राह--अन्तः करणादेरिति । आदिपदेन प्राथमिकवीक्षणरूपकार्यपरिग्रहः । जन्यत्वात्--कार्यत्वात् । तथा च प्राथमिककार्येष्वपि वीक्षणान्तःकरणादिषु सर्वेषु परिणामिकारणतयाऽवश्यकल्पनीयाज्ञानस्य भ्रमादिष्वपि परिणामित्वं कल्प्यते लाघ-

(१)—एककर्तृकत्ववत् इति घपुस्तके । (२)—प्रसादकोपरूपमित्यादिः घपुस्तके ।

करणादेश्च (१)तज्जन्यत्वात् 'देवात्मशक्तिं स्वगुणैर्निगूढा'-

न्यायरत्नावली ।

तया नियतपूर्ववृत्तित्वेन क्लृप्तस्य ईक्षणसंस्कारस्यैव परिणामितयाऽनन्यथासिद्धत्वं लाघवात् कल्पयितुं युक्तमिति चेन्न । गुणत्रयात्मकमज्ञानं सृष्टिकाले वीक्षणरूपेणाकाशादिरूपेण विष(२)मभूतगुणत्रयात्मकेन परिणतं प्रलयकाले समीभूतगुणत्रयात्मकेन ईक्षणाकाशादिसूक्ष्मावस्थारूपेण परिणमते । तथा चावस्थाभेदेऽप्यवस्थावतोऽनुगतरूपस्य न भेदोऽस्ति । पूर्वं तादृशमिदानीमीदृशं जातमिति प्रत्यभिज्ञानात्, 'तद्धेदं तर्ह्यव्याकृतमासीत्' 'भूतग्रामस्स एवायं भूत्वा भूत्वा प्रलीयते' इति श्रुतिस्मृतिभ्याञ्च । ततश्च नानासर्गीयेक्षणेषु यदनुगतं सत्त्वगुणस्वरूपं, तस्यैव तेषु सात्त्विककार्यान्तरेषूपादानत्वं युक्तम् । तज्जातीयकार्यं प्रति अनुगतस्यैव तदुपादानत्वव्यवस्थापकत्वात् । एवं राजसतामसकार्येषु रजस्तमोरूपयोरुपादानत्वं युक्तम् । अत एव गुणत्रयस्वीकारे गौरवात् एकगुणोऽस्तूपादानमित्यपास्तम् । एकगुणस्य सर्वकार्येषु दृक्स्वरूपेण एकेनानुगतत्वभावेन विलक्षणगुणत्रयाविशिष्टेषु तादृशगुणानामुपादानत्वावश्यकत्वात् । यत्तु प्रतिसर्गीयवीक्षणादिषु अननुगतं वीक्षणादिसंस्काररूपं तस्य वीक्षणसंस्कारत्वाद्यनुगतरूपेण निमित्तत्वमेव, तस्मात् गुणत्रयरूपमज्ञानमेव सर्वकार्योपादानमिति भावः । उक्तन्यायानुग्राह्यां श्रुतिमाह—देवात्मशक्तिमिति । देवस्य-सृष्ट्यादिक्रीडावतो ब्रह्मणः, स्वाश्रयां—स्वविष-

नारायणी ।

यादिति भावः । बीजाङ्कुरन्यायेनान्तःकरणतत्संस्काराणामेव कारणत्वसंभवान्नैकमज्ञानं प्रामाणिकमत आह—देवेति । देवस्य स्वप्रकाशस्य ब्रह्मणः

(१) जन्यत्वात् इति कखपुस्तकयोः ।

(२) विषमीभूतगुणेत्यादि अत्र साधु लक्ष्यते, अग्रे प्रलयकाले समीभूतेत्यादिना तथवान्यसङ्गतेः । पाठस्तु सर्वत्र विषयभूतेत्यादिरेव ।

मिति गुणवत्त्वश्रुतेश्च 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्, इन्द्रो मायाभिः पुरुरूप ईयते, अनृतेन

न्यायरत्नावली ।

यिकाम्, शक्ति-कार्यजननसामर्थ्यरूपां मायाम्, स्वगुणैः-स्वात्म-सत्त्वादिगुणैः, निगूढां-घटिताम्। अथवा स्वधर्मैर्वीक्षणाकाशादिसं-स्कारैर्विशिष्टाम्। गुणवत्त्वश्रुतेः-गुणत्रयरूपत्वश्रुतेः। अथवेत्यादिव्या-ख्याने संस्कारवत्त्वश्रुतेः पूर्वं 'किं कारण'मित्यादिप्रश्नमुपन्यस्यते। 'ते ध्यानयोगानुगता अपश्यन्नि'त्यादिवाक्यस्योक्तत्वात्। कार्यजननो-द्यतस्य ब्रह्मणः सामर्थ्यरूपा या माया सर्वकार्येषु कारणम्, सा च त्रिगुणीरूपेत्युक्तम्। अथवेत्यादिव्याख्याने संस्काराश्रयत्वोक्त्या संस्काराणां नोपादानत्वमित्यपि ज्ञापितम्। प्रकृतिं-सङ्कोचका-भावात् सर्वकार्योपादानम्। इन्द्रः-अपरिच्छिन्नत्वेन सर्वोपाधिस-म्बन्धात् नानारूपप्राप्तौ प्रभुरात्मा, मायाभिः-अविद्याभिर्हेतुभिः पुरुरूपः—नानारूप इत्यर्थः, ईयते-ज्ञायते। एकाविद्यापक्षे अदृष्ट-

नारायणी ।

आत्मशक्तिं निजशक्तिं स्वगुणैः स्वावयवात्मकगुणैः सत्त्वरजस्तमोरूपै निगूढां व्याप्ताम्, अत्र पूर्वार्धं 'किं कारणं ब्रह्मे'त्युपक्रम्य 'ते ध्यानयोगानु-गता अपश्यन्नि'ति। तथाच मायाया एव सकलकारणत्वलाभान्न केवलं कार्याणामेवान्योन्यबीजाङ्कुरन्यायेन कारणतेति संक्षेपः। ननु सा शक्ति-रीश्वरज्ञानादिरूपैवास्तु तत्राह—गुणवत्त्वेति। स्वगुणैर्निगूढामिति गुण-वत्त्वश्रुत्या न ज्ञानादिरूपा (१)गुणवत्त्वाभावादिति भावः। ननु स्वगुणैरि-त्यस्य स्वस्य जन्यैर्गुणैर्जीवादृष्टादिभिर्विशिष्टामित्यर्थः, तथाच नाभी-प्सितार्थसिद्धिरित्यतः श्रुत्यन्तरमाह—मायामिति। अजामेकामिति श्रुतिप्रदिपादितसत्त्वरजस्तमोगुणात्मिकां मायाम्, प्रकर्षेण करोतीति प्रकृतिः कारणम्, मायिनं मायाश्रयं मायाविषयं वा। नन्वत्रापि मय् ज्ञान इति धात्वनुसारात् ज्ञानात्मिकैव शक्तिरस्त्वित्यतः श्रुत्यन्त-रमाह—इन्द्र इति। इन्द्रः परमेश्वरो निरुपाधिः, मायाभिः—सत्त्व-

(१) गुणवत्त्वाभावादिति। ज्ञानस्य परमते गुणत्वेन गुणवत्त्वं न भवति गुणे गुणानङ्गीकारादिति भावः।

हि प्रत्यूढाः, नीहारेण प्रावृताः, भूयश्चान्ते विश्वमाया-

न्यायरत्नावली।

दिसहकारिकारणानां नानात्वात् तद्घटितरूपेणाविद्याया नानात्वं बोध्यम्। 'प्रजा अहरहर्ब्रह्म गच्छन्त्यो न विन्दन्ति अनृतेन हि प्रत्यूढा' इत्यत्र अहरहस्सुषुप्तौ गच्छन्त्योऽपि स्थूलसूक्ष्मोपाधिलयेन तदाभिमानकृतब्रह्मभेदशून्या अपि ब्रह्म न जानन्ति, हि—यस्मात्, अनृतेन—मिथ्याभूताज्ञानेन, प्रत्यूढाः—आच्छादितस्वरूपका इति व्याख्यातम्। 'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता' इत्यत्र तमात्मानं न यूयं विदाथ, य आत्मा इमाः प्रजाः जनयामास, कुतो न विद्मः तत्राह—अन्यदित्यादि। अन्यत्—आत्मनो विलक्षणमसद्रूपम्, अन्तरम्—आवारकं व्यवधायकम्—आत्मनि भात्यपि स न भातीति व्यवहारजनकं स भातीति व्यवहारप्रतिबन्धकञ्च, बभूव—अनादिकालं व्याप्यास्ति। ननु तस्यानादित्वमिवाविनाशित्वमपि स्यात् तथा च अस्मान् प्रति तदुपदेशो व्यर्थस्तत्राह——नीहारेणेति। तस्माद्यूयं नीहारसदृशेन

नारायणी।

रजस्तमोरूपाभिः शक्तिभिः, पुरुरूपः-बहुरूपः, ईयते-गम्यते ज्ञायत इति यावत्। 'अजामेका'मित्यादिना गुणत्रयात्मिकायाः शक्तेरेवोपक्रमात्। ननूक्तमजामेकामित्यत्र लोहितशुक्लकृष्णशब्दानामिच्छाज्ञानकृतिपरत्वमत आह श्रुत्यन्तरम्—अनृतेति। 'तद्यथा हिरण्यनिधिं विहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्ब्रह्म गच्छन्त्यो न तं विन्दन्ती'ति पूर्वार्धम्। अयमर्थः। प्रजाः जीवाः अहरहः सर्वदा सुषुप्तौ ब्रह्म गच्छन्त्योऽपि स्थूलसूक्ष्मोपाधिलयेन तदभिमानकृतब्रह्मभेदशून्या अपि ब्रह्म न जानन्ति हि यस्मात् अनृतेन मिथ्याभूतेनाज्ञानेन प्रत्यूढाः आच्छादितस्वरूपकाः। 'ऋतं ब्रह्म, सत्यं ज्ञान'मिति श्रुतेः। तद्भिन्नमज्ञानमनृतम् 'अज्ञानेनावृतं ज्ञानमि'ति भगवदुक्तेरिति भावः। ननु ऋतशब्दस्य 'ऋतं सत्त्वं तथा धर्मः' इति धर्मशास्त्रे धर्मेऽपि प्रयोगादनृतपदेन तद्भिन्नं दुष्कृतमेव ग्राह्यं तथाच तेनाच्छादिताः प्रतिबद्धाः ब्रह्म न जानन्तीति तत्रार्थोऽतः कथमज्ञानसिद्धिस्तत्र श्रुत्यन्तरमाह—

न्यायरत्नावली ।

तेनान्तरेणाच्छादिताः, तथा च नीहारवदेव तस्य विनाशित्वपावारकत्वादिति व्याख्या । 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्ति'रित्यत्र तस्य—आत्मनः अभिध्यानात्-तत्त्वमस्यादिवाक्यतात्पर्यविषयत्वेन (१)तदनुकूलतर्केण च चिन्तनात् श्रवणमननाभ्यामिति यावत्, योजनात्—योगात् निदिध्यासनादिति यावत्, तत्त्वभावात्—साक्षात्काररूपतत्त्वप्राप्तेश्च, विश्वमायायाः—असत्त्वापादकाभानापादकरूपानेकाज्ञानस्य निवृत्तिः, अन्ते प्रारब्धभोगान्ते, भूयः—पुनः, देहादिकार्यरूपविश्वमायानिवृत्तिरिति

नारायणी ।

नीहारेणेति । 'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूवे'ति पूर्वार्धम् । 'जल्प्या चासुतृप उक्थशासश्चरन्ती'त्युत्तरार्धम् । अयमर्थः । तमात्मानं यूयं न विदाथ न वेत्थ य इमाः प्रजाः जजान जनयामास, कुतो न विद्मस्तत्राह—अन्यदन्तरं परमात्मनोऽन्यदावरकं बभूव अस्ति, कथं स्वप्रकाशस्यावरकमस्ति—नीहारेणेति । तुषारेणेव सूर्यवदाच्छादिता इत्यर्थः । (२)प्रकाशमपि प्रकाशकस्य वस्तुमाहात्म्यादाच्छादकं भवत्येव अनुभवसिद्धे तर्कानवकाशादित्यर्थः । न केवलमज्ञानेनाच्छादिताः किन्तु अन्येनापीत्याह—जल्प्येति । जल्पनं जल्पिः कुतर्कस्तेनेत्यर्थः । न केवलं तैरेवाच्छादिताः किन्तु कर्मवासनयापीत्याह—उक्थेति । उक्थं कर्म शंसन्तीत्युक्थशासः कर्मकुर्वाणाः सन्तः चरन्ति भ्रमन्ति । अतो बहिर्मुखत्वादात्मस्वरूपं न जानन्तीत्यर्थः । ननु मिथ्याज्ञानवासनैव प्रतिबन्धकत्वेन तत्रार्थोऽस्त्वित्यतः श्रुत्यन्तरमाह—भूय इति । 'तस्याभिध्यानाद्योजनात्तत्त्वभावादि'ति पूर्वार्धम् । तस्य आत्मनः अभिध्यानात् चिन्तनात् श्रवणमननाभ्यामिति यावत्, योजनात् योगात् निदिध्यासनात्, तत्त्वभावात् साक्षात्काररूपतत्त्वप्राप्तेः, विश्वस्य हेतुभूताया आवरणात्मिकाया मायाया निवृत्तिः । अन्ते प्रारब्धभोगान्ते भूयश्च

(१) तदनुसारियुक्तिविषयत्वेनेति पाठान्तरं घपुस्तके ।

(२) प्रकाशकस्य=स्वस्याज्ञानादेः प्रकाशकस्य ब्रह्मणः=प्रकाशमपि अज्ञानम् ( अज्ञानमिति कर्तृपदाध्याहारः ) आच्छादकं भवत्येव 'अहमज्ञ' इति प्रकाशमान एव आत्मनि अज्ञानानुभवात् 'नहि दृष्टेऽनुपपन्नं नामे'ति न्यायादित्याशयः ।

निवृत्तिः' इत्यादिश्रुतिभ्यश्च मायाऽविद्या अनिर्वाच्यमनृतं तत्त्वज्ञाननिवर्त्यञ्च अज्ञानमेव स्वपराध्यासे कार-

न्यायरत्नावली ।

व्याख्या । आदिपदेन 'अमूढो मूढ इव व्यवहरन् आस्ते माययैव, अविद्यायामन्तरे वर्तमाना' इत्यादिश्रुतिसङ्ग्रहः । मायाविद्येत्यादि । मायादिरूपमेवाज्ञानं स्वपराध्यासकारणम् । श्रुतिभ्यश्चेति चकारात् पूर्वोक्तकल्पनाया लाघवज्ञानसाक्षिप्रत्यक्षसनाथायाः समुच्चयः । तत्र मायाशब्देन सदसद्विलक्षणत्वरूपानिर्वाच्यत्वस्य निरूपणानर्हविचित्रकार्यजनकत्वस्य लाभः, अनृतादि(१)शब्देना-

नारायणी ।

पुनरपि (२)विक्षेपरूपाया निवृत्तिरित्यर्थः । तथाच ज्ञानादज्ञाननाशद्वारा जगन्नाशोक्तेरनाद्यज्ञानमेवावरकं जगदुपादानं सिध्यति उपादाननाशेनैवोपादेयनाशसम्भवादिति भावः । ननु निवृत्तिपदेन तरणमात्रं लभ्यते न नाशः 'मायामेतान्तरन्ती' ति भगवदुक्तेः 'तरति शोकमात्मवि'दिति श्रुतेश्च, तरणं वा सम्बन्धमात्रमतो न ज्ञाननाश्यमज्ञानं तत्र सिद्ध्यतीत्यत आह—आदीति । ( एवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा ) 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवती' त्यादिश्रुतिपरिग्रहः । श्रुतिभ्यश्चेति चकारात् 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः' इत्यादिस्मृतेरज्ञानं विना जीवस्यानवच्छिन्नानन्दाऽप्रकाशानुपपत्तिरूपार्थापत्तेश्च परिग्रहः । तथाच माया न ज्ञानादिरूपा किन्तु ज्ञाननाश्याऽविद्यैव, श्रुत्यैव मायाविद्ययोरेकत्वसमर्थनादिति भावः । तस्माच्तत्तन्मतबाधेन वेदान्तमतसिद्धा मायैव जगदुपादानत्वेन श्रुतिसिद्धेत्याह—मायेत्यादि । सत्त्वादिगुणात्मिका न ज्ञानात्मिका किन्तु अविद्या विद्यानाश्या अतो न सा साङ्ख्याभिमता प्रकृतिः किन्त्वनिर्वाच्यमज्ञानमेवेत्यन्वयः । तदपि न मिथ्याज्ञानवासनारूपं किन्तु अनृतं सद्भिन्नम् । तदपि न दुष्कृतं किन्तु तत्त्वज्ञाननिवर्त्यं साक्षादधिष्ठानसाक्षात्कारनाश्यमित्यर्थः । कार्यादिकं च नैतादृशं परेषा-

( १ ) प्रावृतादिशब्देनेत्यादि—गपुस्तके पाठान्तरम् ।
( २ ) विशेषरूपया इति कपुस्तके शोधितोपि पाठः अशुद्ध एव ।

णाम् । न चात्माश्रयादिदोषप्रसङ्गः । अनादित्वेन (१) तन्निरासात्, अनादित्वेनोत्पत्त्यभावात्, स्वप्रकाशात्मन

न्यायरत्नावली ।

च्छादकत्वरूपाविद्यात्वस्येति भावः । अनादित्वेनेति । आवरणविक्षेपरूपकार्ययोः प्रवाहरूपेणानादित्वात् तत्कारणस्याकार्यत्वरूपमनादित्वं युक्तमिति भावः । ननु तथाप्यज्ञानस्य ज्ञानरूपाध्यासे दोषादिकारणापेक्षणात् आत्माश्रयादिः स्यादेव तत्राह—स्वप्रकाशात्मन इत्यादि । उत्पत्तौ ज्ञप्तौ वा आत्माश्रयादिकं सम्भाव्यते, तत्र ज्ञप्तेरनादित्वेन नाद्यम् । ज्ञप्तेरनादित्वेऽपि यदि स्वप्रकाशत्वं न स्यात् तदा तस्यैव तज्ज्ञप्तिरूपत्वे आत्माश्रयः, तयोः परस्परज्ञप्तिरूपत्वे अन्योन्याश्रयः, ज्ञानान्तरापेक्षायामनवस्था स्यात्; स्वप्रकाशत्वे तु न तदिति भावः । एवञ्च स्वपराध्यासे कारणमित्यस्य स्वपराध्यासे स्वान्यपरिणामिकारणानपेक्षमित्यर्थ इति ध्येयम् । चित्प्रतिबिम्बाध्यासद्वारा मनसः प्रमातृत्वमिति यदुक्तं तत्र 'ननु अध्यासोऽपि नोपपद्यत' इत्यादिनोद्भावितदोषाणां निरसनं कृत्वा इदानीं तदेव प्रमातृत्वं विस्तरेणोपसंहरति-

नारायणी ।

मिति भावः । पूर्वोक्तात्माश्रयादिदोषं परिहरिष्यन्नाह—न चेति । अनादीति । स्वरूपस्य ज्ञप्तेश्चानादित्वादुभयत्रापि नात्माश्रयादिप्रसक्तिरित्याह—अनादित्वेनेति । अज्ञानस्यानादित्वेनैवेत्यर्थः । तन्निरासात्—आत्माश्रयादिनिरासात् । एतेनोत्पत्तौ तन्निरासः ज्ञप्तावप्याह—स्वप्रकाशेति । स्वप्रकाशसाक्षिण एव तज्ज्ञप्तिरूपत्वात्—अज्ञानाध्यासरूपत्वात् । तथाच तस्याप्यनादित्वान्न तत्राप्यात्माश्रयादिदोषः उभयत्र कारणस्यानपेक्षणादिति भावः । ननु तर्हि न कल्पितत्वमज्ञानस्य जन्यस्यैव रजतादेः कल्पितत्वदर्शनात्, जन्यत्वे चानादित्वभङ्ग इति चेन्न । बाधितत्वरूपकल्पितत्वस्यैव तत्राङ्गीकारात् कल्पितशब्दस्योत्प्रेक्षामात्रपरत्वादित्यन्यत्र विस्तरः। चित्प्रतिबिम्बाध्यासद्वारा मनसः प्रमा-

(१) अनादित्वेनैवेति कखपुस्तकयोः ।

एव तज्ज्ञप्तिरूपत्वात्। तेनाज्ञानाध्यासविशिष्टचैतन्येऽहङ्काराध्यासः। तद्विशिष्टे कामसङ्कल्पादीनामहङ्कारधर्माणामिन्द्रियधर्माणाञ्च काणत्वबधिरत्वक्लीबत्वादीनामध्यासः। इन्द्रियाणां तु परोक्षत्वान्नापरोक्षधर्म्यध्यास

न्यायरत्नावली।

तेनाज्ञानेत्यादि। तेन—अध्यासस्य निर्दोषत्वसमर्थनेन, अज्ञानाध्यासविशिष्टे—अज्ञानप्रतिबिम्बितत्वविशिष्टे, अहङ्काराध्यासः—मनोध्यासः। तद्विशिष्टे—मनोविशिष्टे। इन्द्रियधर्माणामिति। चक्षुषः काणत्वं रूपाद्यग्राहकत्वम्, श्रोत्रस्य बधिरत्वं शब्दाद्यग्राहकत्वम्, उपस्थस्य क्लीबत्वं रत्यसामर्थ्यम्। आदिपदात् दूरग्राहकपाटवादिसङ्ग्रहः। न च काणत्वादिकमदृष्टविशेष इति वाच्यम्। मनः काणमित्यादिव्यवहारापत्तेः। ननु इन्द्रियाध्यासमनुक्त्वा तद्धर्माध्यासः कथमुक्तः तत्राह—इन्द्रियाणामित्यादि। धर्म्यध्यासः—धर्मिणि तादात्म्येन अध्यासः। ननु परोक्षतयैव इन्द्रियमपरो-

नारायणी।

क्तृत्वमुक्तम्, तत्र 'नन्वध्यासोऽपि नोपपद्यत' इत्यादिना दत्तदोषानुक्तप्रकारेण निरस्येदानीं तदेव प्रमातृत्वं विस्तरेणोपसंहरति—तेनेति। अध्यासस्य निर्दुष्टत्वसमर्थनेन। अज्ञानेति। अज्ञानप्रतिबिम्बितत्वविशिष्टेऽहङ्कारस्यान्तःकरणस्याज्ञोहमित्यात्मक अध्यासः। तद्विशिष्टे—अज्ञोहमस्म्यहं स्फुराम्यहमात्मेत्याद्यहंकाराध्यासविशिष्टे। कामेति। 'कामः सङ्कल्पो विचिकित्से'त्यादिश्रुत्युक्तानामहङ्कारधर्माणाम्। इन्द्रियधर्माणामित्यनेनादृष्टविशेषरूपाः काणत्वादयो मनोधर्मा वेति मतनिरासः, तथासति मनः काणमित्यादि व्यवहारापत्तेः। नन्विन्द्रियाध्यासमनुक्त्वा कथं तद्धर्माध्यास उक्तस्तत्राह—इन्द्रियेति। परोक्षत्वात्—अतीन्द्रियत्वात्। अपरोक्षधर्म्यध्यासः—अपरोक्षे धर्मिण्यहङ्कारविशिष्टे चैतन्ये तादात्म्येनाध्यासः। अहं चक्षुः श्रोत्रमित्याद्यप्रतीतेः। इतिसिद्धान्त इत्यनेन धर्माध्यासेनैव तद्व्यवहारोपपत्तौ—काण इत्यादिव्यवहारोपपत्तौ—तद्रूपेण धर्म्यध्यासकल्पनमप्रामाणिकमनतिप्रयोजनकमिति

इति सिद्धान्तः। तद्विशिष्टे स्थूलदेहाध्यासो धर्मपुर-

न्यायरत्नावली।

क्षधर्मिणि मनोविशिष्टचैतन्ये अध्यस्यताम् तत्राह—इति सिद्धान्त इति। सयुक्तिका मूलोक्तिरित्थमित्यर्थः। तत्र युक्तिरुच्यते अज्ञोऽहमिति प्रतीतिबलात् अज्ञानविशिष्टे मनोऽध्यासः स्वीक्रियते। अज्ञश्चक्षुः इत्यस्य अहं चक्षुरित्यस्य वा परोक्षाया अपरोक्षाया अपि प्रतीतेरभावात् अज्ञानादिविशिष्टे चक्षुरादेः तादात्म्येन नाध्यासः। अहं चक्षुष्मानित्यादिधीस्तु शरीरस्य इन्द्रियसंयुक्तत्वात् नानुपपन्ना। अत एव 'अयं गुरुत्वाविशिष्टः, अहमदृष्टवानि'त्यादिपरोक्षप्रतीतिबलात् अपरोक्ष एव धर्मिणि परोक्षस्याध्यासः स्वीक्रियते, अत एव 'देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्ते'रित्यत्र भाष्ये इन्द्रियेषु ममाभिमान एव पञ्चपादिकादावुक्तः। ननु धर्म्यध्यासं विना कथं धर्माध्यासः? न च स्फटिकादौ जपापुष्पस्यानध्यासेऽपि तद्धर्मलौहित्याध्यासदर्शनात् न दोष इति वाच्यम्। अप्रतिबिम्बरूपेण धर्माध्यासस्य धर्म्यध्यासव्याप्यत्वादिति चेन्न। धर्माध्यासाधिष्ठाने अवश्यं धर्म्यध्यासः, न तु धर्माध्यासाधारे, तथा सति कामादिधर्मस्य अध्यासाधारे मनोविशिष्टचैतन्ये मनसोऽध्यासाभावेन व्यभिचारापत्तेः। तथा च अविद्यामनोविशिष्टचैतन्यस्य काणत्वादीन् प्रति अध्यासाधारत्वात्, तदध्यासाधिष्ठानस्य च ब्रह्मचैतन्यस्य इन्द्रियाध्यासेऽप्यधिष्ठानत्वात् धर्माध्यासाधिष्ठाने धर्म्यध्यासाधिष्ठानत्वमवश्यमिति नियमो न व्याहतः। अथ धर्म्यध्यासविशिष्टस्यैवाप्रतिबिम्बरूपधर्माध्यासाधारत्वमिति नियम इति चेन्न। अप्रतिबिम्बरूपत्वस्येव नित्यपरोक्षधर्म्यवृत्तित्वस्यापि धर्मविशेषणत्वमादायैवोक्तनियमस्वीकारात्। (१)(मनोवच्छिन्नचिति काणत्वादिविशिष्टरूपेणैव चक्षुरादेस्तादा-

(१) (……) एतच्चिन्हान्तर्गतपाठो घपुस्तके नास्ति।

स्कारेणैवाहं मनुष्य इत्याद्याकारः न तु स्वरूपतः (१)अहं देह इत्यध्यासः। तथा प्रतीत्यभावात्। तद्विशिष्टे च (२)स्थौल्यादीनां देहधर्माणामध्यासः। तद्विशिष्टे बाह्यानां पुत्रभार्यादीनां साकल्यवैकल्यादिधर्माध्यासः। एवं चै-

न्यायरत्नावली।

त्म्येनाध्यासः न तु चक्षुष्ट्वादिधर्मरूपेणेति स्वीकार एव यथाश्रुतोक्तनियमेऽपि क्षमभावाच्च)। धर्मपुरस्कारेण—मनुष्यत्वादिगौरत्वाद्यवान्तरधर्मविशिष्टरूपेण, स्वरूपतः—देहत्वादिसामान्यधर्मविशिष्टरूपेण। प्रतीत्यभावादिति। अहं मनुष्य इत्यादिपूर्वपूर्वधीजन्यसंस्कारस्याहं मनुष्य इत्याद्यध्यासहेतुत्वकल्पनात् तादृशाध्यास उत्पद्यते। अहं देह इत्यादेस्तु प्रत्ययस्यैवाप्रसिद्ध्या तज्जन्यसंस्कारस्याप्रसिद्धेः न तस्य तादृशाध्यासहेतुत्वमिति भावः। भार्यादीनामिति। स्वामित्वाद्यध्यासपूर्वकमिति शेषः। साकल्यं विनयादिगुणभूषणादिमत्त्वरूपं पूर्णत्वम्, तदभावो वैकल्यम्। तथा च स्थौल्यादिविशिष्टे पुत्रादिस्वामित्वमध्यस्य पुत्रादिगतसाकल्यवैकल्ये अध्यस्येते। ननु 'स्थूलोऽहं सकल'इत्यत्र सकलस्वामित्वमेव प्रतीयत इति चेन्न। पुत्रादौ पूजिते पूजितोहमित्यभिमानात्।

नारायणी।

युक्तिसिद्धमेवाचार्यमतमिति ज्ञापितम्। तद्विशिष्टे च—दर्शितसूक्ष्माध्यासविशिष्टे च स्थूलदेहस्य तादात्म्येनाध्यासः। धर्मपुरस्कारेण-मनुष्यत्वादिधर्मविशिष्टरूपेण, न स्वरूपतः—न देहत्वादिधर्मविशिष्टरूपेण। कुतः? प्रतीत्यभावात्—संस्कारमूलभूततादृशप्रत्ययस्यालीकत्वात्। तद्विशिष्टे—देहाध्यासविशिष्टे। स्थौल्यादीनां—स्थूलत्वकृशत्वादीनां देहधर्माणाम्; तद्विशिष्टे—स्थौल्याद्यध्यासविशिष्टे। पुत्रेति। पुत्रभार्यादीनां ये साकल्यवैकल्यादयो धर्मास्तेषामध्यास इत्यर्थः। स्वामित्वाध्यासपूर्वकमिति शेषः। साकल्यं विनयादिगुणवत्त्वं तदभावो वैकल्यं. स्थौल्या-

(१) अहं देह इति प्रतीत्यभावात् तद्विशिष्टे च इत्यादिः कखपुस्तकयोः।

(२)—स्थौल्यादीनां च तद्विशिष्टे इत्यादिः गघपुस्तकयोः पाठः।

न्यायरत्नावली।

अत्रेदं बोध्यम्। 'तन्वभावे सन्ध्यवदुपपत्तेः' 'भावे जाग्रद्वदि'ति सूत्रयोः तन्वभावे इन्द्रियस्थूलदेहाभावेऽपि सन्ध्यवत् स्वप्नवत् ब्रह्मलोके सगुणब्रह्मोपासकस्य भोग उक्तः, देहस्य भावे तु जाग्रद्वत् जाग्रत्कालीनभोगवदित्यर्थकयोः। सेन्द्रियस्थूलशरीरानभिमानेऽपि मनोविशिष्टजीवे स्वप्नब्रह्मलोकयोः। भोगोक्त्याऽज्ञानविशिष्ट एव मनोध्यासः न स्थूलविशिष्टे। नापीन्द्रियधर्मविशिष्टे। अदृष्टादिविशिष्टमनोविशिष्टेनैव जीवेन काणत्वादिविशिष्टस्थूलदेहग्रहणात् तत्रैव तदध्यासः। स्थूलदेहविशिष्टस्यैव पुत्रादिस्वामित्वप्रतीतेः तत्रैव तदध्यासः। पुत्रस्वामित्वादिविशिष्टजीवेन तादृशे स्वस्मिन् उपयोगितया वित्तादिस्वीकारात् तत्रैव तदध्यासः। (१)अत एव पुत्राद्यपेक्षयाऽप्रियस्य देवताराधनाद्यर्थतया यस्य वित्तादेर्ग्रहणम्, न तु पुत्राद्यर्थम् तत्स्वामित्वस्य स्थूलदेहाविशिष्टेऽध्यासः, न तु पुत्रादिस्वामिनि। अत एव तद्वित्तापेक्षया देवतादिरेव प्रियः, तत्प्रयोजकत्वात्। तदेव'मज्ञोऽहम्, अहं कामी, कामी, काणः, काणो मनुष्यः मनुष्यः सकल' (२)इत्यादिप्रतीतिबलात् अज्ञानादिविशिष्टे मनआदिकमध्यस्यते। अज्ञानादिविशिष्टचिदवच्छेदेन शुद्धचिति मनआदेरूपस्या तादात्म्यस्वीकारेण उक्तप्रतीतिनिर्वाह इति यावत्। उक्तचितोऽवच्छेदकत्वेऽपि उक्तचितः शुद्धचिन्निष्ठसम्बन्धोऽप्यवच्छेदकः, स च विशेष्यतारूपः, अवच्छेदकीभूतस्य ज्ञानज्ञेयसम्बन्धस्यैव विशेष्यतात्वात्। 'इदं रजत'मित्याकारकभ्रमे इदश्चित्सम्बन्धस्य विशेष्यतात्वेन क्लृप्तत्वात्। एवमवच्छेद्य(३)ज्ञेयसम्बन्ध एव प्रकारता,

(१) अत एव पुत्राद्यपेक्षया प्रियस्य देवताराधनाद्यर्थतया वित्तादेर्ग्रहणम्, इति पाठः। तथा च मूलग्रन्थविरोधः, 'वित्तात्पुत्रः प्रिय' इत्युक्तेः। तस्मादुपरि निर्दिष्टं परिवर्तनं कृतमस्माभिरिति।

(२) मनुष्य इति सकलं इत्यादिप्रतीति सत्त्वात् इति गपुस्तके पाठः अशुद्ध एवायम्।

(३)—अवच्छेद्यो ज्ञानज्ञेयसम्बन्धेति घपुस्तके।

तन्यस्याप्यहङ्कारादिषु देहपर्यन्तेष्वध्यासः संसर्गतः ।

न्यायरत्नावली ।

तादृशभ्रमे रजताचित्सम्बन्धस्य तथा क्लृप्तत्वात्। एवं विशेष्यतात्वादिकमतिरिक्तं न कल्प्यते, गौरवात् । तथा चाज्ञानविशिष्टविशेष्यतावच्छिन्नमनःप्रकारताकप्रत्ययस्य निर्वाह इत्युक्तम् । इदानीमुक्तप्रत्ययवत 'अहमज्ञः, काम्यहम् मनुष्यः कामी, सकलो मनुष्य' इत्यादिप्रत्ययस्यापि सत्त्वात्, मनआद्यवच्छेदेन शुद्धाचिति अज्ञानादिविशिष्टचितोन्तर्गतत्वरूपप्रतिबि(१)म्बत्वरूपसंसर्गोऽध्यस्तो जायते, तथा च उक्तप्रत्ययस्यापि निर्वाहः तन्नान्तरीयकतया मनसः प्रतिबिम्बाध्यासाधीनप्रमातृत्वस्यापि पूर्वोक्तस्य सिद्धिरित्याशयेनाह—एवञ्चैतन्यस्येत्यादि। चैतन्यस्य अज्ञानादिविशिष्टचैतन्यस्य अहङ्काराद्याधारस्य, अहङ्कारादिषु—मनआद्यवच्छेदकेषु, देहपर्यन्तेषु—साकल्यादिविशिष्टदेहपर्यन्तेषु, संसर्गतः—प्रतिबिम्बत्वरूपेण। 'स एष इह प्रविष्ट आनखाग्रेभ्य' इति श्रुतेः । जलयुक्तपाषाणादेरिव मनोयुक्तदेहादेरपि प्रतिबिम्बाधारत्वसम्भवात् प्रतिबिम्बाधारत्वयोग्यतारूपस्वच्छत्वं बोध्यम् । ननु मनआदीनां सर्वेषामानन्दरूपात्मनि तादात्म्याध्यासेन तेषु जायमानस्य प्रेम्णः

नारायणी ।

दिविशिष्टे पुत्रस्वाभित्वमध्यस्य पुत्रादिगतसाकल्यवैकल्ये अध्यास्ते, पुत्रादौ पूजितेऽहमेव पूजित इत्यादिप्रतीतिदर्शनादिति फलितार्थः । न केवलमात्मन एवाध्यास आत्मनि किन्तु 'गौरोहं चेतनश्चेतनोहं गौर' इति प्रतीतेः, 'इदं रजतं रजतमिदमि'त्यादौ रजतेदमंशयोः परस्पराध्यासवदात्मनोप्यनात्मन्यध्यासो युक्त एवेत्यभिप्रेत्याह—एवमिति । अज्ञानविशिष्टचैतन्यस्याहङ्काराद्याधाररूपस्य । अहङ्कारादिषु—मनआद्यवच्छेदेन, देहपर्यन्तेषु—साकल्याद्यध्यासविशिष्टदेहपर्यन्तेषु, संसर्गतः—रजतेदमंशस्येव संसृष्टत्वरूपेण। एतेन शून्यवादाशङ्का निराकृता, स्वरूपतोऽध्यस्तस्यैव विशेषदर्शनबाध्यत्वाङ्गीकारादित्यन्यत्र विस्तरः ।

(१)—प्रतिबिम्बितत्वरूप इति घपुस्तके युक्तश्चेदम् ।

अध्यासव्यवधानतारतम्याच्च प्रेमतारतम्यम् । तदुक्तं वार्तिकामृते—

विचात्पुत्रः प्रियः पुत्रात्

पिण्डः पिण्डात्तथेन्द्रियम् ।

न्यायरत्नावली ।

उत्कटानुत्कटत्वरूपं वैषम्यं कुतस्तत्राह—अध्यासव्यवधाने त्यादि । अध्यासैरानन्दस्य व्यवधानाधिक्ये प्रेम्णोऽनुत्कटत्वं तन्न्यूनत्वे प्रेम्ण उत्कटत्वम्, सुषुप्तौ कार्यप्रपञ्चलयेनानन्दाभिव्यक्तिदर्शनेन स्वप्नजाग्रतोश्च तदपेक्षयाऽऽनन्दाल्पत्वदर्शनेनाध्यासाधिक्यस्य आनन्दापकर्षप्रयोजकत्वेन क्लृप्तत्वादिति भावः । वित्तादिति । अनेन पुत्रादिस्वामित्वविशिष्टचिति वित्तादिस्वामित्वाध्यास इति अनुक्तमपि सूचितम् । 'पिण्डात्तथेन्द्रियम् । इन्द्रियेभ्यः प्रियः प्राण' इत्यनेन पङ्गुत्वकाणत्वादिविशिष्टरूपेण चक्षुरादीनां मनोविशिष्टचिति अध्यास इति सूचितम्, अन्यथा ब्रह्मणि तादात्म्येनाध्यस्तत्वमात्रेण मनोपेक्षया अनुत्कटप्रेम्णः चक्षुरादावसम्भवात् । न च पुत्रादाविव ममताध्यासेनापि चक्षुरादावुक्तप्रेमसम्भव इति वाच्यम् । काणत्वादिरूपेण तादात्म्याध्यासः ममताध्यासो वेत्यत्र विनिगम-

नारायणी ।

ननु मनआदीनां सर्वेषां परिपूर्णानन्दे तादात्म्येनाध्यासात् तेषु जायमानप्रेम्ण उत्कटाऽनुत्कटत्वे कुतस्तत्राह— अध्यासेति । अध्यासैरानन्दस्य व्यवधानाधिक्यन्यूनत्वत इत्यर्थः । स्थूलाधिकद्रुष्टित आनन्दव्यवधानाधिक्यात्प्रेम्णोऽनुत्कटत्वं सूक्ष्माधिकद्रुष्टित आनन्दव्यवधानन्यूनत्वात्प्रेम्ण उत्कटत्वम्, प्रेमा सर्वत्रानन्द एव, स च यदाऽहङ्काराद्याधिक्यादिना संक्रान्तस्तत्र प्रेमा तथा नोदेति, अहङ्कारादिन्यूनतायां तु व्यवधानबाहुल्याभावात्सूक्ष्मद्रुष्टित उदेति प्रेमेति यावत् । एवंविधकल्पनायामनुभवरूपं वार्तिकाचार्यवाक्यं प्रमाणयति—तदुक्तमिति ।' वित्तादीति । प्रियः सुखसाधने(१)च्छाविषयः । अनेन प्रायः पुत्रादि स्वामित्वविशिष्टे वित्ता-

( १ ) सुखसाधनत्वेनेच्छाविषय इति खपुस्तके ।

इन्द्रियेभ्यः प्रियः प्राणः
प्राणादात्मा परः प्रियः ॥ इति ।

पिण्डः स्थूलशरीरम् । प्राणः अन्तःकरणम् । देहापेक्षया चेन्द्रियाणां प्रियत्वं शस्त्रवृष्ट्यादिधारापाते चक्षुरादीनां मीलनदर्शनात् अनुभवसिद्धम् । तेनान्यो-

न्यायरत्नावली ।

न्याभावात् । अन्यथा मनुष्यत्वगौर(१)त्वादिधर्मविशिष्टेऽपि ममताध्यास एव कल्प्येत । अथ धर्मितादात्म्याध्यासस्य धर्मसंसर्गाध्यासव्यापकत्वात् सोऽप्यावश्यक इति इति चेत्, तर्हि इन्द्रियतादात्म्याध्यासोऽपि तथा । आत्मा- अज्ञानविशिष्टचित्तदपेक्षया शुद्धात्मा उत्कटप्रेमविषय इति बोध्यम् । 'प्रेयोन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मे'ति श्रुतेः । अनुभवसिद्धमिति । पूर्णानन्दांशस्यावृतत्वेऽपि अविद्याद्यवच्छिन्नानन्दांशानामनावृतत्वम्, 'अहं सदा भूयासमिति' प्रेम्णोऽन्यथानुपपत्तेः, तथा च उत्कर्षापकर्षवत्तयापि तदनुभवसम्भव इति भावः । 'अज्ञोऽहमि'त्यादिवत् 'सन्नाकाशस्सन् वायुरि'त्यादावपि परस्पराध्यासः, 'आकाशः सन् वायुस्सन्नि'त्यादिप्रतीतिसत्त्वादित्याह—तेनेति । 'अज्ञोऽहमि'त्यादिस्थले परस्पराध्यासस्वीकारेणेत्यर्थः । अन्यान्याध्यासात्-पर-

नारायणी ।

दिस्वामित्वाध्यास इत्यनुक्तमपि सूचितम् । 'पिण्डात्तथेन्द्रियम् । इन्द्रियेभ्यः प्रियः प्राण' इत्यनेन पटुत्वकाणत्वादिना चक्षुरादीनां मनोविशिष्टेऽध्यास इति ज्ञापितम् । तथाचैकैकाध्यासविशिष्ट एवापराध्यासो न साक्षात्सर्वेषाम् । यस्य प्रथमतोऽध्यासस्तत्र प्रेमाधिकोन्यत्र न्यून इति संक्षेपः । पिण्डशब्दस्यान्नग्रासपरतानिरासायाह— पिण्ड इति । प्राणशब्दस्य केवलवायुपरताशङ्कानिरासायाह—प्राण इति । इन्द्रियप्रियत्वं स्फुटयति-- देहापेक्षयेति । तेनेति । परास्पराध्यासकृतकार्योपलब्ध्येत्यर्थः ।

(१) मनुष्यत्वकार्यत्वादीत्यादिः गपुस्तके ।

न्याध्यासात् चिदाचिद्ग्रन्थिरूपोऽध्यासः एकतरस्याध्या-

न्यायरत्नावली ।

स्पराध्यासप्रत्ययात्, अध्यासः–अध्यासमात्रम्, चिदाचिद्ग्रन्थि-रूपः-शुद्धचिद्रूपेऽधिष्ठानेऽचितोराधिष्ठानाभिन्नयोः ग्रन्थी परस्परावच्छेदेन परस्परसम्बन्धौ रूपे यस्य तादृशः। 'इदं रजतमि'त्यादौ सर्वत्र भ्रमे द्व्याकारतादर्शनादिदमादिसम्बन्धावच्छेदेन रजतादिसम्बन्धस्य च प्रत्ययेन तदुभयमध्यस्तम्, तत्र रजतादेस्सम्बन्ध इव स्वरूपमप्यध्यस्तम्,'इदं रजतं ने'त्यादिप्रत्ययेन विनिगमकाभावात् द्वयोरपि बाध्यमानत्वात्। इदमादेस्तु सम्बन्ध एवाध्यस्तः न स्वरूपम्, 'रजतमिदं ने'त्यादिबाधेन संसर्गस्यैव बाध्यमानत्वात् तादृशबाधोत्तरमपि हि 'एतत्संसृष्टतया रजतं ज्ञात'मिति अङ्गुल्या निर्दिश्यमानत्वात्। किं'चेदं रजतमिति यज्ज्ञानं तन्मिथ्ये'ति प्रत्ययेनाकारद्वयसहितधीमिथ्यात्वा(१)वगमात् आकारद्वयघटकसम्बन्धद्वयमवश्यं मिथ्येति वाच्यम्। इदमादेरपि संसृष्टरूपेण भ्रमविषयत्वात् मिथ्यात्वसम्भवाच्च मिथ्यात्वम्। एवं 'सदाकाशमि'त्यादावपि सतः संसृष्टरूपेणा(२)काशादेस्स्वरूपेण मिथ्यात्वम्। 'सदाकाशमिति यज्ज्ञानं तन्मिथ्येति प्रत्ययात्, 'सदाकाशं न, आकाशस्सन्ने'ति द्विविधबाधकसत्त्वाच्च। तस्मात्सविकल्पकप्रत्ययमात्रे विशेष्यविशेषणसंसर्गाणां त्रयाणां युगपदुत्पत्तिः। प्रातीतिकस्थले आगन्तुकदोषघटिता व्यावहारिकस्थले त्वविद्याघटिता (३)कारणसामग्री, तदेतदाह–एक-

नारायणी ।

अन्योन्याध्यासात्—परस्परमध्यासाङ्गीकारात्। चिदचिद्ग्रन्थिरूपः—चिदचितोः परस्परावच्छेदेन परस्परसम्बन्धरूपः। 'घटः सन् सन्घट' इत्यादिप्रतीतेरिति भावः। नन्वेकतराध्यासेनैव द्विविधप्रत्ययोपपत्तेरलं परस्पराध्यासेनेति तत्राह—एकतरस्येति। विशेषणस्य विशेष्यस्य वा

(१)—मिथ्यात्वावगाहनात् इति घपुस्तके।

(२)—णाकाशादेः संसृष्टरूपेण स्वरूपेण च मिथ्यात्वम् इति घपुस्तके।

(३) कारणेति गपुस्तके नास्ति।

साङ्गीकारेऽन्यतरस्याभानप्रसङ्गात् अध्यस्तस्यैव भ्रमे भाननियमात् 'इमे रङ्गरजते' इति समूहालम्बन(१)वद- वश्यमितरेतराध्यासः। सर्वबाधावधिभूतचैतन्यपरिशे-

न्यायरत्नावली।

तरस्येति। विशेषणस्य विशेष्यसंसर्गस्य वा, अन्यतरस्य-विशेष्य- संसर्गस्य विशेषणस्य वा, अभानप्रसङ्गात्-भ्रमाविषयतापत्तेः। अध्यस्तस्यैवेति। उक्तबाधकप्रत्ययबाध्यत्वेनेति शेषः। भ्रमे भानेति। भ्रमविषयत्वेत्यर्थः। न'न्विदं रजत'मित्यादौ एक एवा- कार उल्लिख्यते अथ कथं द्व्याकारत्वानियमः तत्राह—इमे इति। रजतरङ्गे इत्यर्थः। अवश्यमित्यनेन परस्पराध्यासस्य भाष्यानु- क्तत्वं सूचितम्। तदुक्तं भाष्ये—'अन्योन्यस्मिन्नन्योन्यात्मकता- मन्योन्यधर्मांश्चाध्यस्ये'ति। ननु रजतादाविदन्त्वादेरिदमादौ रज- तत्वादेश्च संसृष्टतयाध्यासोऽन्योन्यधर्माध्यासः, तत्र च मानाभावः, प्रतीत्योरन्योन्यतादात्म्याध्यासाभ्यामुपपत्तेरिति चेन्न। द्व्याकार- प्रतीत्योर्धर्मयोरसंसर्गाध्यासाभ्यां धर्मिणोस्तादात्म्याध्यासाभ्यां

नारायणी।

अन्यतरस्य--विशेष्यस्य विशेषणस्य वा,अभानप्रसङ्गात्--भ्रमाविषयत्वा पत्तेः। कुतस्तत्राह--अध्यस्तस्यैवेति। स्वाश्रयनिष्ठाभावप्रतियोगिन एवे- त्यर्थः। विशेषदर्शनबाध्यत्वेनेति शेषः। भ्रमे भानेति। भ्रमविषयत्वमित्यर्थः। अन्यथा शुक्तित्वादीनामपि भानं स्यादित्यन्यत्र विस्तरः। ननु 'रजतमिदमि'- ति भ्रमे इदमंशस्य कारणत्वाद्भानं शुक्तित्वादेस्तु विरोधादेवाभानं न(२)- त्वनध्यासादभानम् इदमंशस्याध्यासाद्भानम् तथा च कथमध्यस्तस्यैव भाननियममङ्गीकृत्य परस्पराध्याससमर्थनं तत्राह--इमे इति। इदंशब्द- वाच्ययोरेव रङ्गरजतयोः 'रजतरङ्गे' इति भ्रमे परस्परमधिष्ठानारोप्या- ध्यासिकत्वमिति 'इदंरजतमि'ति विशिष्टभ्रमेऽपि भ्रमत्वाविशेषात् विशेष- णविशेष्यसंसर्गत्वमङ्गीक्रियत इत्यर्थः। अवश्यमित्युक्त्याऽत्र परस्परा- ध्यासस्यापरिहारयुक्तित्वं ध्वनितम्। इतरेतराध्यासः। परस्परं तादात्म्या-

(१)—समूहालम्बनभ्रमवदवश्यमित्यादिः कखपुस्तकयोः।

(२) ननु शुक्तित्वादेरनध्यासादभानमित्यर्थः।

न्यायरत्नावली।

वोपपत्तेरित्यत्र विनिगमकाभावात्। सङ्क्षेपशारीरकेऽप्युक्तम्-

इदमर्थवस्त्वपि भवेद्रजते परिकल्पितं रजतवास्त्विदमि।
रजतभ्रमेऽस्य च परिस्फुरणात् न यदि स्फुरेन्न खलु शुक्तिरिव॥

इति। अस्य इदमर्थस्य 'न यदीदमर्थः कल्पितः तदा भ्रमे न स्फुरेत्, शुक्तिरिव शुक्तित्वविशिष्टवत्। शुक्तित्वविशिष्टस्येव संसर्गोपहित इदमादेरकल्पितत्वेन उक्तबाधकाबाध्यत्वेन भ्रमाविषयत्वापत्तिरिति भावः। पञ्चपाद्यामुक्तं 'यदि युष्मदर्थस्यैव प्रत्यगात्मनि अध्यासः स्यात् प्रत्यगात्मा न प्रकाशेत। न हि शुक्तौ रजताध्यासे शुक्तिः प्रकाशते। प्रकाशते च इह चैतन्यमहङ्कारादा'विति। युष्मदर्थस्यानात्मनः। किञ्च अवश्यमित्यनेन सर्वभ्रमाणां त्र्याकारता तार्किकादेरपि सम्मतेति सूचितम्। तथा हि-सविकल्पकधीमात्रे भ्रमत्वेनास्मत्सम्मते विशेष्यतावच्छिन्नं प्रकारत्वं प्रकारतावच्छिन्नं विशेष्यत्वं वेत्याकारद्वयं सप्रकारकधीमात्रानिष्ठं (१) तार्किकादिभिस्स्वीक्रियते, तादृशाकारद्वयं च 'रजततादात्म्येनेदं साक्षात्करोमि, इदन्तादात्म्येन रजतं साक्षात्करोमि, इदं रजतं साक्षात्करोमी'ति सार्वलौकिकधीभिः गृह्यते। रजतप्रकारत्वमिदंविशेष्यत्वञ्च परस्परानवच्छिन्नमित्यादितान्त्रिकवाक्यरचनामात्रेण अर्थासिद्धेः। तथा चेदंविषयतायां रजतविषयतावच्छेदकत्वञ्च रजतविषयतायाम् इदंविषयतावच्छेदकत्वञ्च उक्तधीषु भाति। 'मूलविशिष्टः संयोगी'त्यादौ संयोगित्वरूपे विधेये उद्देश्यतावच्छेदकीभूतमूलवैशिष्ट्यस्यावच्छेदकत्वभानवत्(२) 'रजतमिदमि'त्यादौ रजतविषयकसाक्षात्कारे इदंतादात्म्यविषयकत्वस्य विधेयत्वेन इदंतादात्म्यविषयकत्वस्य रजतविषयतावच्छिन्नत्वलाभात्। 'रजततादात्म्येन इदमि'त्यादौ

(१)—निष्ठमस्ति अनुव्यवसायादिना तद्ग्रहणात् इति तार्किकादिभिः इत्यधिको घपुस्तके पाठः।

(२)—वत् इदंतादात्म्येन रजतमित्यादौ॰ इति पाठभेदो घपुस्तके।

न्यायरत्नावली।

त्विदंविषयकसाक्षात्कारे रजततादात्म्यविषयकत्वस्य विधेयत्वेन तत्र इदंविषयतावच्छिन्नत्वलाभात्। एकविषयतावच्छेदकापरविषयतात्वस्यैव विशेष्यतात्वरूपस्य वक्ष्यमाणत्वात्। उक्तलौकिकधीभिः उभयोः परस्परविशेष्यविशेषणकत्वघटिताकारयोः सिद्धिरिति नास्माकमेव तत्स्वीकारेण गौरवाद्यापत्तिः। मन्मते तु विशेष्यतात्वादेरतिरिक्तस्याखण्डधर्मरूपस्यास्वीकारात् महदेव लाघवम्। तथा हि—चिच्चेत्यसम्बन्धो विषयता, विषयतात्वमखण्डधर्मस्तस्यां स्वीक्रियते, एकविषयताविशिष्टापरविषयतायाम् अवच्छेदकविषयताविशेष्यता तादृशविशेष्यतायामवच्छेदकविषयता(१) विशेष्यतावच्छेदकताशब्देन व्यवह्रियते, तदाश्रयस्य इदन्त्वादेरपि विशेष्यतावच्छेदकत्वात्। एवं च यस्याः (२)(तादात्म्यादिनिष्ठसांसर्गिक) विषयतायाः अवच्छेदकत्वं विशेष्यतानिष्ठम् सा तत्रावच्छेदकत्वे निरूपिका (३)तन्निष्ठनिरूपकताया अवच्छेदिकापि विषयिता सांसर्गिकविषयितावच्छेदकताशब्देनोच्यते। तदाश्रयतादात्म्यत्वादेरपि निरूपकतावच्छेदकत्वात्। सांसर्गिकविषयता यया विषयतया विशिष्टा सती तादृशावच्छेदकतानिरूपिका या सा प्रकारता। तथा च (४)तादृशप्रकारतावच्छेदिका या विषयता सा (५)प्रकारतावच्छेदकताशब्देनोच्यते, तदाश्रयस्य 'रजतत्वादेरपि तादृशप्रकारतावच्छेदकत्वसत्त्वात्। तदिदंविशेष्यतादौ प्रकारतासांसर्गिकविषयतावच्छेदकत्वादिकं तार्किकादिभिरपि स्वी

(१) विशेष्यतावच्छेदिकापि—इति घपुस्तके अधिकः पाठः।

(२)—(....) एतच्चिह्नान्तर्गतपाठो घपुस्तके नास्ति।

(३) तादात्म्यादिनिष्ठा विषयता सांसर्गिकविषयता, तन्निष्ठेति पाठाधिक्यं घपुस्तके।

(४)—तादृशावच्छेदकताया निरूपिका सती निरूपकतावच्छेदिका विषयता प्रकारतानिरूपकविशेषणत्वेन तस्या अपि निरूपकत्वात् तादृश० इत्यधिकः पाठो घपुस्तके।

(५) प्रकारतात्वविशिष्टविषयतावच्छेदिकाऽपि प्रकारता० इत्यधिकः पाठो घपुस्तके।

न्यायरत्नावली ।

क्रियते 'रजतत्वेनेदं जानामि, रजतत्वसमवायेन इदं जानामि, रजतता-दात्म्येनेदं जानामी'त्यनुभवेन प्रकारतासंसर्गविषयतावच्छेदकत्वेन विशेष्यत्वावगाहनात् । तथा च तेनैवाखिलव्यवहारनिर्वाहे विशेष्यतात्वप्रकारतात्वसांसर्गिकविषयतात्वविशेष्यताप्रकारतावच्छेदकतात्वानाम् अखण्डधर्माणां स्वीकारः न तेषां युक्तः । इदंविषयतावच्छिन्ना या रजतविषयता तद्विशिष्टा या तादात्म्यविषयता तच्छालिप्रत्यक्षत्वेन 'इदं रजतमि'त्याकारकप्रत्यक्षस्य प्रवृत्तिहेतुत्वसम्भवात् । तदयं निष्कर्षः । इदंविषयता तादात्म्यविषयताविशिष्टायां रजतविषयतायाम् अवच्छेदिका, मूलादिकामिव संयोगादिविशिष्टे विहगादौ । तादृशावच्छेदकत्वे इदन्त्वविषयता अवच्छेदिका, मूलादिनिष्ठावच्छेदकत्वे मूलत्वादिकामिव । एवम् इदंविषयतानिष्ठावच्छेदकत्वे निरूपकत्वं यत् तादात्म्यादिविषयतानिष्ठं तदवच्छेदकत्वं तादात्म्यत्वादिविषयतासु स्वीक्रियते, संयोगत्वादाविव मूलादिनिष्ठावच्छेदकतानिरूपकतावच्छेदकत्वम् । इयांस्तु विशेषः यन्मूलत्वादेस्समवायेन मूलादिसम्बन्धत्वात् उक्तावच्छेदकत्वम्, इदन्त्वादिविषयतानां तु चिद्घटितेन सामानाधिकरण्येन इदमादि(१) विषयसम्बन्धत्वात् उक्तावच्छेदकत्वम्, इदमादिविषयतानिष्ठमनवच्छिन्नमेव तादृशावच्छेदकतानिरूपकत्वम् इदन्त्वादिविषयतावच्छिन्नमित्यादि बोध्यम् । तस्मात् सांसर्गिकविषयतात्वस्यैव अखण्डधर्मत्वनियमः, न तु विशेष्यतात्वस्य प्रकारतात्वस्य वा । ननु 'घटस्सन् पटस्सन्नि'त्यादौ सत्तादात्म्यस्य एकस्यैव भानसम्भवात् विशेषणविशेष्यसंसर्गाणां युगपदुत्पत्तिरिति पूर्वमुक्तमयुक्तमिति चेन्न । घटपटाद्यवच्छिन्नतादात्म्यानाम् ऐक्यानुपपत्तेः, अव-

(१) इदमादिविषयतासु सम्बद्धत्वादुक्तावच्छेदकत्वम् । इदन्त्वादिसम्बन्धविषयतावच्छेदकत्वम्—इति भिन्नः पाठो घपुस्तके ।

न्यायरत्नावली ।

च्छेदकभेदेन परमते विषयतादीनामिव तादात्म्यानां भेदस्यावश्यकत्वात् । ननु वृत्तिज्ञानीयसम्बन्धानां विषयनिष्ठानां विशेष्यतादिरूपत्वस्य अवश्यं वाच्यतया तैरेव विषयताव्यवहारनिर्वाहे चिच्चेत्यसम्बन्धानां विषयतात्वकल्पने मानाभाव इति चेन्न । 'अहं सुखी'त्यादौ वृत्तिज्ञानीयसम्बन्धेन सुखादौ विषयताव्यवहारासम्भवात्, सुखादौ साक्षिमात्रभास्यत्वेन वृत्त्यस्वीकारात्, तत्र सुखादिचित्सम्बन्धस्यैव सुखादिविषयतात्वेन क्लृप्तत्वेन चित्सम्बन्धस्यैव सर्वत्र विषयतात्वस्वीकारात्, ज्ञानज्ञेयसम्बन्धस्यैव विषयताव्यवहारविषयत्वात्, वृत्तेः ज्ञानव्यञ्जकत्वेऽपि ज्ञानत्वाभावात्, ज्ञानव्यञ्जकत्वानुरोधेनैव वृत्तेः ज्ञानावरणरूपाज्ञानसमानविषयकत्वात् चिन्मात्रविषयकत्वम्, अज्ञानस्येव वृत्तेः विषयतायां विशेष्यविशेषणयोः संसर्गः व्यक्तिमात्रञ्चावच्छेदकम्, नास्त्येव वावच्छेदकम्, यथा पर्वते वह्नेः संसर्गावच्छिन्नचिद्विषयकानुमितिरूपवृत्तेः, सोऽयमित्यादिवाक्यजन्यवृत्तेर्वा, तत्त्वमस्यादिवाक्यजन्यवृत्तेर्वा, तथा चावच्छिन्नानवच्छिन्नरूपेण चिदेव वृत्तेर्विषयः, न घटादयः तादृशविषयतावन्तः; तेषु तु वक्ष्यमाणरीत्या सांसर्गिकविषयतावच्छेदकत्वरूपं विषयत्वम् । अवच्छेदकीभूतसंसर्गस्य प्रतियोगित्वानुयोगित्वरूपे विशेषणविशेष्यत्वे वा न मुख्ये, तथा चैतन्यनिष्ठमपि वृत्त्यज्ञानयोर्विषयत्वं न मुख्यविषयत्वं ज्ञानीयत्वाभावात्, किन्त्वाकाराख्यस्सम्बन्धविशेषः । उदयनाचार्यादिभिरपि बौद्धाधिकारादौ 'प्रकाशस्य सतस्तदीयतामात्रनिबन्धनः स्वभावविशेषः विषयते'त्यादिना प्रकाशशब्दितज्ञानीयसम्बन्धस्यैव विषयतात्वमुक्तम् । उक्तञ्च तट्टीकासु वर्धमानाद्यैः 'इच्छादीनां विषयता तज्जनकज्ञानीया याचितमण्डनन्यायेन न तु स्वाभाविकी' इति । न च प्रतियोगित्वानुयोगित्वमात्रस्य तादृशविशेषणत्वादिरूपत्वे अनुमित्यादिवृत्तेः 'विशेष्ये विशेषणमि'त्यादिरूपाया विशिष्टस्य वैशिष्ट्यमित्यादिरूपायाश्च विषयताया भेदः

न्यायरत्नावली ।

कुतस्त्य इति वाच्यम् । प्रतियोगितानुयोगितयोरेव नानाविशेष्यभूयमानविशेषाणां स्वीकारात्, वह्न्यादिप्रकारकानुमितिस्थले वह्नित्वाद्यवच्छिन्नप्रतियोगिकसंयोगात्तादात्म्यविशिष्टचैतन्यनिष्ठसांसर्गिकविषयतास्वीकारात्, विशेषणीभूतसंयोगतत्प्रतियोगित्वयोरपि मिथो निरूप्यनिरूपकभावापन्नाः सांसर्गिकविषयताः सिद्धान्तेऽपि स्वीक्रियन्ते । सर्वो हि विषयः सद्रूपचित्तादात्म्यविशिष्टतयैव विशिष्टज्ञानमात्रे भासते, तथा च विशेषणविशेष्ययोरिव संयोगादिसंसर्गस्यापि चित्तादात्म्यविशिष्टतया भानात् तत्तादात्म्यविशिष्टतया चितोऽपि भानम् । संयोगनिष्ठोक्तविषयतानिरूपिता या प्रतियोगित्वनिष्ठविषयता सापि सांसर्गिकविषयतैव, तादृशविषयतावती प्रतियोगितैव प्रकारतेत्युच्यते, तदन्यप्रकारत्वे मानाभावात् । एवं संयोगादिविषयतानिरूपितविषयतावदनुयोगितैव विशेष्यता । अत एव भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वे प्रकारताविशेष्यते इति तार्किकादयो वदन्ति । भासमानवैशिष्ट्यस्य भासमाने प्रतियोगित्वानुयोगित्वे इति तदर्थः,(१) *विशिष्टविषयतानिरूपितप्रकारतात्वं वह्नित्वावच्छिन्नप्रकारताया एव स्वीक्रियते* लाघवात् । एवं पर्वतत्वाद्यवच्छिन्नानुयोगिताया एव तादृशविशेष्यतात्वम् । एवं च पूर्वकल्पे वह्नित्वाद्यवच्छिन्नप्रतियोगितात्वेन प्रतियोगितायाः विषयता यत्र तत्र वह्नित्वविशिष्टनिरूपितवैशिष्ट्यधीः, पर्वतत्वाद्यवच्छिन्नानुयोगितात्वेनानुयोगिताभाने पर्वतत्वविशिष्टाधिकरणकवैशिष्ट्यधीः, यत्र तु प्रतियोगितानुयोगितयोः न तथा भानं किन्तु वह्नित्वाद्युपहितनिष्ठतया तत्र विशेष्ये विशेषणमित्यादिधीः । द्वितीयकल्पे तु वह्नित्वादेः प्रकारतावच्छेदकत्वादिरूपे प्रकारत्वे

(१) *वैशिष्ट्यविषयतानिरूपितविषयतावती तथैति यावत्, तेन समूहालम्बनस्य न प्रकारतादिकम्, अथवा संयोगादिविषयतानिरूपितप्रकारतात्वं वह्नित्वाद्यवच्छिन्नप्रतियोगिताया एव स्वीक्रियते* लाघवादिति पाठभेदश्च घपुस्तके ।

वेण च न शून्यवादापत्तिः । सत्यानृतसम्भेदावभास-

न्यायरत्नावली।

विशिष्टवैशिष्ट्यम्, केवलप्रकारत्वे विशेष्ये विशेषणमित्यादिरूपत्वम्। आद्य एव तु कल्पो युक्तः, विषयवैलक्षण्यं विना विषयतामात्रभेदेन ज्ञानानां वैलक्षण्यापादने साकारवादापत्तेः। ननु 'इदं रजतमि'त्याकारकज्ञाने इदंचित्सम्बन्ध एवावच्छेदकतया भाति, न तु रजतचित्सम्बन्ध इत्यत्र किं व्यवस्थापकम्? इति चेत्-अनुभव एव। अन्यथा 'मूलविशिष्टः कदम्बः कृष्णसंयोगी'त्यत्र प्रत्यक्षे मूलस्यैवावच्छेदकतया भानं न तु कृष्णसंयोगस्येत्यत्राप्यनुभवान्यव्यवस्थापकान्वेषणापत्तेः। तथा चानुभवेनैव अवच्छेदकत्वे व्यवस्थापिते तन्निर्वाहाय मूलादेर्मूलाद्यवच्छिन्नसंयोगादिहेतुत्ववदज्ञानादेरिदमाद्यवच्छिन्नरजतादिहेतुत्वं कल्प्यते। स्वविषयतावच्छेदकविषयतावत्त्वादिसम्बन्धेन रजतादिकं प्रति स्वाश्रयतावच्छेदकत्वसम्बन्धेनाज्ञानादेर्हेतुत्वम्। विवेचितञ्चैतत् चन्द्रिकायामस्माभिः। तस्माद् द्व्याकारानुभवात् 'इदमादिकं यदि भ्रमकालेऽध्यस्तं न स्यात् तदा भ्रमविषयो न स्यात्, शुक्तित्वविशिष्टवदि'ति तर्कात्, 'इदमादिकं भ्रमकालेऽध्यस्तं न स्यात् भ्रमविषयत्वात् रजतादिवदि'त्यनुमितेश्च परस्पराध्यास आवश्यकः। तदुक्तं संक्षेपशारीरके—

अनुभूतियुक्त्यनुमितित्रितयादितरेतराध्यसनसिद्धिरतः। इति।

ननु 'सदिदंरजतमि'त्यादिभ्रमे सद्रूपचितोऽपि विषयत्वात् साप्यध्यस्ता स्यात् तत्राह—सर्वबाधेत्यादि । साक्षिरूपत्वेन चितो बाधासम्भवात् चैतन्यं . सर्वबाध्यज्ञानानामविषयरूपोऽवधिः, अतः तस्य परिशेषात् मिथ्यात्वास्वीकारात्। शून्यवा-

नारायणी।

ध्यासः तयोः संसर्गाध्यासश्च। ननु विशेषणविशेष्ययोर्द्वयोरप्यध्यस्तत्वे बाधात्सर्वशून्यतैव तत्राह—सर्वेति। सर्वबाधकधीविषयचैतन्यस्य परिशेषेण-मिथ्यात्वास्वीकारेण, न शून्यवादापत्तिः-न सर्वमिथ्यात्ववादस्य

त्वादध्यासस्य । तस्मात्पूर्वपूर्वाध्यासमूल एवायमुत्तरो-त्तरोऽहङ्काराध्यासः बीजाङ्कुरवदनादिः । अविद्याध्यास-

न्यायरत्नावली ।

दस्य—सर्वमिथ्यात्ववादस्य आपत्तिरिति भावः। तथा च संसृष्टरूपेणैव सद्रूपस्य भ्रमविषयत्वं मिथ्यात्वञ्च, न तु शुद्धरूपेणेति भावः । सत्यानृतसम्भेदावभासत्वात्—वस्तुगत्या सत्यनिष्ठो योऽनृतसम्बन्धः तद्विषयकत्वात् । सत्यविषयकत्वं विनाधिष्ठानज्ञानस्य बाधकत्वासम्भवेन आरोपितस्य अनृतत्वासिद्धेरधिष्ठानं सत्यमेवेति भावः । ननु मनुष्यत्वादिविशिष्टरूपेणैव देहादेरध्यासः न तु देहत्वादिविशिष्टरूपेण, एवमज्ञानादिविशिष्ट एव चैतन्ये अहङ्काराद्यध्यासः न तु आकाशादिविशिष्ट इत्यत्र किं मानम्? तत्राह-तस्मादिति । प्रतीतिरूपकार्यानुसारेण तत्कारणकल्पनमित्यस्य धर्मपुरस्कारेणेत्यादिनोक्तत्वादित्यर्थः । अध्यासमूलः-अध्यासजन्यसंस्कारजन्यः, अहङ्काराध्यासः—अहङ्कारादिरूपः तद्धीरूपश्चाध्यासः । अर्थाध्यासे अर्थस्य ज्ञानाध्यासे ज्ञानस्य सूक्ष्मावस्थारूपः संस्कारो हेतुरिति भावः । संस्कारजन्यत्वेऽपि भाष्योक्तमनादित्वं समर्थयते—बीजाङ्कुरादिवदनादिरिति ।

नारायणी ।

प्रसङ्ग इत्यर्थः । आधारांशस्यैवाविद्योपहितस्य सत इदमंशस्यैवाध्यस्तेऽध्यासो नाधिष्ठानस्य परिपूर्णानन्दस्य शुक्त्यंशादेरिव, अत आधाराध्यस्तयोर्द्वयोर्बाधेप्यधिष्ठानस्य बाधाभावान्न शून्यताप्रसङ्गगन्धोपीत्यन्यत्र विस्तरः । उपपादयति—सत्येति । वस्तुगत्या सत्यवस्तुनिष्ठो योऽनृतस्य सम्भेदः सम्बन्धस्तादात्म्यरूपः तद्विषयकत्वाद् भ्रमस्येत्यर्थः । सत्यविषयकत्वं विनाऽधिष्ठानज्ञानस्य बाधकत्वायोगादधिष्ठानं सत्यमेवेति भावः । देहादेर्मनुष्यत्वप्रकारेणैवाध्यासो नान्यथेत्यत्र हेतुं समर्थयन्नुपसंहरति—तस्मादिति । प्रतीत्यनुसारेणैवाध्यासकल्पनादिति भावः । अध्यासमूल एव-संस्कारद्वाराध्यासकारणक एव, अहङ्कारादेः-अहङ्कारेन्द्रियदेहतद्धर्माणामध्यासः स्वरूपतो ज्ञानतश्च । अत्रानवस्थादिको बीजा-

एक एवानादिः । (१)नन्वध्यासस्यानादित्वे 'स्मृतिरूपः

न्यायरत्नावली।

एकजातीयस्य स्वसृष्ट्यवधिप्रलयपर्यन्तसर्वकाले सत्त्वमनादित्वमिति भावः । ननु अज्ञानाध्यासस्य उत्पत्त्यभावः 'न चात्माश्रया-दी'त्यादिनोक्तः, स च न युक्तः, अहङ्कारस्य कार्यत्वेन तदवच्छेदेन संसृष्टतया घटाद्यवच्छेदेन कपालादाविव कारणस्य अज्ञानस्याप्युत्पत्तिसम्भवात् तत्राह—अविद्येत्यादि । एक एव—अहङ्कारानवच्छिन्न एव, अविद्याध्यासः—चिन्निष्ठाविद्यासम्बन्धः, अनादिः—अनुत्पन्नः । अहङ्काराध्यासकाले अहङ्कारावच्छेदेन अविद्यासंसर्गाध्यासेऽपि अविद्याविशिष्टचैतन्यस्य तत्पूर्वकाले सत्त्वमवश्यं वाच्यम्, अन्यथा चिदसम्बन्धेन अज्ञानेन (२)चित्सम्बन्धाहङ्कारजननासम्भवादित्यहङ्काराद्यनवच्छिन्नस्याप्यनुत्पन्नस्य अज्ञानचित्सम्बन्धस्य आवश्यकत्वात् तद्विशिष्टरूपेण अनुत्पन्नत्वम् अज्ञानाध्यासस्याविरुद्धमिति भावः । वस्तुतस्तु अहङ्कारोत्पत्तेः पूर्वमपि नानुत्पन्नोऽविद्यासम्बन्धः किन्तु उत्पन्नः, पूर्वोत्पन्नस्य अहङ्कारावच्छिन्नस्य अज्ञानचितोः तादात्म्यस्य संस्कारः, पूर्वोत्पन्नः अहङ्कारसंस्कारेणावच्छिन्नस्तेन सम्बन्धेन चिति सम्बन्धस्याज्ञानस्याहङ्कारजनकत्वम् , तस्यावश्यकत्वेन तदन्यसम्बन्धे मानाभावादिति ध्येयम्।

नारायणी।

ङ्कुरादाविव प्रामाणिकत्वान्न दोष इत्याह—बीजेति। बीजादङ्कुरम् अङ्कुराच्च बीजान्तरं तत अङ्कुरान्तरमिति यथा तथा पूर्वाध्यासात्संस्कारः ततोध्यासः ततः संस्कार इत्येवमेकजातीययोः कार्यकारणयोः स्वसृष्टिप्रभृतिस्वप्रलयपर्यन्तं घटीयन्त्रवदावृत्तेरनादित्वमित्यर्थः । संस्कारसाधारणकार्यपरिणामभयाङ्गीकृताया अविद्याया अध्यासस्तु स्वरूपतोऽनादिरित्याह—अविद्येति । अविद्यायाः कारणभूतायाः अध्यासः एक एव न धारान्तःपातितयाऽनेकः अतः स्वरूपतोनादिः उत्पत्तिरहितः तस्योत्प-

(१) नन्वविद्याध्यासस्येति कखपुस्तकयोः। (२) अत्र यद्यपि चित्सम्बन्धातङ्कारेति सर्वत्र पाठ उपलभ्यते तथापि चित्सम्बद्धे त्यायेव युक्तम्।

परत्र पूर्वदृष्टावभासोऽध्यास' इति वदता भाष्यकारे
स्मृतिरूपत्वेन संस्कारजन्यत्वमुक्तं विरुध्येतेति चेन्न
कार्याध्यासाभिप्रायत्वात्तस्य । 'परत्र परावभास' इ
त्येतावन्मात्रस्यैव उभयानुगतस्य लक्षणत्वात्

न्यायरत्नावली ।

यम् । अध्यासस्य—अज्ञानाध्यासस्य, अनादित्वे-अनुत्पन्नत्वे,
स्मृतिरूपः—स्मृतिसदृशः । स्मृतिरूपत्वेन—स्मृतिरूपत्वोक्त्या
परत्र परावभास इति । अवमतो भासो ज्ञानं ज्ञेयं वाऽवभासः
तथा चावमतत्वं ज्ञानार्थाध्यासयोर्लक्षणम् । तच्च येन रूपेण येन
सम्बन्धेन च यदवच्छेदेन यत्र यत्प्रतीयते तदवच्छेदेन तत्र वर्त
मानाभावस्य तद्रूपसम्बन्धाभ्यामवच्छिन्नप्रतियोगित्वं तन्निष्ठमित्य
र्थाध्यासस्य, तादृशप्रतियोगित्वाश्रयविषयकज्ञानत्वं ज्ञानाध्यासस्ये

नारायणी ।

त्विकल्पने तु तस्य तस्यापि कारणान्तरापेक्षायामनवस्थाप्रसङ्गादिति
भावः । अध्यासस्य-अज्ञानाध्यासस्य, अनादित्वे-अजन्यत्वे, स्मृतिरूपः
संस्कारजन्यत्वेन स्मृतिसदृशः, परत्र-तदभाववति, पूर्वदृष्टावभासः
ज्ञानपक्षे अवभासनमवभासः पूर्वदृष्टस्यावभासः पूर्वदृष्टजातीयस्याव
भास इति यावत्, अन्यथाऽन्यथाख्यात्यापत्तेः, पूर्वदृष्टस्य नैयायिकैरपि
भानाङ्गीकारात्; अर्थपक्षे तु अवभासत इत्यवभासः अवभासमानः
पदार्थः, पूर्वदृष्टश्चासावभासश्चेति पूर्वदृष्टावभास इत्यर्थः । तथाच स्वा
धिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वमर्थाध्यासस्य, तादृशार्थविषयकत्वं
ज्ञानाध्यासस्य लक्षणमिति निष्कर्षः । स्मृतिरूपत्वेन-स्मृतिसदृशत्वेन
कार्येति । अहङ्कारा‌द्यध्यासाभिप्रायकत्वात् । 'अहमिदं ममेदमि'ति भाष्ये
तस्यैवोपक्रमात् इति भावः । ननु तर्हि भाष्ये (१)कारणाध्यासानुक्त्या
न्यूनता तत्राह—परत्रेति । पूर्वदृष्टपदमारोप्यार्थपरं तथाच परत्र स्वाभाव
वति परस्य पदार्थस्य योऽवभासः अवभासमानो वा परः सोऽध्यासो भ्रम
इति यावत् । उभयेति । कार्यकारणोभयाध्यासलक्षणत्वादित्यर्थः । अस्मि

(१) कारणाध्यासस्य लक्षणानुक्त्येत्यर्थोऽत्र ज्ञेयः, अन्यथा कारणाध्यासस्योक्तत्वाद्व्या
घातः स्यादिति भावः ।

यद्वा 'सत्यानृते मिथुनीकृत्ये'ति भाष्यवचनात् सत्यमिथ्यावस्तुसम्भेदावभासोऽध्यास इत्येव सिद्धान्तलक्षणम् । तेन कारणाध्यासेऽपि न लक्षणाव्याप्तिः । कार्याध्यासस्य च प्रवाहरूपेण बीजाङ्कुरवदनादित्वाभिधानान्न कोऽपि दोषः । एवमध्यासे सिद्धे एकस्यात्मनो जीवेश्वरादिव्यवस्था मानमेयादिप्रतिकर्मव्यवस्था चोपपद्यते । त-

न्यायरत्नावली ।

ति भावः । अत्र यथाश्रुतवाक्यस्य लक्षणाबोधकत्वादाह—यद्वेत्यादि । अनृतत्वमेव लक्षणम् । तदाश्रयस्य सदसद्व्यावृत्तिज्ञापनाय सत्यसम्भेदेत्युक्तम् , सत्तादात्म्येत्यर्थः । सत्यं हि न सत्सम्भिन्नं सत्त्वयोरभावात् । नाप्यलीकं तथा, सदसतोस्सम्बन्धाभावादिति भावः । अथवा सत्यसम्भिन्नत्वं लक्षणान्तरमथवा सत्यस्य चैतन्यज्ञानरूपत्वेन सम्बन्धोक्त्याऽनृतज्ञानत्वं ज्ञानाध्यासलक्षणमुक्तम् । अध्यासे—अज्ञानाहङ्काराध्यासे । उपपद्यत इति । तथा च तदुपपादनार्थमेव प्रथमोत्पन्नमप्याकाशाध्यासमनुक्त्वाऽहङ्काराध्यास उक्त इति भावः ।

नारायणी ।

लक्षणे भाष्यकारपङ्क्तिस्थस्मृतिरूपपदस्वारस्यभङ्ग इत्यतो लक्षणान्तरमाह—यद्वेति । सम्भेदः तादात्म्यम् । तेनेति । प्रकृतलक्षणकरणेनेत्यर्थः । अव्याप्तिः-कारणाध्यासासङ्ग्रहः । ननु कारणाध्यासस्यानादित्वसमर्थनेऽ'हमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार' इति भाष्यकारेणोक्तम्, कार्याहङ्काराद्यध्यासस्याप्यनादित्वमुक्तं विरुध्येत तत्राह—कार्येति । अध्यासनिरूपणस्य फलपर्यवसानमाह—एवमिति । निरुक्तप्रकारेणेत्यर्थः । अध्यासे-आत्मानात्मनोरितरेतराध्यासे । जीवेश्वरादीत्यादिना ब्रह्मविष्णुरुद्रादेर्विश्वादेश्च परिग्रहः । मानेति । मानमेयादीनां प्रतिविषयव्यवस्था कदाचित्कुत्रचित्केनचिदेव विषयो गृह्यत इत्यात्मिका एतस्या जीवेशविभागपूर्वकत्वात् जीवेशविभागमेवादौ दर्शयति—तथाहीति । तत्र

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।

इतिश्रुतेः कार्यकोटिस्त्वंपदार्थस्य, कारणकोटिस्तत्पदार्थस्य । तत्रा-

नारायणी ।

पि कार्यकारणयोर्विशेषणत्वम् उपाधित्वमुपलक्षणत्वं चादाय तत्त्वंपदार्थावपि विशिष्टावुपहितावुपलक्षिताविति त्रिविधौ भवतः। तत्रान्तःकरणविशिष्टस्त्वंपदार्थो जीवः, 'तद्यथा महामत्स्य' इत्यादिश्रुतिप्रमितावस्थात्रयवान्। अन्तःकरणोपहितो जीवः साक्षी, 'त्रिषु धामसु यद्भोग्य-(१)मिति श्रुतिप्रमितः। अहंत्वपुरस्कारेणैव जीवस्य द्रष्टृत्वप्रतीतेः। अन्तःकरणोपलक्षितः शुद्धस्त्वंपदार्थः, 'अविजिघित्सोयमात्मे'ति श्रुतेः। प्रपञ्चनिरूप्यसाक्षित्वादिधर्मातीतः केवलः सच्चिदानन्दमात्रः। एवं तत्पदार्थोऽपि अज्ञानविशिष्ट ईश्वरः, 'मायिनन्तु महेश्वरम्' इति श्रुतेः। मायोपहित ईशः साक्षी, 'एको देवः सर्वभूतेष्वि'ति श्रुतिप्रमितः। मायोपहितस्यैव मायातत्कार्यद्रष्टृत्वसम्भवात्। मायोपलक्षितः शुद्धः 'केवलो निर्गुणश्चे'त्यादिपदैरेव तथा प्रतिपादितो वस्तुतः शुद्धत्वंपदार्थाभिन्नः। तत्र यद्यपि साक्षाद्व्यावर्तकत्वं विशेषणत्वं सप्रकारकधीजनकमात्रत्वरूपम्, उपरञ्जकपदाभिधेयमुपाधित्वं परम्परया व्यावर्तकत्वरूपम्, परिचायकपदार्थाभिधेयमुपलक्षणत्वं नैयायिकाभिमतमेकस्यैकपदाभिधेये न सम्भवति विरोधात्, अत एकैकपदाभिधेययो(२)रुक्तरीत्या त्रैविध्यं दुर्घटम्, तथापि स्वसिद्धम्, सिद्धान्ते तन्मतपरिभाषाया अनङ्गीकारात्। किन्तु विशेष्यवृत्तिधर्माश्रयत्वे सति व्यावर्तकं विशेषणम्, यथा 'घटोस्ती'त्यत्र घटे घटत्वं नीलादिश्च, विशेष्यघटवृत्तिविधेयसत्ताश्रयत्वे सति घटत्वस्य पटादिभ्यो नीलादेश्च पीतादिभ्यो व्यावर्तकत्वात्। उपाधिश्च विशेष्यवृत्तिधर्मानाश्रयत्वे सति साक्षाद्व्यावर्त्तकः, यथा 'श्रोत्रमस्ती'त्यादौ केवलनभःपदार्थे श्रोत्रे कर्णशष्कुली। तामादायैव नभसोस्तीत्यादिनियमाभावात्। तस्यास्तत्र विशेष्यनभोवृत्तिसत्त्वाद्यनाश्रयत्वे सति भेर्याकाशादिभ्यो व्यावर्तकत्वात्। उपलक्षणं तु विशेष्यवृत्तिधर्मानाश्रयत्वे सति परम्परया व्यावर्तकम्, यथा 'यत्र शाखाग्रं तत्र चन्द्र' इत्यादौ चन्द्रे शाखादिः। देशविशेषोपस्थापनद्वारैव तस्य व्यावर्तकत्वात्। दार्ष्टान्तिके च प्रकृतेऽन्तःकरणगताभासवृत्तिबन्धाश्रयत्वाज्जीवे तत्रान्तःकरणं विशेषणम् साक्षिणि चोपाधिः। तद्वृत्तिभासकत्वरूपसाक्षिताया अस्मिन्बाधात्। शुद्धे चोपलक्षणं विशिष्टोपस्थापनद्वारा

(१) त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत्। तेभ्यो विलक्षणः साक्षी चिन्मात्रोहं सदाशिवः। इति श्रुत्या प्रमितः।

(२)—भिधेययोस्तत्त्वमर्थयोरुक्तरीत्येत्यादिः खपुस्तके।

थाहि—अज्ञानोपहित आत्मा अज्ञानतादात्म्यापन्नः स्व-
चिदाभासाविवेकादन्तर्यामी साक्षी जगत्कारणमिति च

न्यायरत्नावली ।

अज्ञानोपहितेत्यादि । अज्ञानोपाधौ प्रतिबिम्बभावापन्नत्वात् अन्तर्गततादात्म्यापन्नो यः अज्ञानोपहितात्मन(१) आभासः प्रतिबिम्बः सोऽज्ञानोपहितः,आत्मा—विविक्तः बिम्बप्रतिबिम्बयोरभेदस्य यावदुपाधिसत्त्वं भानात् सोऽन्तर्यामिरूपः। तस्य च स्वरूपतो मिथ्यात्वेऽप्यात्माविवेकाच्चेतनत्वसाक्षित्वादीति ज्ञापयितुम् आत्मा विशेष्यत्वेनोक्तः न तु तथा विवक्षितमत्र, अथवेत्यादिना तादृशपक्षस्य वक्ष्यमाणत्वात् । अन्तर्यामी—सर्वेषां प्रेरकः, साक्षी—सर्वव्यवहारहेतुज्ञानस्वरूपः, तेनैव ज्ञानेन सर्वेषां जीवानां व्यवहार इति भावः । जगत्कारणमिति। न च जगत्कारणत्वरूपेणेशस्य जीवान् प्रति आवृतत्वात् साक्षिरूपेणावृतत्वापत्त्या साक्षित्वानुपपत्तिरिति वाच्यम्। अज्ञानप्रतिबिम्बत्वरूपसाक्षित्वविशिष्टेऽहङ्काराध्यासस्य विवरणादिमत इव वार्तिकमतेऽपि स्वीकारात् जीवान्प्रति सा-

नारायणी ।

विशिष्य तज्ज्ञापनात् । एवमज्ञानस्यापि तत्पदाभिधेये त्रयं सम्भवति, तद्वृत्तिकर्तृकत्वाश्रयत्वात् , साक्षित्वबाधात् , विशिष्टोपस्थापनद्वारा विशिष्य तज्ज्ञापनाच्चेत्यादिपरिभाषयैव जीवेशसाक्षिशुद्धविभागव्यवस्थाया उपपादनान्न काप्यनुपपत्तिः । अविद्यायास्तत्कार्यस्य जीवस्य तद्भोक्तुः कर्तुरीशस्य द्रष्टुः साक्षिणश्च स्वप्नत्वप्रतिपादकायाः वक्ष्यमाणश्रुतेः स्वारस्यमस्मिन्नेव पक्षे उपपद्यत इत्यभिप्रेत्य वार्त्तिककारैरङ्गीकृतमिमं पक्षमवतारयति—अज्ञानोपहितात्मेति । अज्ञानोपहितस्यात्मा-प्रतिबिम्बत्वेन स्वरूपम् । तस्य जगत्कारणत्वेन निर्देशे हेतुगर्भं विशेषणमाह—अज्ञानेति । अज्ञानतादात्म्यविशिष्टतया प्रमित इत्यर्थः । प्रतिबिम्बस्य मिथ्याभूतस्य कथमन्तर्यामित्वादिकं तत्राह—स्वचिदाभासेति । स्वस्मिन्नज्ञाने यश्चिदाभासस्तस्य बिम्बेनाविवेकात् । तथाच बिम्बाभेदमादाय तत्रान्तर्यामित्वादिव्यपदेशः । अन्तर्यामी सर्वेषां प्रेरकः, साक्षी स-

(१) अज्ञानोपहित आत्मन इति गपुस्तके । तदसंल्लग्नम् ।

कथ्यते, बुद्ध्युपहितश्च(१) तत्तादात्म्यापन्नः स्वचिदा-भासाविवेकाज्जीवः कर्ता भोक्ता प्रमातेति च कथ्यते-इति वार्तिककारपादाः। प्रतिदेहं बुद्धीनां च भिन्नत्वात् तद्गतचिदाभासभेदेन तदविविक्तं चैतन्यमपि भिन्नमिव प्रतीयते। अज्ञानस्य तु सर्वत्राभिन्नत्वात्तद्गताचिदाभा-सभेदाभावात् तदविविक्तसाक्षिचैतन्यस्य न कदाचिदपि

न्यायरत्नावली।

क्षिणोऽनावृतत्वात्। तत्र प्रमाणवृत्त्यभावकालेऽप्यहमज्ञ इति प्रत्ययात् अहङ्कारविशिष्टस्यैव सुखदुःखादिसाक्षित्वेनाज्ञानसाक्षिणीश्वरत्वस्वी-कारादिति भावः। बुद्ध्युपहित इति। अहङ्कारोपहित इत्यर्थः। पूर्ववदहङ्कारोपाहितात्मन(२) आभासः तदविविक्ताहङ्कारोपाध्यन्तर्ग-तप्रतिबिम्बरूपः जीवादिरूपः सुषुप्तावपि संस्काररूपेणाहङ्कारसत्त्वा-ज्जीवसत्त्वम्। बुद्धीनाम्—अहङ्काराणाम्। सर्वत्र—सर्वकालेषु। साक्षिचैतन्यस्येति। 'कर्माध्यक्षः सर्वभूताधिवासः। साक्षी' त्यादिश्रुतिः ईशस्य सर्वसाक्षित्वे मानम्। ननु उपाधितादात्म्या-

नारायणी।

र्वव्यवहारहेतुज्ञानस्वरूपः, जगत्कारणम्-जगदुपादानम्। बुद्धीति। बुद्ध्यु-पहितस्यात्मा प्रतिबिम्बत्वेन स्वरूपः। तस्य कर्तृत्वे हेतुगर्भं विशेषण-माह-तत्तादात्म्यापन्नः। बुद्धितादात्म्यविशिष्टतया प्रतीयमानः। ननु मि-थ्याभूतस्य कथं चेतनत्वादिकं तत्राह--स्वेति। स्वस्मिन्नहङ्कारे यश्चि-दाभासस्तस्य बिम्बेनाविवेकात्। अत्रापि बिम्बाभेदमादायैव सर्वचेत-नत्वादिकमिति भावः। ननु जीवसाक्षिणः प्रतिबिम्बभेदोऽवभासते ईशसाक्षिणस्तु नेति भेदः किं निबन्धनस्तत्राह—प्रतिदेहमिति। बुद्धिगतवि-त्प्रतिबिम्बभेदेन तदविविक्तं चैतन्यमपि-प्रतिबिम्बाभिन्नतया प्रमितं जीव-साक्षिचैतन्यमपि भिन्नमिव-प्रातीतिकभेदविशिष्टं प्रतीयते। सर्वत्र-स-र्वेषु कार्येषु अभिन्नत्वात्-एकत्वात्। तद्गतेति। अज्ञानगतेश्वररूपप्रति-बिम्बभेदाभावात्। तदविविक्तेति--तदभिन्नेत्यर्थः। भेदभानम्-औपा-

(१) बुद्ध्युपहितात्मा तत्तादात्म्यापन्न इति कखपुस्तकयोः।
(२) अहङ्कारोपहित आत्मन इति गपुस्तके।

भेदभानमिति। अस्मिंश्च पक्षे तत्त्वमादिपदे जहल्लक्षणैव। साभासस्योपाधेर्वाच्यार्थस्य हानात्। आभासस्यापि जडाजडविलक्षणत्वेनानिर्वचनीयत्वात्। तदुक्तं संक्षेपशारीरके--

साभासाज्ञानवाची यदि
भवति पुनर्ब्रह्मशब्दस्तदाहं-

न्यायरत्नावली।

यत्राभासोऽपि विनिगमनाभावात्तत्त्वमादिपदवाच्यः। आभासश्च उपाध्यन्तर्गत(१)स्वरूपोऽपि तद्धर्मविशिष्टचिदेव। तथा च जहदजहल्लक्षणैव तत्राह—आभासस्येति। सोपाध्याभासस्येत्यर्थः। वाच्यार्थस्येत्यनुषज्यते। अनिर्वचनीयत्वात्–वार्तिकमते मिथ्यास्वरूपत्वस्वीकारात्। साभासाज्ञानवाची साज्ञानाभासवाची(२)

नारायणी।

धिकप्रातीतिकभेदभानम्। अस्मिंश्च पक्षे–जीवेशयोः कार्यकारणोपाध्यन्तर्गताभासरूपतापक्षे। तत्त्वमस्यादिपदे–'तत्वमसी'ति वाक्यघटकीभूततत्त्वमादिपदे। आदिपदा'दहं ब्रह्मास्मी'त्यादिपरिग्रहः। जहल्लक्षणैव–जहति पदानि स्वार्थं यस्यां वृत्ताविति वाच्यार्थस्य सर्वांशपरित्यागेनाशक्यवृत्तिरूपैव। तत्र बीजमाह--साभासस्येति। आभाससहितस्योपाधेरित्यर्थः। वाच्यार्थस्य हानात्–त्यागात् अभेदान्वयित्वासम्भवादिति भावः। ननु विनिगमकाभावादुपाधिविशिष्टाभासोऽपि तत्त्वमादिपदवाच्यः, आभासश्चोपाध्यन्तर्गतत्वरूपारोपितधर्मविशिष्टा बिम्बचिदेव तथाच जहदजहल्लक्षणैव तत्राह--आभासस्येति। सोपाध्याभासस्यापि। जडेति। 'अहं चेतन' इत्यादिप्रतीतेरहङ्कारादिरूपजडविलक्षणत्वेन। आभासत्वादेव साक्षिरूपाजडविलक्षणत्वेनेत्यर्थः। अनिर्वचनीयत्वात्–स्वरूपतो मिथ्यात्वात्। प्रमाणं चात्र जीवेशादीन्प्रकृत्य 'तदेतत्त्रयं स्वप्नं मायामा मि'त्यादिश्रुतिः, चिदाभासो मिथ्या आभासत्वान्मुखाभासवदि'त्यनुमानं च। साभासाज्ञानवाची साज्ञानाभासवाची वा। अहङ्कारवाची

(१)—र्गतत्वरूपारोपितधर्मविशिष्टचिदेव इति घपुस्तके।
(२) वा अहङ्कारवाची साभासाहङ्कारस्य साहङ्काराज्ञानस्य वा वाचकः इति घपुस्तके।

शब्दोऽहङ्कारवाची भवति

तु जहती लक्षणा तत्र पक्षे । इति ।

न चाभासस्यैव बद्धत्वात् केवलचैतन्यस्य मुक्तत्वात् बन्धमोक्षयोर्वैयधिकरण्यं स्वनाशार्थं प्रवृत्त्यनुपपत्तिश्चेति वाच्यम् । केवलचैतन्यस्यैवाभासद्वारा बद्धत्वाभ्युपगमात् । तदुक्तं वार्त्तिककारपादैः--

न्यायरत्नावली ।

साभासाहङ्कारस्य साहङ्काराभासस्य वाचकः । बद्धत्वात्—कर्तृत्वादिसंसारवत्त्वात् , मुक्तत्वात्—तत्त्वज्ञानाभिव्यक्तपूर्णानन्दस्वरू-

नारायणी ।

साभासाहङ्कारस्य साहङ्काराभासस्य वा वाचकः । तत्र पक्षे—मिथ्याभासाङ्गीकारपक्षे । जहती—विशेषेण स्वशक्यार्थं परित्यजन्ती । आभासवादे बन्धमोक्षयोर्वैयधिकरण्यापत्तिरूपं दोषमपरिहार्यत्वेन पराभिप्रेतं परिहरिष्यन्नाशङ्कते—नचेति । आभासस्यैव—बुद्धिगतानिर्वचनीयचित्प्रतिबिम्बस्यैव न कूटस्थस्यावभासकस्य, बद्धत्वात्—'अहङ्करोमि, मे दुःखमि'त्यादिप्रतीतिसिद्धकर्तृत्वादिरूपसंसारबद्धत्वात् । केवलचैतन्यस्य तु सत्यस्य मुक्त्यन्वययोग्यस्य, मुक्तत्वात्-अविद्यानिवृत्त्युपलक्षितपरिपूर्णानन्दरूपत्वात् । बन्धमोक्षयोः-अविद्याप्रयुक्तकर्तृत्वतत्त्वज्ञानप्रयुक्ताविद्यानिवृत्त्योः, वैयधिकरण्यं-भिन्नाधिकरणनिष्ठत्वम् , तथाच मुक्त्यर्थं बद्धजीवस्य प्रवृत्तेरयुक्तप्रवृत्तस्य मिथ्यात्वेन फलकालेऽसत्त्वेन फलालाभादिति भावः । आभासवादे दूषणान्तरमाह--स्वेति । बन्धस्येव आभासस्यापि मिथ्यात्वात् तदीयतत्त्वज्ञानेन बन्धस्येवाभासस्यापि नाशोऽवश्यमङ्गीकर्तव्यः । नचैतद्युक्तम् , स्वनाशार्थं प्रवृत्त्यदर्शनादिति भावः । मत्तापरिज्ञानाद् दूषणमिति ज्ञापयिष्यन्स्वमतप्रदर्शनेन दूषणं परिहरति--केवलेति । साक्षिचैतन्यस्यैव नाभासस्येत्यर्थः । आभासद्वारा-स्वानिर्वचनीयप्रतिबिम्बद्वारा । बद्धत्वाङ्गीकारात्-कर्तृत्वादिमानरूपसम्बन्धाङ्गीकारात् । प्रतिबिम्बभावानन्तरं कर्तृत्वग्रहणं बन्धः स च साक्षिण एव तन्निवृत्तिरूपो मोक्षोऽपि तस्यैवेति न बन्धमोक्षयोर्वैयधिकरण्यगन्धोपीति यावत् । अपसिद्धान्तशङ्कां वारयति--तदुक्तमिति । वार्त्तिककारैरिति शेषः ।

अय मेव हि नोऽनर्थो यत्संसार्यात्मदर्शनम्। इति। तेन शुद्धचैतन्यस्याभास एव बन्धः। तन्निवृत्तिश्च मोक्ष इति न किञ्चिदसमञ्जसम्। अथवाऽऽभासा-

न्यायरत्नावली।

पत्वात्।(१)नः—अधिष्ठानीभूतचिन्मात्रस्वरूपकाणाम्,आभासानामित्यर्थः। दर्शनं—भासकत्वयोग्यशुद्धाचिन्निष्ठम् आभासतादात्म्यमिति यावत्। तन्निवृत्तिरिति। तथा च स्वीयवास्तवमुख्य(२) स्वरूपप्राप्त्यर्थं स्वस्य बद्धस्य नाशार्थमपि प्रवृत्तिः न दोषाय। सर्वमतेष्वपि मुक्तस्य स्वीयरूपस्य प्राप्त्यर्थं (३)बद्धस्वरूपस्य नाशार्थं बद्धे प्रवृत्तिस्वीकारात्। मनोदेहादिविशिष्टरूपं हि बद्धम् तन्नाशद्वारा तदुपलक्षितमुक्तरूपप्राप्त्यर्थं तत्र प्रवृत्तेः स्वीकारात्। अत्र अज्ञानमेव शुद्धचिन्निष्ठं बन्धः तन्नाशो मोक्ष इति युक्तम्।

'अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः।

इति वार्तिकोक्तेः। आभासस्याप्यज्ञानजन्यत्वात्। तथाप्याभासस्य सुखदुःखाद्याश्रयत्वेन स्फुटबन्धवत्त्वेन प्रत्ययात् स एव बन्ध उक्तः। अत एव संसार्यात्मदर्शनमित्यनेनाभासस्य दुःखादिसंसारवत्त्वमुक्तम्। नन्वेवं यत्र बन्धस्तदेव जीवस्य स्वरूपं स्यात्तत्राह—अथवेत्यादि। चैतन्यमपीति। यदा चिदविविक्ताभासो

नारायणी।

नः अस्माकं भासकचिद्रूपाणां अनर्थः बन्धः संसार्यात्मदर्शनं संसार्यात्मना संसारिरूपेणाभासतादात्म्यविशिष्टतया दर्शनं प्रतीतिः। दोषसमाधानस्य फलितार्थमाह—तेनेति। स्पष्टम्। जहल्लक्षणावादो न भाष्यकाराणामभिमत इत्यतस्तदनुसारेणाभासवादे तत्त्वंपदार्थावाह—अथवेति। आभासादविविक्तचैतन्यम्। अज्ञानगताभासतादात्म्यविशिष्टतया प्रतीयमानं जीवसाक्षिचैतन्यं तत्पदवाच्यं बुद्धिगताभासतादात्म्यविशिष्टतया

(१) यद्यप्यत्र 'न अधिष्ठानीभूत' इत्यादिः पाठः, तथापि लेखकदोषादिति बोध्यम्। परन्तु 'अयमेव हि नोऽनर्थो' इत्यस्याः कारिकायाः न इति पदस्यार्थ एषः।
(२)—मुक्तरूपेति घपुस्तके। (३) बद्धस्य स्वीयरूपस्येति घपुस्तके।

विविक्तचैतन्यमपि तत्त्वमसिपदवाच्यम् । तेन वाच्यै-कदेशस्यात्यागादस्मिन्पक्षे जहदजहल्लक्षणैवेति न को ऽपि दोषः । अयमेव पक्षः आभासवाद इति गीयते।

न्यायरत्नावली।

वाच्यः, तदा विनिगमकाभावात् आभासाविविक्तं चैतन्यमपि वाच्यम् । वाच्यार्थस्य चिद्रूपतया भानस्य उभयथापि निर्वाहादि-ति भावः । एकदेशस्येति । यद्यपि चिदविविक्ताभासस्य वाच्य-त्वेऽपि चितो वाच्यविशेषणत्वेन वाच्यत्वमस्ति, तथापि चित्स्व-रूपलक्षणा न जहदजहल्लक्षणोच्यते, शक्तिमुख्यविशेष्यलक्षणाया एव तथात्वात् । शक्तिस्वाभाव्येन विशेष्यतयैव भानं चितः स्यात्। जहदजहल्लक्षणा हि शक्यैकदेशशक्तिरेव । यथा बलवदनिष्टाजन-कत्वविशिष्टेष्टसाधनत्वज्ञानशक्तविधिप्रत्यये 'श्येनेनाभिचरन् यजेत' इत्यादौ केवलेष्टसाधनत्वबोधोपधयिकाताद्दशशक्तिरित्युक्तं शब्दम-णौ । तथा च विशेषणतया शक्यस्याविशेषणतया च शाब्दधी-र्यदि शक्त्या स्यात् , तदा 'गौर्नित्या, पशुरपशुरि'त्यादावपि स्यात् । किञ्च विशेषणस्यावाच्यतापक्षे चिदविविक्तस्य वाच्यत्वे-ऽपि चितो वाच्यत्वाभावेन वाच्यैकदेशत्वाभावे बोधो लक्षणयैवे-ति भावः । आभासवाद इति। स्वरूपतो मिथ्याभूतं प्रति-

नारायणी।

प्रतीयमानं जीवसाक्षिचैतन्यं त्वंपदवाच्यमित्यर्थः। अपिना विनिगम-काभावादाभासाविविक्तचैतन्यस्य चैतन्याविविक्ताभासस्य च द्वयोरेव तत्त्वमादिपदवाच्यत्वं वक्तुं शक्यमिति ज्ञापितम् । प्रकृतोक्तेः फलमाह-तेनेति । आभासाविविक्तचैतन्यस्य वाच्यत्वाङ्गीकारणेत्यर्थः । वाच्यैकदे-शस्य-वाच्यार्थैकदेशस्य साक्षिणः, अत्यागात्-अन्वयितया ग्रहणात्। अस्मिन्नपि पक्षे-आभासस्य मिथ्यात्वमिति पक्षे, जहदजहल्लक्षणैव जह-ति न जहति च पदानि स्वार्थं यस्यां वृत्तौ सैव, शक्यैकदेशपरित्यागेन शक्यैकदेशवृत्तिरूपैवेति यावत्। एवकाराद् वृत्त्यन्तरव्यवच्छेदः । न कोपि दोषः । नाचार्योक्तिविरोधरूपो दोषः । अयमेव पक्ष इति । जीवेशौ बि-

अज्ञानोपाहितं बिम्बचैतन्यमीश्वरः। अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीवः इति विवरणकाराः। अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः।

न्यायरत्नावली।

बिम्बमिति,वादः आभासवादः। स्वरूपतः सत्यं प्रतिबिम्बत्वरूपेण मिथ्याभूतं बिम्बमेव प्रतिबिम्बमिति वादस्य विवरणोक्तस्य वक्ष्यमाणस्य प्रतिबिम्बवादत्वमिति भावः। बिम्बचैतन्यम्—अज्ञानोपाध्यनन्तर्गतचैतन्यम्। शुद्धाद्व्यावर्तयति—अज्ञानोपहितमिति। अन्तःकरणेत्यादि। अन्तःकरणं स्थूलावस्थं मनः, तत्संस्कारः सूक्ष्मावस्थं मनः, तयोरन्यतराविशिष्टं यदज्ञानं तत्प्रतिबिम्बितमिति, उक्तान्यतररूपे अज्ञाने च प्रतिबिम्बितमिति यावत्। मनस्त्वेन निवेशो मनस्संस्कारस्य असङ्गतः, तत्र मनस्त्वसत्त्वे मानाभावात्। न हि घटसंस्कारे घटत्वमस्ति, अतस्संस्कारोऽपि पृथगुक्तः। उपाधेः प्रतिबिम्बपक्षपातित्वेन 'पूर्णानन्दो नास्ति न भाती'ति व्यवहाररूपकार्यमविद्या प्रतिबिम्ब एव जन-

नारायणी।

म्बादतिरिक्तौ चिदाभासावेवेति पक्षः। आभासवादः। स्वरूपतो मिथ्याभूतः प्रतिबिम्ब इति वादः। बिम्बस्यैव प्रतिबिम्बव्यवहारतत्क्लृप्तकार्यसम्भवान्नातिरिक्ताभासकल्पनं युक्तं गौरवादित्यभिप्रायकं विवरणमतमाह--अज्ञानेति। अज्ञानरूपोपाधिना परिचायकेन परिचितं कर्णशष्कुल्यादिना श्रोत्रादिवत्। एतेन महाकाशमिव शुद्धमिति लब्धम्। तथाचेश्वरचैतन्यं ग्रीवास्थमुखवदुपाध्यनन्तर्गतमिति फलितम्। उपाध्यादिलक्षणं प्रागेवोक्तम्। अन्तःकरणं स्थूलावस्थाबुद्धिः, संस्कारः सूक्ष्मावस्थाबुद्धिः, तयोरन्यतरविशिष्टं यदज्ञानं तत्र प्रतिबिम्बितं तदन्तर्गतत्वरूपारोपितधर्मविशिष्टं चैतन्यं बिम्बात्मकमेव जीवः जीवपदाभिधेय आत्मा, तथाच बिम्बप्रतिबिम्बयोः स्वरूपत एकत्वं भेदस्तु कल्पितः अतः स्वरूपेण जीवस्य सत्त्वाद् बन्धमोक्षयोः सामानाधिकरण्यादिकमपि स्वरसत उपपद्यत इति संक्षेपः। नेयं कल्पना युक्ता 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति श्रुतिविरोधात्, किन्तु कार्यकारणगतप्रतिबिम्बावेव ताविति संक्षेपशारीरकाचार्यमतमाह—अज्ञानेति। अज्ञानान्तर्ग

बुद्धिप्रतिबिम्बितं चैतन्यं जीवः । अज्ञानोपहितं बिम्बचै- तन्यं शुद्धमिति सङ्क्षेपशारीरककाराः । अनयोः पक्षयोः बुद्धिभेदाज्जीवनानात्वम् । प्रतिबिम्बस्य (१)पारमार्थिक- त्वात् जहदजहल्लक्षणैव तत्त्वमादिपदेषु । इममेव च

न्यायरत्नावली ।

यति, न तु बिम्बे; दर्पणादेः स्वगतमालिन्यादिसंसर्गस्य प्रतिबिम्बीभूतमुखादौ जनकत्वदर्शनात् । अतो जीवस्यैव प्रतिबि- म्बत्वमुक्तं नेशस्येति बोध्यम् । शुद्धं-जीवेशानुस्यूतं साक्षिरूपम् । नानात्वमिति । मनोवच्छिन्नस्यैव संसाराश्रयत्वप्रतीत्या मनस उपा- धित्वमावश्यकम्, तथा च जीवनानात्वमिति भावः।(२)प्रतिबिम्बस्य- प्रतिबिम्बस्वरूपचितः । प्रतिबिम्बत्वविशिष्टरूपेण कल्पितत्वेऽपि प्रतिबिम्बस्य स्वरूपचैतन्यमकल्पितमिति भावः । 'रूपं रूपं प्रति- रूपो बभूव तदस्य रूपं प्रतिचक्षणाय' इत्यादिश्रुतयोऽनेकमनोरूपे प्रतिबिम्बितानां जीवत्वे मानानि । ईशस्य प्रतिबिम्बितत्वेऽपि तत्र

नारायणी ।

तत्वरूपारोपितधर्मविशिष्टं चैतन्यमित्यर्थः । बुद्धीति । बुद्ध्यन्तर्गतत्वरू- पारोपितधर्मविशिष्टं चैतन्यमित्यर्थः । अतो न वार्तिककारमतादविशेष- स्तन्मतेऽतिरिक्तस्यैवाभासस्याङ्गीकारात् । शुद्धमाह--अज्ञानेति । अज्ञा- नोपलक्षितमित्यर्थः । शुद्धं-जीवेशयोरनुस्यूतसाक्षिरूपम् । अत एवोपहि- तशब्देन निर्देशः । भास्यभासकभावरूपस्याज्ञानकृतसम्बन्धस्य च व्यव- हारकाले सत्त्वात् । अनयोः-बिम्बप्रतिबिम्बावीशजीवौ कार्यकारणोपा- धिकौ जीवेशावित्युक्तयोः । नानात्वमिति । बुद्ध्यवच्छिन्नस्यैव संसाराश्र- यत्वप्रतीतेः बुद्धेरुपाधित्वमाश्रयतया अवच्छेदकतया चावश्यं तथा च जीवनानात्वमिति भावः । आभासवादाद्वैलक्षण्यं कल्पनायाः फलमाह-- प्रतिबिम्बस्येति । प्रतिबिम्बस्वरूपचितः । सत्यत्वात्--प्रतिबिम्बत्वरूपधर्म- विशिष्टतया मिथ्यात्वेऽपि प्रतिबिम्बत्वोपलक्षितं स्वरूपचैतन्यं त्रिका- लाबाध्यमेवेति भावः । जहदजहल्लक्षणैव-प्रतिबिम्बत्वाद्यंशपरित्यागेन

(१) सत्यत्वादिति कखपुस्तकयोः नारयण्यां च ।

(२) प्रतिबिम्बस्य इति गपुस्तके नास्ति ।

प्रतिबिम्बवादमाचक्षते । अज्ञानविषयीकृतं चैतन्यमीश्वरः । अज्ञानाश्रयीभूतं च जीव इति वाचस्पतिमिश्राः । अ-

न्यायरत्नावली ।

अविद्या 'पूर्णानन्दो नास्ती'त्यादिव्यवहारं न जनयति, सार्वज्ञ्यश्रुतेः । अज्ञानविषयीत्यादि । 'ब्रह्म नास्ती'त्यादिव्यवहारो यदाश्रितः अज्ञानमपि तदाश्रितम् । कार्यकारणयोः एकाश्रितत्वस्य युक्तत्वात् । स च जीवाश्रित इत्यज्ञानमपि तदाश्रितम् । न च अज्ञानाश्रयस्यैव जीवस्वरूपत्वात् आत्माश्रय इति वाच्यम् । अज्ञानोपहितस्यैव जीवत्वेन जीवाश्रितस्याज्ञानस्य स्वाश्रितत्वाभावात् । न हि दण्डत्वोपहितस्य घटकारणत्वे दण्डत्वस्यापि तत् । एवं च 'अज्ञानाश्रयो नास्ति न भाती'तिव्यवहाराभावात् अज्ञानानाश्रयीभूतस्यैव अज्ञानविषयत्वात् तदुपहितचिदेव ईश

नारायणी ।

वाच्यार्थैकदेशरूपशुद्धचिद्बोधोपयिका वृत्तिर्भागाख्या लक्षणैव । इममेव । एकैव कूटस्थचिदुपाध्यन्तर्गतत्वादिना जीवेशादिव्यपदेशभाक् न तु भिद्यतेऽस्याभासेनेति पक्षम् । प्रतिबिम्बवादं–स्वरूपतः सत्यः प्रतिबिम्ब इति वादं आचक्षते तत्त्वविद इति शेषः । ईशे अज्ञानकल्पनं न युक्तं भ्रमकारणतया कल्पनीयस्य तस्य भ्रमाश्रये जीव एवौचित्यात् , कार्यकारणयोरेकाश्रितत्वनियमात् , अन्यथाऽतिप्रसङ्गात्, तस्मात्--

तस्यैव नित्यतृप्तस्य सदानन्दमयात्मनः ।
अविच्छिन्नस्य जीवस्य संसृतिः कथ्यते बुधैः ॥

इत्यादिस्मृतेरविद्यावच्छिन्नानवच्छिन्नावेव जीवेशावित्यभिप्रायकं वाचस्पतिमतमवतारयति--अज्ञानेति । 'ब्रह्म नास्ती न भाती'ति जीवनिष्ठभ्रमकारणीभूताज्ञानविषयीभूतं नत्वविद्याश्रयमभ्रान्तत्वादित्यर्थः । 'ज्ञाज्ञौ द्वावजावीशानीशा'विति श्रुतेश्चाज्ञानाश्रयो जीव एवेत्याह--अज्ञानेति । आश्रयतासम्बन्धेनाज्ञानविशिष्टमित्यर्थः । न चाज्ञानाश्रयस्यैव जीवत्वादात्माश्रय इति वाच्यम् । अज्ञानोपहितस्यैव जीवत्वेन जीवाश्रितस्याज्ञानस्य स्वाश्रितत्वाभावात् दण्डत्वस्येव दण्डोपहितवृत्तित्वेपी त्यन्यत्र विस्तरः । अस्मिंश्च पक्षे–अवच्छेदवादपक्षे । (१)[यथा दण्डत्वोप

(१) [...] चिह्नितः पाठो नास्ति खपुस्तके ।

स्मिंश्च पक्षे अज्ञाननानात्वात् जीवनानात्वम् । प्रति-
जीवं च प्रपञ्चभेदः । जीवस्यैव (१)स्वाज्ञानोपहिततया-

न्यायरत्नावली ।

इति भावः । अज्ञाननानात्वादिति । कस्मिंश्चि(२)ज्जीवमु-
क्तेऽपि कस्यचित् बन्धोपलब्धेः जीवभेदप्रयोजकं जीवोपाध्यज्ञान-
नानात्वं कल्प्यते । प्रपञ्चभेदः-ईशाकाशादिप्रपञ्चनानात्वम् ।
एकाज्ञाननाशेऽपि अज्ञानतद्विषयेशतत्कार्याकाशादीनां सत्त्वात्
नानात्वमिति भावः । ननु सृष्ट्यारम्भकाले सर्वैरज्ञानैः एक एव
प्रपञ्चो जन्यताम्, अज्ञानभेदेन प्रपञ्चभेदकल्पने गौरवात् । एका-
ज्ञानस्य उच्छेदक्षणे प्रपञ्चस्य उच्छेदे(३) तत्तद्वितीयक्षणे विद्यमा-
नाज्ञानानां परिणामः प्रपञ्चान्तरं जायते । एवञ्च एकस्मिन् प्रप-
ञ्चोच्छेदक्षणे केनापि प्रपञ्चो नोपलभ्यते इति स्वीक्रियते उक्त-
लाघवानुरोधात् । न च भवन्मतेऽपि तत्तदज्ञानव्यक्तिभिः क्रमेण
नानाप्रपञ्चोत्पत्तिस्वीकारेण न लाघवमिति वाच्यम् । शतादिसं-

नारायणी ।

हितस्य घटकारणत्वेन दण्डाश्रितस्य कारणत्वस्य दण्डत्ववृत्तिता यथा
वा दण्डत्वोपहितस्यैव दण्डत्ववत्त्वेन दण्डाश्रितस्य दण्डत्वस्य स्वाश्रित-
त्वम्] अज्ञाननानात्वादिति । कस्मिंश्चिज्जीवे मुक्तेऽपि कस्यचिद्बन्धोपल-
म्भाज्जीवभेदप्रयोजकं जीवोपाध्यज्ञाननानात्वं कल्प्यते इत्यर्थः । अन्यथा
'तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवदि'त्यादिश्रुतिविरोधाप-
त्तेरिति भावः । जीवाज्ञानकार्यत्वात् स्वप्नवत् प्रपञ्चोऽपि प्रतिजीवं भिन्न
एव परिणामिविवर्तोपादानयोर्भेदादित्याह--प्रतिजीवमिति । युगपद-
नेकपुरुषीयभ्रमसिद्धानेकप्रातीतिकपदार्थवदपेक्षाबुद्धिजन्यानेकपुरुषीय-
द्वित्वादिवच्च जीवभेदेन विपदादिप्रपञ्चनानात्वमित्यर्थः । एकाज्ञाननाशे-
ऽप्यन्याज्ञानकार्याकाशादीनां दर्शनात्प्रपञ्चनानात्वमिति भावः । वस्तुतस्तु
सकलजीवाविद्याभिरेक एव प्रपञ्चो जन्यते, एकस्मिन्मुक्ते च महापटनाशे
खण्डपट इव महाप्रपञ्चनाशे खण्डप्रपञ्च इति प्रपञ्चभेद इत्यन्यत्र विस्तरः ।

(१)—अज्ञानोपहितत्वात् जगदुपादानत्वमिति कपुस्तके ।
(२) जीवे मुक्तेपि इति घपुस्तके । (३) उच्छेदेन द्वितीयक्षणे इति घपुस्तके ।

न्यायरत्नावली ।

नन्यपुरुषाणां युगपत् मुक्तिस्थले शताद्यज्ञानव्यक्तीनां युगपन्नाशेन तावदज्ञानभेदेऽपि प्रपञ्चभेदाभावात् । युगपन्नानाप्रपञ्चस्वीकारे युगपदुत्पन्ननानाऽऽकाशादिषु नानापुरुषैः युगपदनुभूयमानानन्तसंयोगादिव्यक्तिकल्पने गौरवाच्चेति चेन्न । सृष्टिप्रलयवाक्यैस्तावत् परिमितप्रलयकालोत्तरमाकाशादीनां क्रमेण सृष्टिबोधनात् । युगपदेवाकाशादिसर्वप्रपञ्चोत्पत्तौ मानाभावात् । तत्तदसाधारणकारणसमवधानं विना उक्तद्वितीयक्षणे उपलभ्यमानसर्वकार्योत्पत्त्यसम्भवात् । (१)तत्तदसाधारणकारणानां हेतुहेतुमद्भावापन्नानामपेक्षणे चानेकक्षणेषु तत्तत्कार्योपलम्भापलापापत्तेः । न हि क्रियोत्पत्तिद्वितीयक्षणे प्रपञ्चोच्छेदे विभागाद्युत्पत्तिसम्भवति । किञ्च जीवस्य जगदुपादानत्वबोधिका—

पुरत्रये क्रीडति यस्तु जीवस्ततस्तु जातं सकलं विचित्रम् ।

इत्यादिश्रुतिः, अज्ञानस्य तद्बोधिका 'मायां तु प्रकृतिं विद्यात्' ( सृष्ट्वा प्रविश्य ) 'अमूढो मूढ इव व्यवहरन्नास्ते माययैवे'ति श्रुतिश्च । एकवचनान्तानां जीवमायामूढपदानां स्वारस्यात् एकैकजीवस्याज्ञानस्य च जीवाज्ञानान्तरनिरपेक्षोपादानत्वं बोधयति । त्वत्पक्षे तु तद्बा-

नारायणी ।

नन्वविद्या यदि जीवाश्रिता तदा ब्रह्म कथं प्रपञ्चोपादानं परिणममानाऽविद्याश्रयत्वाभावादित्यादिशङ्क्यानावृतत्वेन जडशक्त्ययोगान्न ब्रह्मण उपादानत्वं किन्तु'पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रमि'ति श्रुतेर्जीवस्यैवेत्याह—जीवस्यैवेति । नन्वज्ञानाश्रयस्याज्ञानप्रेरकत्वाद्ययोगात्कथं कर्तृत्वादिकं तत्राह—अज्ञानेनेति । अज्ञानरूपोपाधिना परिचितत्वादित्यर्थः । तथा चाज्ञानस्योपाधित्वेन जीवत्वानाश्रयत्वाज्जीवशरीरेऽप्रवेशादज्ञानोपहितस्य कर्तृत्वादिकं सम्भवत्येवेति भावः । उपहितरूपेण जीवचैतन्यं सृष्टिस्थितिसंहारे कारणं विशिष्टरूपेण भ्रान्तमिति नि-

(१) तत्तदसाधारणानामिति गपुस्तके ।

जगदुपादानत्वात् । प्रत्यभिज्ञा चापि सादृश्यात् ।

न्यायरत्नावली ।

धस्स्यात् । तथा च साधूक्तं—'प्रतिजीवं प्रपञ्चभेद' इति । पुरत्रये- विराड्हिरण्यगर्भाव्याकृतरूपे । नन्वेवं 'यो घटो मया दृष्टः स एव त्वये'ति प्रत्यभिज्ञा न स्यात् तत्राह—प्रत्यभिज्ञेति । सादृश्यादिति । (१)दृष्टत्वरूपसाधारणधर्मविषयकात् त्वद्दृष्टो मद्दृष्ट इत्याकारकेत्यर्थः। त्वद्दृष्टव्यक्तस्य भेदस्य मद्दृष्टव्यक्तावभावेऽपि मदीयप्रपञ्चान्तर्गतस्य मया कल्पितस्य व्यावहारिकस्य मद्दृष्टव्यक्तिनिष्ठस्य त्वद्दृष्टत्वस्य उक्तप्रत्यभिज्ञाविषयता । यद्यपि मद्दृष्टत्वं तादृशं मद्दृष्टव्यक्तावेव वर्तते, न तु त्वद्दृष्टे, तथापि त्वद्दृष्टतात्वस्य त्वद्दृष्टत्वे त्वत्कल्पिते सत्त्वात् एकजातीयस्य त्वद्दृष्टत्वस्य सादृश्यत्वसम्भवः । न हि घटादिरिव घटत्वादिरपि जीवभेदेन भिन्नम्, येन त्वद्दृष्टतात्वमपि तथा स्यात् । सादृश्यप्रत्ययबलेन हि जातिमात्रं सर्वजीवज्ञेयमेकमेव स्वीक्रियते । तथा च त्वद्दृष्टतायाः त्वद्दृष्टवृत्तिरूपादिस्वरूपत्वेन तद्वृत्तिजातिविशेषस्यैव त्वद्दृष्टतात्वरूपत्वेन तद्घटितं सादृश्यम् । न च तथापि 'त्वदीयत्वद्दृष्टवृत्तिरूपादिजातीयरूपवान् मद्दृष्ट' इति ज्ञानासम्भवः, अन्यदृष्टस्य अन्येन ज्ञातुमशक्यत्वादिति वाच्यम् । तथाऽपि वस्तुगत्या त्वद्दृष्टरूपवृत्तिजातिविषयाकारस्य ज्ञानस्य सम्भवेन तस्यैव प्रकृते प्रत्यभिज्ञापदार्थत्वात् । एवञ्च तत्त्वज्ञानं स्वाश्रयजीवमात्रदृश्यस्यैवो-

नारायणी ।

त्कर्षः । ननु यदि जीव एवोपादानं प्रतिजीवं च प्रपञ्चभेदस्तर्हि कथं 'यो घटस्त्वया दृष्टः स एव मये'ति प्रत्यभिज्ञा तत्राह—प्रत्यभिज्ञा चेति । 'त्वया दृष्टो मया दृश्यत' इत्याद्याकारिकेत्यर्थः। सादृश्यादिति । युगपद्भ्रमासिद्धानेकसर्पादाविव तदेवेदमौषधमित्यादाविव च तद्वृत्त्यसाधारणधर्मवत्त्वादित्यर्थः । धर्मिणां प्रतिजीवं भेदेऽपि धर्माणामभेदात्प्रत्यभिज्ञोपपद्यत

(१) स्वरूपासाधारणधर्मविषयकादिति घपुस्तके ।

न्यायरत्नावली ।

च्छेदकं न तु जातेः । अथवा—

येयं गङ्गा नरैस्सेव्या सेव्यते सा सुरादिभिः ।
सर्वेषां पावनी सैका प्रयच्छति परं पदम् ॥

इत्यादिपुराणादिवाक्यमूलार्षप्रत्याभिज्ञैवात्र प्रत्यभिज्ञापदार्थः । आर्षज्ञानस्य देवनरादिदृष्टगङ्गादिरूपवर्तीयं गङ्गेत्याकारकस्य (१)सर्वजीवप्रपञ्चग्राहकत्वात् । वस्तुतस्तु सर्वजीवाज्ञानजन्यनानागङ्गादीनां सर्वजीवग्राह्यत्वेऽपि न क्षतिः । एकस्य तत्त्वज्ञानेनापरस्य प्रपञ्चानुच्छेद इत्येतदर्थमेव प्रपञ्चभेदस्वीकारात् । तथा च त्वद्दृष्टस्यापि मम ग्रहणात् ऐक्यप्रत्यभिज्ञा सम्भवत्येव । प्रत्यभिज्ञा चेत्यादिमूलं तु 'पूर्वदिने मुक्तो यः पुरुषः तद्दृष्टो घट इदानीं मया दृष्ट' इत्यादिधियः सादृश्यविषयकत्वपरम् । तत्र तद्दृष्टस्य इदानीमभावेन मद्दृष्टे तदैक्यविषयत्वासम्भवात् । यद्यपि=जीवनिष्ठाज्ञानविषयब्रह्मोपादानकं जगत्, अविद्या तु प्रमातृदोषविधया जगतो निमित्तकारणम्, न तूपादानम्, ब्रह्मनिष्ठजगतो व्यधिकरणत्वात्, न हि शरावादिनिष्ठदुग्धादेः घटादिनिष्ठदध्यादिरूपपरिणामस्सम्भवतीति कल्पतर्वादौ वाचस्पत्याशयो वर्णितः=तथापि मायोपादानत्वज्ञापिकायाः 'अयमप्येतत् सुषुप्तं स्वप्नं मायामात्रम्, मायां तु प्रकृति'मित्यादिश्रुतेः स्वारस्यात्, जीवोपादानत्वपरतयापि वाचस्पतिवाक्यानां नेतुं शक्यत्वात् जीवोपादानत्वश्रुतेश्च जीवोपादानत्वमुक्तम् । एवञ्चाज्ञानविषयस्यापि जीवस्य परिणामिकारणाज्ञानाश्रयत्वादेव उपादानत्वं न विरुद्धम् । ब्रह्मणश्चानुपादानत्वेऽपि तज्ज्ञानमेवाज्ञाननिवर्तकम्, समानविषयोरेव ज्ञानाज्ञानयोः नाश्यनाशकभावस्य क्लृप्तत्वात् । 'इदं रजत'मित्यादिभ्रमस्थलेऽपि पल्लवाविद्यापारिणामरजताद्युपादा-

(१) सर्वजीवीयप्रपञ्चेति घपुस्तके ।

ईश्वरस्य च सप्रपञ्चजीवाविद्याधिष्ठानत्वेन कारणत्वोपचारादिति । अयमेव चावच्छेदवादः । अज्ञानोपाहितं

न्यायरत्नावली ।

न्त्वमुक्ताविद्याश्रयत्वात् जीव एव । तस्यैव शुक्त्याद्युपादानत्वात् शुक्त्याद्यवच्छेदेन जीवगतरजतादिप्रतीतिरुक्ताविद्यायाः शुक्त्याद्यवच्छिन्नचिद्विषयकत्वात् तादृशज्ञाननाश्यत्वम् । ईश्वरस्येत्यादि । जीवो न जगदुपादानम् किन्तु ईश्वर इत्यादिशास्त्रीयवाक्येषु उपादानपदमुपादानभूतजीवनिष्ठाविद्याविषयपरमित्यर्थः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिस्तु ब्रह्मणः जगत्कारणत्वं (१)बोधयती जीवब्रह्माभेदपरा इति बोध्यम् । अवच्छेदवाद इति ।

घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥

नारायणी ।

इति भावः । ननु जीव एव जगदुपादानं तर्हि 'यतो वा इमानि भूतानि जायन्त' इति श्रुतिविरोधः, तत्रेश्वरस्यैव जगत्कर्तृत्वप्रतिपादनादित्यत आह-ईश्वरस्य चेति । मायाविषयस्येत्यर्थः । सप्रपञ्चेति । प्रपञ्चसहिता या जीवोपाधिभूताऽविद्या तदधिष्ठानत्वेन-तद्विषयत्वेन (२)गौणकारणताव्यवहारात् । अभिन्ननिमित्तोपादानकत्ववादिनां वेदान्तिनां मते यत्र कर्तृत्वादिना निमित्तत्वं तत्रैवोपादानत्वं मुख्यं वाच्यं तदुभयं च स्वप्नं प्रतीव प्रपञ्चं प्रत्यपि जीवस्यैवाविद्याश्रयत्वेन सम्भवति न ब्रह्मणः, अतः शुक्त्यादेरिवाविद्याविषयत्वेनैवोपादानत्वं भाक्तं न मुख्यमिति भावः । ननु तर्हि मायोपाधिकानां रामकृष्णादीनामनुपास्यत्वं स्यादिति चेत् । भ्रान्तोसि । जीवाज्ञानविषयस्य ब्रह्मण एव भक्त्यादिवशाद्रामकृष्णादिना प्रादुर्भावस्य भक्तिकृतफलसद्भावादेश्चाङ्गीकारात्, रजताद्यात्मना दोषवशात् शुक्त्यादेरिवेत्यन्यत्र विस्तरः । अयमेव-अविद्यावच्छिन्नानवच्छिन्नावेव जीवेशाविति पक्षः । अवच्छेदवादः-महाकाशस्य घटाकाशादिरिव जीवः शुद्ध-

(१) बोधयति जीवब्रह्माभेदपरेति पाठस्तु सर्वत्रोपलब्धोपि प्रामादिक एव ।
(२) कारणत्वोपचारात्-इति प्रतीको भ्रष्टोत्र लेखकदोषादिति ।

बिम्बचैतन्यमीश्वरः, अज्ञानप्रतिबिम्बचैतन्यं जीव इति वा, अज्ञानानुपहितं शुद्धचैतन्यमीश्वरः, अज्ञानो-

न्यायरत्नावली।

इत्यादिश्रुतयो जीवस्यावच्छिन्नरूपत्वबोधिकाः। अज्ञानोपहितमित्यादि। जीवोपाधौ मनो न निवेश्यते, हस्तपाद्याद्यवच्छिन्नानामिव मनोवच्छिन्नानां भेदेऽपि जीवभेदास्वीकारात्। परन्तु अज्ञानमेवोपाधिः। तस्य चैकत्वमेव, लाघवात्। 'मायान्तु प्रकृति'मजामेका'मित्यादिश्रुतिसिद्धैकवचनादिति भावः। अज्ञानानुपहितमिति। अज्ञानोपहितात् भिन्नमित्यर्थः। नन्वीश्वरस्याज्ञानानुपहितत्वे प्रपञ्चमध्ये अवस्थानं न स्यात्, तथा च 'यः पृथिव्यां तिष्ठन्नि'तिश्रुतिविरोधस्स्यादिति विम्बप्रतिविम्बरूपेश्वरजीववादिभिः विवरणकारैरवच्छेदवादे दूषणमुक्तम्, तत्राह–शुद्धमिति। तथा चोपहिते जीवचैतन्ये अधिष्ठानतया केवलचैतन्यस्य तादात्म्यमवश्यं वाच्यमिति प्रपञ्चमध्ये तदवस्थाने न कोपि दोष

नारायणी।

स्य परमात्मनोऽश इति वादः। शब्दार्थस्तु अवच्छिद्यते 'अयमयं न भवति, अयमेतादृशगुणक' इति परिच्छेदः प्राप्यते इत्यवच्छेद इति। एतन्मतनिष्कर्षस्त्वस्मत्कृतसिद्धान्तविन्दु(१)गुरुटीकायां द्रष्टव्यः। प्रपञ्चभेदे जीवभेदे च गौरवान्नावच्छेदवादो युक्तः किन्तूपहितावेव जीवेशाविति दृष्टिसृष्टिपक्षमाह—अज्ञानेति। अज्ञानोपहिताद्भिन्नमित्यर्थः। शुद्धं–सर्वज्ञत्वादिधर्मातीतं सच्चिदानन्दमात्रस्वरूपम्। न च तस्य 'यः पृथिव्यां तिष्ठन्नि'त्याद्यन्तर्यामित्वबोधकश्रुतिविरोधः, निरुपाधिकस्य तस्य प्रपञ्चेऽवस्थानायोगादन्तर्यामित्वाद्यसम्भवादिति वाच्यम्। स्वतोऽवस्थानायोगेऽपि जीवचैतन्याधिष्ठानस्य जीवद्वाराऽवस्थानसम्भवान्न कोऽपि दोषः। 'अजो ह्येको जुषमाणोऽनुशेते' इत्यादिश्रुत्या जीवस्याज्ञानोपाधिकत्वश्रवणात्। अज्ञानोपाधिकं चैतन्यं जीवः। अज्ञानोपाधिकत्वेऽपि न विशिष्टो न वाऽज्ञानप्रतिबिम्बितः किन्तूपहित एवेत्याह—अज्ञानेति। अज्ञानोपाधिना जी-

(१)—सिद्धान्तविन्दुविवरणे द्रष्टव्य इति खपुस्तके। कपुस्तके तु गुरुटीकायामिति पाठः।

पहितं जीव इति वा मुख्यो वेदान्तसिद्धान्तः एकजीव-वादाख्यः। इममेव दृष्टिसृष्टिवादमाचक्षते । अस्मिंश्च

न्यायरत्नावली।

इति भावः। ईश्वरस्य जगदुपादानत्वे स्रष्टव्यालोचनं कल्प्यमव-श्यमधिष्ठानाद्यभिन्नकर्तृककार्यं प्रति कर्तव्यत्वेन तदालोचनस्य हेतुत्वात्, मायाविकर्तृकेन्द्रजालादौ तथा दृष्टत्वात्। जीवस्य जग-दुपादानत्वे तु तन्न कल्प्यम्, स्वापादिरूपकार्यं प्रति तदहेतुत्वस्य दृष्टत्वात्, तथा च लाघवात् जीवस्यैव जगदुपादानत्वमित्याशये-नाह-अस्मिंश्चेत्यादि। स्वाज्ञानवशात्-स्वं प्रति आवारकं यद-

नारायणी।

वत्त्वेन ज्ञापितं न त्वज्ञानविशिष्टत्वेन जीव इत्यर्थः। नाज्ञानवैशिष्ट्यान्मनो-वैशिष्ट्याद्वा जीवानां भेद उचितः। तथा च सति हस्ताद्यवच्छिन्नत्वा-दिनापि प्रातीतिकानन्तभेदापत्तेरिति गौरवम् अतोऽज्ञानमेकं तदुपाधि-को जीवोप्येक एवेति वादोऽतिप्राचीनाभिमतो युक्त इत्यभिप्रेत्य प्रकृतवा-दमुररीकरोति-मुख्येति। मुख्यत्वं च 'तदेतत्त्रयं स्वप्नमायामात्रमि'त्यादिश्रु-त्या स्वप्नसमर्थनेन स्वप्नदृष्टान्तसलिलधारया समस्तशङ्कामलप्रक्षालनात्। एकजीववादाख्यः-एक एव स्वप्नद्रष्टेव सजीवजीवः (१)अन्ये स्वप्नकल्पिता निर्जीवजीवा इत्येकजीववादाख्यः।अथवा सर्वत्र समष्टिजीवो हिरण्यगर्भाख्यो मुख्योऽज्ञानोपहिता अन्येऽन्तःकरणावच्छिन्ना व्यष्टिभूता जीवाभासा इति सविशेषानेकशरीरैकजीववादः। यद्वा कायव्यूहादाविवैकेनैव जीवेन स-र्वशरीरेष्वहमित्यादिव्यवहार इत्येकजीवेन सर्वशरीरसजीववादः। इममेव। मतभेदेन त्रिविधमपि एकाज्ञानोपाधिकमेकजीववादम्, दृष्टिरेव जगतः सृष्टिः न त्वीशसृष्टस्य प्रमाणादिना जीवस्य दृष्टिरिति वादम्, आचक्षते-क-थयन्ति। प्राचीना इति शेषः। अस्मिन्पक्षे-दृष्टिसृष्टिपक्षे, स्वाज्ञानवशात्-स्वं प्रत्यावरकं यदज्ञानं तद्वशात्, जगदुपादानं-स्वस्मिन्स्वप्नवत्सर्वकार्य-कल्पके स्वाविद्यया स्वप्नवद्विषयाकारेण विवर्तमानमिति यावत्। निमित्तं च कर्ता, कर्तृत्वं च कार्यानुकूलज्ञानवत्त्वमात्रं (२)(न तु स्रष्टव्यालोचनवत्त्वम्) रजतादिभ्रमे तस्य हेतुत्वात् वियदादिभ्रमे तदनपेक्षणात्। कार्यानुकूलं

(१) अन्ये स्वप्न इव कल्पिताः निर्जीवा जीवा इति खपुस्तके।
(२) (......) अयं पाठः खपुस्तके नास्ति।

पक्षे जीव एव स्वाज्ञानवशात् जगदुपादानं निमित्तं च । दृश्यं सर्वं प्रातीतिकम् । देहभेदाच्च जीवभेदभ्रान्तिः ।

न्यायरत्नावली ।

ज्ञानं तद्वशात् । जीव एव उपादानं निमित्तं कर्ता च, नेशः; उक्तरीत्या कार्यालोचनकल्पने गौरवादिति भावः । दृश्यमज्ञानतत्प्रयुक्तं प्रातीतिकं यदा यदा विद्यते, तदाऽवश्यं ज्ञायते । साक्षिस्वरूपेण जीवेन स्वनिष्ठं सर्वं विद्यमानतादशायां प्रकाश्यते, न तु तत्रावरणं तद्भञ्जकमनोवृत्तिर्वा कल्प्यते, गौरवादिति भावः । देहभेदादित्यादि । देहावच्छिन्नानां भेदेऽपि अविद्यावच्छिन्नरूपेण

नारायणी ।

नाधिष्ठानज्ञानम्, तच्च जीवस्यैव अन्यथा भ्रमानुपपत्तेः । तथा च यथा स्वप्नभ्रमे आलोचनाभावेऽपि स्वात्मकाधिष्ठानप्रकाशेन स्वस्य जगदात्मना विवर्तमानत्वेनोपादानत्वं तदनुकूलज्ञानवत्त्वेन निमित्तत्वं च, एवं प्रपञ्चेऽपि । ईशस्य च तदुपादानत्वकल्पने तु मायाविकर्तृकेन्द्रजालादाविव आलोचनमपि कल्पनीयम् । न च तद्युक्तं गौरवात्) तथा च स्वप्न इव स्वाविद्यया जगदादिरूपेण विवर्तमानत्वादुपादानत्वं तदनुकूलज्ञानवत्त्वाच्च निमित्तत्वमिति यावत् । ननु कथमावृतस्य जीवस्य तदनुकूलज्ञानवत्त्वम् सर्वज्ञस्यैव तत्सम्भवादित्यत आह—दृश्यं चेति । अज्ञानतत्कार्यजातम् । प्रातीतिकं-प्रतीतिमात्रकालिकम्, तथा च यद्यनादिमायया साक्षिभास्यया जगदुत्थाप्यते तदावश्यं साक्षिरूपेण जीवेन स्वस्मिन्कल्पितं कार्यं स्वप्नवत्प्रकाश्यत एव न तत्रावरणं तद्भञ्जकमनोवृत्तिर्वा कल्प्यते गौरवात् । इन्द्रियान्वयव्यतिरेकौ स्वप्न इव नेयौ तथा च प्रमाणमन्तरेणैव स्वसन्निहितसर्वावभासकत्वाज्जीवस्यापि सर्वज्ञत्वेन स्रष्टृत्वोपपत्तिरिति भावः । नन्वेकजीववादपक्षे चैत्रो न मैत्र इत्यादिभेदप्रत्यक्षविरोधस्तत्राह--देहेति । देहावच्छिन्नानां प्रातीतिकभेदेऽप्यविद्यावच्छिन्नरूपेणैक्यं न विरुद्धमिति भावः । अत एव चैत्रसुखादीनां मैत्रेणाननुसन्धानमपि देहावच्छिन्नानामिव अन्तःकरणावच्छिन्नानामपि प्रातीतिकभेदाङ्गीकारात् । अविद्यावच्छिन्नस्य चैतन्यस्य सर्वानुसन्धातृतायामिष्टापत्तेरित्यादि महद्व्याख्याने प्रपञ्चितमस्माभिः । नन्वेकजीववादे वस्तुत उपदेष्टव्यादन्यस्योपदेष्टुरभावात्सर्वज्ञस्याऽसर्वज्ञस्य वा शास्त्राभा-

एकस्यैव च स्वकल्पितगुरुशास्त्राद्युपबृंहितश्रवणमननादि-दार्ढ्यादात्मसाक्षात्कारे सति मोक्षः। शुकादीनां च मोक्षश्रवणं त्वर्थवादः। महावाक्ये च तत्पदमनन्तस-त्यादिपदवदज्ञानानुपहितचैतन्यस्य लक्षणयोपस्थापक-

न्यायरत्नावली।

जीवैक्यं न विरुद्धमिति भावः। अर्थवादः—श्रवणादेर्विधेयस्य स्तु-तिः। ननु 'तत्त्वमसी' ति वाक्ये तत्पदं न प्रक्रान्तेशपरम्, 'तत्ते-जोऽसृजते'त्यादिपूर्ववाक्येन जगत्कारणजीवस्यैव प्रक्रान्तत्वेना-सङ्गतेः, तथा च श्रुतिविरुद्धोऽयं पक्षः तत्राह—सत्यादिपदव-दिति। यथा सत्यादिपदं जगत्कारणत्वादिप्रक्रान्तरूपमनुपस्थाप्य लक्षणया शुद्धोपस्थापकं तथा तत्पदमपि द्वारम्, (१)न तु सत्या-दिपदेषु सत्यत्वादिविशिष्टोपस्थितिः, तत्पदे युगपत् सर्वज्ञरूपप्रसि-द्धार्थोपस्थितिरिति भावः। ननु 'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं त-पस्तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायत' इति श्रुत्या जगत्कारणे

नारायणी।

वाच्च कथमुपदेशसाक्षात्कारादिकं तत्राह—एकस्यैवेति। स्वप्न इव त-त्त्वमस्यादिवाक्यवक्तृत्वादिना कल्पितगुरुशास्त्रादेरुपदेष्टृत्वकरणत्वादि-सम्भवान्न साक्षात्कारानुपपत्तिरित्यर्थः। नन्वेकजीवपक्षे कथमस्माकमि-दानीमप्यनिर्मोक्षः, शुकादीनां मोक्षेणास्माकमपि मोक्षौचित्यात्, तेषा-मनिर्मोक्षे तु तन्मुक्तिप्रतिपादकशास्त्रविरोधोऽस्मदादीनामनाश्वासप्र-सङ्गश्चेत्यत आह—शुकेति। अर्थवादः—विधेयस्य श्रवणादेः स्तुतिः। अयं भावः। स्वप्नन्यायेन कल्पिततद्भेदतत्तन्मुक्तानुवादकानां तत्पर-त्वाभावात् ज्ञानतत्साधकश्रवणादिस्तुतिमात्रपरत्वं नात्मभेदमुक्त्या-दिमात्रपरत्वम्, तथाऽस्मदादीनां शास्त्रप्रामाण्यादेव प्रवृत्त्युपपत्तेश्चेति न कोपि दोष इत्यन्यत्र विस्तरः। ननु यदि जगदुपादानं जीव एव तदा तत्पदस्येशपरामर्शकत्वानुपपत्तिः, 'तत्तेजोऽसृजते'त्यादिना भवन्मते जीवस्यैव प्रक्रान्तत्वात्तत्राह—महावाक्येति। तत्त्वमस्यादिमहावाक्ये चेत्यर्थः। सत्यादिपदवत्। यथा 'सत्यं ज्ञानमनन्तमि'तिवाक्ये सत्यादिपदम् 'तस्मा-

(१) द्वारन्तु सत्यादिपदेति घपुस्तके।

मित्याद्या अवान्तरभेदाः स्वयमूहनीयाः । ननु वस्तुनि विकल्पासम्भवात् कथं परस्परविरुद्धमतप्रामाण्यम् ,

न्यायरत्नावली ।

जीवं सर्वज्ञत्वबोधानुपपत्तिः तत्राह—इत्यादीति । उक्तश्रुतौ सर्वविषयकज्ञानवत्त्वमात्रं विवक्षितम् , न तु युगपत् सर्वज्ञानवत्त्वम् , तथा च जीवस्यापि क्रमेण तत्सम्भवान्न दोषः । अथवा युगपत्सर्वज्ञा(१)भेदो जीवे उक्तश्रुत्या बोध्यते, 'यतो वे'त्यादिश्रुतिवदिति भावः । वस्तुनि—पुरुषप्रयत्नानिष्पाद्ये, विकल्पासम्भवात्—विरुद्धपक्षद्वयबोधकवाक्ययोः प्रामाण्यासम्भवात् । प्रयत्नसाध्ये विरुद्धनानापक्षबोधकयोरनुष्ठानपरत्वसम्भवेन कालभेदेन तद्बोधनात् प्रामाण्यसम्भवः न तथाभूतवाक्ययोरिति भावः । अतथाभूतवाक्ययोः प्रामाण्यासम्भवेऽपि विचित्ररुचिनानापुरुषीयनानाविधक-

नारायणी ।

द्वा एतस्मादात्मन आकाशः सम्भूत' इत्यादिना जगत्कारणत्वेन प्रतिपद्यमानमप्यपरामृश्य सत्यत्वाद्युपस्थितिद्वारा लक्षणयाऽबाधितं सद्व्यक्तिमात्रं बोधयति । यथा तत्पदमपि सर्वज्ञत्वाद्यारोपितधर्मोपस्थितिद्वाराऽनुपहितं चिन्मात्रं बोधयति तत्रैव तात्पर्यादिति न कोपि दोषः । ननु तान्त्रिकानुभवविरुद्धेयं व्युत्पत्तिस्तत्राह —इत्यादीति । 'तत्तेजोऽसृजते-'त्यादिना प्रतिपादितं तत्सत्यमित्यत्र तत्पदेनानूद्य सत्यमित्यनेन परमात्मत्वं प्रसाध्य पुनः स आत्मेति व्यतिहारेणाभेदं प्रदर्श्य सिद्धमभेदं 'तत्त्वमसि' इत्यनेन दृढीकरोति । तत्र त्वंपदं लाक्षणिकं तत्पदन्त्वाकाशादिपदवद्धर्मिमात्रस्य शक्त्या बोधजनकमित्यवान्तरभेदा इति भावः । मतनिष्कर्षस्त्वस्मदीयमहद्व्याख्यानेऽनुसन्धेयः । नन्वेकरूपे प्रयत्नानिष्पाद्ये वस्तुनि कथं परस्परविरुद्धमतानि कथं वा तेषां प्रामाण्यमित्याशङ्कते—नन्विति । वस्तुनि—पुरुषप्रयत्नानिष्पाद्ये, विकल्पासम्भवात्—विरुद्धानेकपक्षसमावेशासम्भवात् । प्रयत्नसाध्ये कर्मणि कालविषयभेदादिना षोडशिग्रहणादीनां व्यवस्था सम्भवति न तथाभूते विरुद्धपक्षाणामिति भावः । किं प्रयत्नानिष्पाद्ये विरुद्धकोटिरेव न सम्भवति ? ओ-

(१) सर्वज्ञेशाभेदं इति घपुस्तके ।

तस्मात् किमत्र हेयं किमुपादेयमिति चेन्न। क एवमाह? वस्तुनि विकल्पो न सम्भवतीति। स्थाणुर्वा पुरुषो वा राक्षसो वेत्यादिविकल्पस्य वस्तुन्यपि दर्शनात्। अतात्त्विकी सा कल्पना पुरुषबुद्धिप्रभवा इयं तु शास्त्रीया जीवेश्वरविभागादिव्यवस्थेति चेत्। नूनमतिमेधावी भवान्। अद्वितीयात्मतत्त्वं हि प्रधानं फलवत्त्वादज्ञातत्वाच्च प्रमेयं शास्त्रस्य। जीवेश्वरविभागादिकल्पनास्तु

न्यायरत्नावली।

ल्पनानुवादकत्वमिति सिद्धान्तयितुं दृष्टान्तमाह—क एवमाहेत्यादि। शास्त्रीया—तत्त्वावेदकशास्त्रतात्पर्याधीना। प्रधानम्—इतरप्र-

नारायणी।

होस्विद्विरुद्धकोटिमत्त्वादप्रामाण्यात्फलवत्त्वं न सम्भवतीत्यभिप्रायः? तत्राद्ये व्याघातः। द्वितीये साक्षात्फलवत्त्वाभावे इष्टापत्तिरेवेत्यभिप्रायेण सिद्धान्तयितुमुपक्रमते—क एवमिति। विकल्पमात्रेण न तवेष्टसिद्धिः प्रकृते शास्त्रीयविकल्पव्यवस्थाया आवश्यकत्वात्। तव च सा कठिनेत्यभिप्रायेणाशङ्कते—अतात्त्विकीति। परम्परयापि फलवत्त्वशून्या सा कल्पना—संशयात्मिका धीः। पुरुषबुद्धिमात्रप्रभवा—कोटिद्वयोपस्थितिजन्या। मात्रपदं तात्पर्यप्रयुक्तत्वं वारयति। शास्त्रीया—शास्त्रतात्पर्याधीना। तथाचैकतरप्रामाण्यनिश्चय आवश्यक इति भावः। अनुवादकस्याप्यनूद्यांशे तात्पर्यं वदन्भवान्न पण्डितः किन्तु केवलं श्रुतिभारवाहक एवेत्युपहसन्समाधत्ते—नूनमिति। स्वाभिप्रायं विशदयति—अद्वितीयेति। जीवपरमात्मनोरभेदरूपात्मतत्त्वं हीत्यर्थः। प्रधानम्—इतरप्रधानोपकार्यप्रतिपत्तिकं, फलवत्त्वात्—ज्ञानद्वारा साक्षान्मुक्तिरूपफलवत्त्वात्, अज्ञातत्वाच्च—मानान्तरानधिगतत्वरूपापूर्वत्वाच्च। प्रमेयं—तात्पर्यविषयः।

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥

इतिश्रुत्या प्रकृतलिङ्गषट्कोपेत एव श्रुतीनां तात्पर्योक्तेः। अस्ति च छान्दोग्यषष्ठादावद्वैते(१) 'एकमेवाद्वितीयमि'त्युपक्रमः। 'ऐतदात्म्यमिदं

(१) अस्ति च छान्दोग्येऽद्वैते एव फलवत्त्वमिति तत्रैव तात्पर्यं नान्यत्रेत्यन्वयः।

पुरुषबुद्धिप्रभवा अपि शास्त्रेणानूद्यन्ते, तत्त्वज्ञानोपयोगित्वात्, 'फलवत्सन्निधावफलं तदङ्गमिति न्यायात्, भ्रमसिद्धस्यापि श्रुत्यानुवादसम्भवात्। एतेन द्वैतज्ञाने-

न्यायरत्नावली।

तिपादनोपकार्यप्रतिपत्तिकम्। तदङ्गं-तदुपकारकम्। भ्रमसिद्धस्य-स्वाप्नप्रपञ्चस्य। श्रुत्या-स्वप्नबोधकश्रुत्या। एतेन-अद्वैतज्ञा-

नारायणी।

सर्व'मित्युपसंहारः। 'तत्त्वमसी'ति नवकृत्वोऽभ्यासः। 'आचार्यवान्पुरुषो वेदे'त्यपूर्वत्वम्। 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य' इति—फलवत्त्वम्। 'येनाश्रुतं श्रुतं भवती'त्येकविज्ञानेन सर्वविज्ञानमर्थवादः। 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयम्' इत्याद्युपपत्तिश्चेति तत्रैव शास्त्रतात्पर्यं (१)नान्यत्रेत्यन्यत्र विस्तरः। मूले चात्र फलवत्त्वाज्ञातत्वयोर्द्वयोरेव प्रदर्शनं प्रमाशरीरे तावन्मात्रप्रवेशादिति संक्षेपः। जीवेश्वरकल्पनाया अपूर्वत्वं प्रतिक्षिपन् तात्पर्यविषयत्वं प्रतिक्षिपति—जीवेति। जीवेश्वरविभागस्त्वित्यर्थः। पुरुषेति। भिन्नभिन्नपुरुषोत्थानेकप्रतिभातिमात्रजन्या अपि। शास्त्रेण—दर्शितश्रुत्या। पुरुषबुद्धिमात्रकल्पितत्वेऽपि तेषामेवानुवादे बीजमाह—तत्त्वज्ञानेति। लक्षणया शुद्धचिद्बोधानुकूलविशिष्टोपस्थितिविषयत्वादित्यर्थः। तत्त्वज्ञानोपयोगित्वं शरीरादेरप्यस्तीत्यत आह—फलवत्सन्निधाविति। स्वातन्त्र्येण फलजनकसन्निधौ पठ्यमानम्, अफलम्—स्वातन्त्र्येण फलाजनकम्, तदङ्गं—प्रधानाङ्गं प्रधानोपकारकमिति यावत्। यथा दर्शपूर्णमासादेः प्रयाजादिकम्। भ्रमेति। भ्रममात्रशरीरजाग्रत्स्वप्नसुषुप्त्याद्युपाधिकत्वेन भ्रमसिद्धस्यापि विश्वतैजसवैश्वानरादेः, श्रुत्या—'सोऽयमात्मा चतुष्पा'दित्यादि श्रुत्या। श्रुतीनामद्वैतपरत्वं 'सन् घट' इत्यादिप्रत्यक्षादिविरोधान्न सम्भवति, न च द्वैतश्रुतिविरोधेन प्रत्यक्षादेरेव प्रामाण्यमिति वाच्यम्, प्रत्यक्षस्यैव सर्वप्रमाणोपजीव्यत्वेन बलवत्त्वाद्विनिगमकाभावाच्चेति जल्पितमतिदेशेन निराकरोति—एतेनेति। अद्वैतस्य फलवत्त्वापूर्वत्वादिनो वास्तवत्वेनेत्यर्थः। द्वैतज्ञानेन—'सन् घट' इत्यादिद्वैतप्रत्यक्षेण, अद्वैतज्ञानस्य—'नेह नानास्ति किञ्चने'त्यादिश्रुतिबोधिताद्वैतज्ञानस्य, सर्वमिथ्यात्वेन शुद्धाखण्डा-

(१) नान्यत्रेत्यन्यत्र विस्तर इति कपुस्तके नास्ति।

नाद्वैतज्ञानस्य बाधो निरस्तः। घटादिद्वैतज्ञानस्यापि अद्वैतसन्मात्रांशे अज्ञाते प्रामाण्याभ्युपगमाच्च ज्ञाना-

न्यायरत्नावली ।

नस्य परमपुरुषार्थसाधनत्वाज्ञातविषयकत्वादिरूपबलवत्त्वसम्भवेन। ननु प्रत्यक्षादिप्रमाणानां सन्मात्रांश इव घटाद्यंशेऽपि प्रामाण्यं स्यात्, तथा च कथमद्वैतज्ञानं बलवत्तत्राह–घटादीत्यादि। सन्मात्रांशे न तु घटाद्यंशे। ननु घटादेरज्ञातत्वाभावेऽपि घटं पश्यामीत्यादिप्रतीत्या चाक्षुषादिविषयत्वसम्भवात्तदंशे प्रामाण्यं सम्भ-

नारायणी ।

र्थबोधस्य, बाधः–अवगतार्थत्वपरित्यागः। न केवलमद्वैतस्य बलवत्त्वात्प्रत्यक्षाद्यबाध्यत्वं किन्तु प्रत्यक्षादेः स्वार्थे प्रामाण्याभावादपीत्याह–द्वैतेति। सन्मात्रांशे–केवलशुद्धे न तु घटाद्यंशे। अज्ञाते–अज्ञातविषयतावति, प्रामाण्याच्च–अबाधितार्थविषयकत्वरूपप्रामाण्याच्च। चः पूर्वहेतुसमुच्चायकः। *(१) ननु कथं चक्षुरादिजन्यद्वैतज्ञानस्यापि सदंशे ब्रह्मण्येव प्रामाण्यं रूपादिहीनतया ब्रह्मणश्चक्षुराद्ययोग्यत्वात्। न च स्वरूपतोऽयोग्यत्वेऽपि चन्द्रावच्छिन्नत्वेन राहोरिव घटाद्यवच्छिन्नत्वेन योग्यतेति वाच्यम्। शब्दाद्यवच्छिन्नत्वेन गगनादेरपि योग्यताप्रसङ्गात्। राहोस्तु नीलस्य स्वतो योग्यस्य दूरदेशविशेषेणायोग्यस्य शुक्लभास्वरचन्द्रसम्बन्धाच्चाक्षुषत्वमिति विशेषत्वात्। न च–

न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते।

इतिमीमांसकोक्तरीत्या कालस्यैव ब्रह्मणो भविष्यतीति वाच्यम्। (२)तस्यापि अत एवानङ्गीकारात्। न चानुभवविरोधः। 'परमाणुवानयं देश इत्याद्यनुमानरूपज्ञानलक्षणयाप्युपपत्तेरिति चेत्। न। 'इदानीं घट' इति स्वाधिकरणक्षणावच्छिन्नत्वेनानुभवस्य सार्वजनीनस्यापलापापत्तेः। न च रूपादिसामग्रीबाधात्कथमनुभवः स्यादिति वाच्यम्। प्रतिनियतेन्द्रियग्राह्यप्रत्यक्षत्वावच्छिन्नं प्रत्येव रूपादेर्हेतुत्वकल्पनात्। सर्वेन्द्रियग्राह्यं तु ब्रह्म कालश्च अतो न रूपादिहीनत्वेऽपि चाक्षुषत्वानुपपत्तिः। वस्तुतस्तु द्रव्यप्रत्यक्षं प्रत्येव रूपादेः कारणत्वात् न ब्रह्मणः कालस्य

(१) *...* एतच्चिन्हमध्यगः पाठो नास्ति खपुस्तके।

(२) तस्यापि कालस्यापि अत एव रूपाद्यभावादेव अनङ्गीकारात् चाक्षुषत्वानङ्गीकारात् इत्यर्थः।

ज्ञानयोस्समानाश्रयविषयत्वनियमात्। जडे च प्रमाण-प्रयोजनाभावेनाज्ञानानभ्युपगमात् (१)+तदवच्छिन्नचैत-

न्यायरत्नावली।

इति तत्राह—ज्ञानेत्यादि। तथा च चाक्षुषादिवृत्तेः समानविषयकाज्ञाननिवर्तकत्वानुरोधेनाज्ञातचिद्विषयत्वेऽपि घटादिविषयकत्वे मानाभावः। घटं पश्यामीति साक्षिधीस्तु घटावच्छिन्नचिद्विषयकचाक्षुषादि विषयीकुर्वन्ती चाक्षुषादिवृत्तेः विषयतावच्छेदकत्वेन घटादिकं भासयतीति भावः। ननु 'घटं न जानामी'ति साक्षिधिया घटादेरप्यज्ञानविषयत्वावगाहनात् चाक्षुषादिवृत्तिविषयत्वेनैव घटादिकं गृह्यते साक्षिणा, न त्ववच्छेदकत्वेन तत्राह—जडे चेत्यादि। अज्ञानेति। अज्ञानविषयत्वेत्यर्थः। घटाद्यवच्छेदेन

नारायणी।

त्वा प्रत्यक्षानुपपत्तिः तयोः सिद्धान्तेऽद्रव्यत्वात्। ब्रह्मणः स्वप्रकाशसच्चिदानन्दस्य स्वतन्त्रपदार्थत्वात्कालस्याविद्यात्मकत्वादिति संक्षेपः*।
(२)ननु 'घटं पश्यामी'त्यादिना घटादिज्ञानानां घटाद्यंशेऽपि प्रामाण्यग्रहात् कुतः सन्मात्रांश एव प्रामाण्यं तत्राह—ज्ञानेति। ज्ञानाज्ञानयोरेकाश्रयविषयकत्वनियमात् चिन्मात्राश्रिताज्ञाननाशायोत्पन्ना प्रमाणाजन्या वृत्तिः चित्तमेव विषयीकरोति न घटादिकं मानाभावात्। 'घटं पश्यामी'त्यादिधीस्तु चाक्षुषादिवृत्तिविषयतावच्छेदकत्वेनव घटादिकं भासयति न मुख्यविषयत्वेन अतो न तत्र प्रामाण्यमिति भावः। नन्वज्ञातत्वं विना यदि प्रामाण्यं दुर्घटं तदा तादृशप्रतीतिप्रामाण्यान्यथानुपपत्त्याऽज्ञातत्वमप्यस्तु घटादौ प्रतीयतेऽपि 'घटं न जानामी' त्यादिना तत्राह—जडेति। अज्ञानतत्कार्यादावस्वप्रकाशे इत्यर्थः। प्रमाणेति। 'आत्मा वारे द्रष्टव्य' इत्यादिनाऽऽत्मनो दर्शनार्हत्वोक्त्याऽज्ञातत्वेन प्रमेयत्वलाभवदनात्मनोऽज्ञातत्वसूचकप्रमाणस्य जडत्वादेवास्वप्रकाशे स्वप्रकाशत्वकृतभानावरणरूपप्रयोजनस्य चाभावेन। अज्ञानेति। विषयतयाऽज्ञानास्वीकारात् घटाद्यवच्छेदेन चित

(१) +…+ चिन्हितः पाठो नास्ति कखपुस्तकयोः।
(२) अत्र रूपाद्यभावेपि ब्रह्मणो नीरूपकालादेरिव सर्वेन्द्रिययोग्यस्य न चक्षुर्वेद्यत्वानुपपत्तिः तत्तदिन्द्रिययोग्यप्रत्यक्षं प्रत्येव तद्गुणानां कारणत्वस्य व्यवस्थापनात्। 'घटं पश्यामी'त्यादिनेत्यादिः पाठः खपुस्तके।

न्यायरत्नावली ।

चितस्स्फुरणवारणाय घटाद्यवच्छेदेन चित्यज्ञानाविषयताऽवश्यमुपलभ्या, अतस्तदवच्छेदकत्वेनैव घटादीनामस्फुरणोपपत्तौ तेष्वज्ञानविषयतान्तरकल्पने गौरवम् । न च घटाद्युपहितचैतन्यानि केवलचितो भिन्नानि न वा? आद्ये तेष्वज्ञानविषयत्वानि घटादिषु तदवच्छेदकत्वानि कल्पनीयानीति तदपेक्षया घटादिष्वज्ञानविषयत्वानां कल्पनैव लघीयसी, द्वितीये घटाद्यवच्छेदेन स्फुरणं घटादिविशेषितचिद्रूपे संशयाद्यभावः, (१)तद्वारणं च तस्मिन्नज्ञानविषयत्वास्वीकारेऽपि घटादावज्ञानविषयत्वानां स्वीकारेण निर्वहतीति वाच्यम्; आद्ये घटादाववच्छेदकत्वानामकल्पनादज्ञातचित्तादात्म्यादेव तत्राज्ञातत्वव्यवहारात्। न च विनिगमकाभावः घटादावज्ञातत्वस्वीकारेऽज्ञातघटादितादात्म्येन तदुपहितचिदज्ञातत्वव्यवहारसम्भवादिति वाच्यम् । चित्यज्ञातत्वस्वीकारे हि अज्ञातत्वशून्यचिद्रूपमपरोक्षत्वं वाच्यम् , घटादौ तत्स्वीकारे तु नापरोक्षत्वं तथा, घटाद्याकारवृत्त्यभावकालेऽपि घटादेरपरोक्षत्वापत्तेः; किन्तु अज्ञातत्वशून्योपहितत्वविशिष्टचिद्रूपम् , तथा च गौरवम् । न चाज्ञातत्वशून्यत्वमेव तदिति वाच्यम् । अलीकस्यापि तदापत्तेः ; न चाभानपादकाज्ञातत्वम् अलीके सदास्त्येवेति वाच्यम् । साक्ष्यसम्बन्धादेव तत्राभानोपपत्तौ अज्ञातत्वास्वीकारात् । न च अज्ञातत्वशून्यत् घटादि तत्तत्स्वरूपमेव तदिति वाच्यम् । 'घटोऽपरोक्षः पटोऽपरोक्ष' इति प्रतीतेः एकापरोक्षतात्वव्यक्तिविषयत्वात् । अज्ञातत्वशून्यचित्त्वस्यैव तादृशव्यक्तित्वात् , घटाद्युपादानकप्रत्यक्षघटाद्यपरोक्षतानां तेन रूपेणैककारणत्वस्य मन्मते सम्भवाच्च एवं पूर्वोक्तयुक्तेः द्वितीयपक्षेऽपि न घटादावज्ञानविषयत्वम् । तत्राज्ञातत्वशून्यचैतन्यं द्वितीयपक्षे ब्रह्मज्ञानोत्तरमपि अप्रसिद्धम्,

(१) तदावरणं च तस्मिन्नज्ञानविषयतापि घटादावित्यादिः गपुस्तके ।

न्यायरत्नावली ।

दापि घटं न जानमीति प्रत्ययेन चितः अज्ञातत्वशून्यत्वाभावात् , तथा च तदापि घटाद्याकारवृत्तिकाले घटं साक्षात्करोमीति व्यवहारो न स्यादिति चेन्न । द्वितीयपक्षे 'घटं साक्षात्करोमी'त्यादौ 'घटाद्यवच्छिन्नेनाज्ञानाविषयत्वेन शून्यं चैतन्यं साक्षात्करोमी'ति व्यवह्रियते । तथा च घटाद्याकारवृत्तिकाले घटाद्यवच्छिन्नस्याज्ञानविषयत्वस्यापसरणात् 'घटं साक्षात्करोमी'ति व्यवहारः । एवं च आद्यपक्षे अज्ञातत्वशून्यचिति तादात्म्यस्य द्वितीयार्थस्यान्वयः, द्वितीयपक्षे तु अज्ञातत्वे अनवच्छिन्नत्वस्य द्वितीयार्थस्येति विवेकः । आख्यातस्य तदनुकूलव्यापारोऽर्थः । ननु द्वितीयपक्षो नोपपद्यते, अज्ञातत्वसामान्याभाववच्चितः साक्षात्करोत्यर्थत्वेन घटाद्यवच्छिन्नाज्ञातत्वाभाववच्चितस्साक्षात्करोतिना बोधासम्भवात् । एवम् 'इदं सुखं साक्षात्करोमी'ति धीर्न स्यात् , एतत्सुखावच्छिन्नस्याज्ञानविषयत्वस्याप्रसिद्ध्या तदभाववच्चितोऽप्यप्रसिद्धेः । न च घटाद्यवच्छिन्नाज्ञानविषयत्वीयविशेषणतासम्बन्धेनाज्ञानविषयत्वस्याभावो बुध्यते, यदर्थबोधकपदोत्तरं द्वितीयासमभिव्याहृतः साक्षात्करोतिः तदवच्छिन्नविषयत्वीयविशेषणतासम्बन्धभानस्य व्युत्पादितसिद्धत्वादिति वाच्यम् । पदार्थयोस्संसर्गविधया भासमान एव समभिव्याहारस्य नियामकत्वेनापदार्थबोधे तस्यानियामकत्वादिति चेत् । अत्रोच्यते । द्वितीयपक्षे अज्ञातत्वे अभावे चिति च साक्षात्करोतेश्शक्तित्रयस्वीकारात्(१), अज्ञातत्वे च घटाद्यवच्छिन्नत्वस्यान्वयेन घटाद्यवच्छिन्नाज्ञातत्वस्यैवाभावेऽन्वयेन तादृशाभावस्य च चित्यन्वयेन विशिष्टचिद्बोधसम्भवः । चितस्तु तद्व्यक्तित्वेनैव शक्यता (२)+ शाब्दधीविशेष्यता च + तेन शाब्दधीविशेष्यतायाः

(१)—स्वीकारेणाज्ञातत्वे घटाद्यवच्छिन्नाज्ञातत्वस्यैवाभावेऽन्वयेन तादृशाभावस्येति पाठभेदो घपुस्तके युक्तश्च । (२) +...+ एतच्चिन्हान्तर्गतपाठो घपुस्तके नास्ति ।

न्यायरत्नावली ।

किञ्चिदवच्छिन्नत्वनियमेऽपि न दोषः । अथवा चिन्निष्ठविशेष्यता-सम्बन्धेनाभाववदेव द्वितीयं शक्यम् । तृतीयं तु नाभ्युपेयते । अभावस्य तु पदार्थैकदेशत्वेऽपि ससम्बन्धिकत्वात् तत्राज्ञातत्वान्वयेऽपि न दोषः । 'एतत्सुखं साक्षात्करोमी'त्यादौ तु नाप्रसिद्धिः । सुखमात्रे निसत्वादिभ्रमहेत्वज्ञानाविषयत्वस्य सर्वसुखावच्छिन्नस्य प्रसिद्धत्वात् । 'ब्रह्म साक्षात्करोमि' इत्यादौ तु न ब्रह्मावच्छिन्नस्याज्ञानविषयस्याभानम् , अप्रसिद्धत्वात् । नाप्याधेयत्वस्य द्वितीयार्थतया ब्रह्मवृत्त्यज्ञातत्वशून्यचितो भानम् । ब्रह्मज्ञानोत्तरमपि घटाद्यवच्छिन्नस्य ज्ञातत्वस्य ब्रह्मचिदसत्त्वेन तादृशचितोऽप्रसिद्धेः । किन्तु ब्रह्मवृत्त्यज्ञातत्वानवच्छिन्नविषयत्वीयविशेषणतासम्बन्धेन योऽभावस्तद्भानम् । आधेयत्वं तु द्वितीयया लभ्यते । ब्रह्मपदसमभिव्याहारस्य च तत्सम्बन्धभाननियामकत्वात् । 'घटं साक्षात्करोमि' इत्यादौ तु (१)घटत्वाद्यवच्छिन्नाज्ञातत्वस्यैव नोक्तसम्बन्धेनाभावभानम् । दृश्यवाचकपदसमभिव्याहृतद्वितीयाया एवावच्छिन्नार्थकतया न 'ब्रह्म साक्षात्करोमी'त्यादौ द्वितीययावच्छिन्नत्वबोधः । वस्तुतस्तु साक्षात्करोतेस्स(२)कर्तृकत्वात् प्रयोजकेऽपि शक्तिः । तथा च 'घटं साक्षात्करोमी'त्यादौ घटत्वाद्यवच्छिन्नोऽज्ञातत्वस्य योऽभावः, तत्प्रयोजकविशिष्टचिद्बोधः(३) । अवच्छिन्नत्वं च अवच्छेदकतासम्बन्धेनाधेयत्वम्, 'ग्रामं गच्छती'त्यादौ द्वितीययाऽऽधेयत्वबोधात् । अथवाऽज्ञातत्वाभावप्रयोजकत्वविशिष्टचित्येकैव शक्तिः । न चैवं ब्रह्मसाक्षात्कारपूर्वमपि 'ब्रह्म साक्षात्करोमी' ति धीस्स्यात्, घटाद्याकारवृत्तिकाले घटाद्यवच्छेदेन ब्रह्मवृत्तेरज्ञातत्वाभावस्यानुभ-

(१) द्वितीययाऽवच्छिन्नज्ञानानुकूलसम्बन्धेनाऽभावज्ञानम्-इति पाठान्तरं घपुस्तके ।

(१) सकर्मकत्वात् इति पाठभेदो घपुस्तके ।

(३) 'ब्रह्म साक्षात्करोमी'त्यादौ तु ब्रह्मवृत्तिरज्ञातत्वस्योक्तसम्बन्धेन योऽभावस्तत्प्रयोजकविशिष्टचिद्बोधः । इति पाठाधिक्यं घपुस्तके ।

त्वात् । एकशक्तिपक्षे हि नानवच्छिन्नविषयत्वीयविशेषणतासम्बन्धे-नाज्ञानविषयत्वस्याभावो बुध्यते, येन तस्य व्याप्यवृत्तितया घटा-द्यवच्छिन्नता न स्यादिति वाच्यम् । अनवच्छिन्नस्याज्ञानाविषयस्य ब्रह्मणि व्याप्यवृत्तितया तत्सत्त्वे तादृशाभावस्यासम्भवात् । न चैवं 'घटं साक्षात्करोमी'त्यादौ अज्ञातत्वाभावस्य ब्रह्मज्ञानपूर्वं घटाद्य-वच्छिन्नतया धीर्न स्यादिति वाच्यम् । तादृशबुद्धेरेतत्कल्पेऽनुपप-न्नत्वेऽपि 'घटं साक्षात्करोमी'त्यादौ अज्ञानाविषयतावच्छेदकत्वाभाव-विशिष्टचिति शक्त्यन्तरस्वीकारेण तद्धीसम्भवात् 'ब्रह्म साक्षात्करो-मी'त्यादावेव विषयतामात्रसम्बन्धेनाभावघटितशक्यार्थसम्भवात् । न च ब्रह्मज्ञानपूर्वं घटाद्याकारवृत्तिकाले घटाद्यवच्छेदेनाज्ञानविषयता-भावस्य ब्रह्मणि सत्त्वात् 'ब्रह्म साक्षात्करोमी'ति धीस्स्यादिति वाच्यम् । अनवच्छिन्नस्याज्ञातत्वस्य ब्रह्मणि सत्त्वे घटाद्यवच्छेदेना-ज्ञातत्वसामान्याभावो नास्तीत्यस्य पूर्वमेवावेदितत्वात् । अवच्छि-न्नचितां केवलचिदन्यत्वपक्षे त्वज्ञातताभावश्चिद्वृत्तिर्निवेश्यः, चिति तादात्म्येन ब्रह्मघटादेरन्वयः, घटाद्यवच्छिन्नचिति घटादेरिव वृत्ति-विषयत्वोपहितब्रह्मचिति ब्रह्मणस्तादात्म्यसत्त्वात् । अत एव फल-त्वेन बुध्यमाना चिदेव ज्ञानकर्मतत्तादात्म्यात् घटादिकं तथा व्यवह्रियते, जानात्यर्थे तु असत्त्वापादकमेवाज्ञानं निवेश्यम्, अधिकं त्वग्रे वक्ष्यते।तस्मात् घटावच्छिन्नचितां केवलचिदनन्यत्वेऽपि न काप्य-नुपपत्तिः । अज्ञानस्य पूर्णानन्दनिष्ठविषयतान्या या विषयता तदव-च्छेदकत्वानां घटादौ स्वीकारे तेषामेव घटाद्याकारवृत्तिनाश्यत्वम् । तथा च वृत्तिकाले घटादीनामज्ञानाविषयतानवच्छेदकत्वात् उक्तरी-त्या 'घटं साक्षात्करोमी'ति धीसम्भवः । यदि तु सम्बन्धिनाशे सम्बन्धस्य सत्त्वासम्भवात् ब्रह्मज्ञानोत्तरं ब्रह्मनिष्ठस्याज्ञानस्य तद्वि-षयत्वस्य च नाशे तदवच्छेदकत्वानामपि नाशात् घटादौ वृत्त्यभा-

न्याज्ञानादेव तत्राप्यज्ञानव्यवहारोपपत्तेः+। सर्वप्रमाणा-

न्यायरत्नावली।

वकाले साक्षात्करोमीत्यादिव्यवहारापत्तेः, उक्तावच्छेदकत्वानापा-
वरणरूपत्वासम्भवादिति चिन्त्यते, तदाप्यज्ञानस्य पूर्णानन्दनि-
ष्ठानवच्छिन्नविषयत्वमेव ब्रह्मज्ञाननाश्यम्। अज्ञानं तु चरमेणैव ब्र-
ह्मज्ञानेन नाश्यम्, न तु प्रारब्धभोगकालीनेनेति स्वीक्रियते। अ-
थवा अज्ञाननानात्वपक्षमवलम्ब्याज्ञानानामेव वृत्तिनाश्यता स्वीक्रिय-
ते। तस्मादेकाज्ञानपक्षे घटाद्यवच्छिन्नाचितां केवलचिदन्यत्वे ता-
पूर्णानन्दे च अनवच्छिन्नान्येवाज्ञानविषयत्वानि। तासां तदनन्यत्वे
तु एकस्यैवाज्ञानस्य एकविषयता पूर्णानन्दनिष्ठा स्वीक्रियते, अ-
न्यासां तु विषयतानां घटादावच्छेदकत्वानि। नानाज्ञानपक्षे
तूलाज्ञानानां विषयतावच्छेदकत्वानि घटादिषु स्वीक्रियन्ते, न तु
विषयत्वम्, प्रमाणाभावात्। चिन्निष्ठैवाज्ञानविषयत्वेन तेषु
भातीति व्यवहारसम्भवेन प्रयोजनाभावाच्चेति भावः। नन्वासां
चित एवाज्ञातत्वम्, प्रमेयत्वं तु घटादेरेव, घटादिविषयिकयैव प्र-
मया घटाद्यवच्छिन्नचिद्विषयकाज्ञाननाशस्य सम्भवात् तत्राह—
सर्वेति। स्मृतिप्रामाण्यवारणायाज्ञातविषयकत्वघटितं प्रामाण्यमिति
भावः। ननु कथमज्ञातज्ञापकत्वेन स्मृतेर्वारणम्, तज्जनकसंस्कार-
स्यानुद्बोधकत्वे स्मृतिपूर्वं तद्विषयेऽपि अज्ञातत्वसम्भवात्, अज्ञातत्व-
भावे तत्र भ्रमस्यानुभवसिद्धस्यानुपपत्तेरिति चेन्न। स्वकरणस्य यो
व्यापारः तदुत्पत्त्यव्यवहितपूर्वक्षणे वा स्वकरणाधिकरणक्षणे यदज्ञा-

नारायणी।

स्फुरणवारणाय घटाद्यवच्छेदेन चिति स्वप्रकाशेऽज्ञानविषयताऽवश्यं व-
लभ्या ततस्तदवच्छेदकत्वेनैव घटादीनां अभानोपपत्तौ तेष्वज्ञानान्तरक-
गौरवादिति भावः। ननु मास्त्वज्ञातत्वं तथापि प्रामाण्ये किमागतं तद्वि-
शेष्यकत्वविशिष्टतत्प्रकारकत्वरूपप्रामाण्यस्य घटादावव्याहतेस्तत्राह
सर्वेति। सर्वप्रतीतीनामज्ञानविषयतावद्विषयकत्वेनैव प्रमात्वादित्यर्थः

न्यायरत्नावली।

व्यवहारकाले चाबाधितं तद्विषयकाज्ञानत्वस्यैव प्रमात्वरूपत्वात्, स्मृतौ तदभावात्, समानविषयकनिश्चयरूपस्य तत्करणस्याधिकरणक्षणे तद्व्यापाररूपसंस्कारस्य उत्पत्त्यव्यवहितपूर्वक्षणे वा तद्विषयस्याज्ञातत्वासम्भवात्। अथ ज्ञानान्तरेण योऽर्थो यस्मिन् क्षणे गृहीतः, तदव्यवहितोत्तरक्षणोत्पन्नस्य तदर्थज्ञानस्य तदर्थव्यवस्थापकत्वं न स्यात्। तदर्थविपरीतबुद्ध्यनुत्पादप्रयोजकत्वरूपस्य तदर्थव्यवस्थापकत्वस्य तदर्थविपरीतबुद्ध्युत्पादकाज्ञाननिवर्तकज्ञानेष्वेव सत्त्वात्, ज्ञानान्तरगृहीते चाज्ञानाभावेन तद्विषयकोक्तज्ञानस्याज्ञानानिवर्तकत्वात्। तथा चोक्तज्ञानस्य प्रमात्ववारणाय स्वोत्पत्त्यव्यवहितपूर्वक्षणे यदज्ञातं तद्घटितमेव प्रमात्वम्, न तु स्वकरणादिघटितमिति चेन्न। स्मृतौ प्रमात्वस्यावश्यवारणीयत्वेन स्वकरणादिघटितत्वस्यापि आवश्यकत्वात्। स्मृतिर्हि सर्वाऽप्यविद्यावृत्तित्वेन भ्रम इति वेदान्तसिद्धान्तः। ननु कथमेतदुपपद्यते?, उच्यते। 'गृहीतग्रहणस्वभावा स्मृतिरि'त्यध्यासलक्षणे वाचस्पत्युक्तेः स्मृतिमात्रस्य ज्ञातत्वविशिष्टविषयकत्वात् ज्ञातत्वस्य प्रकृते पूर्वगृहीतप्रमाविषयत्वभ्रमविषयत्वान्यतररूपस्य स्वविषयस्मृत्या ग्रहणात्, भ्रमविषयत्वेन मिथ्यात्वपर्यवसितेन स्वविषयग्राहिण्याः स्मृतेर्भ्रमत्वावश्यकत्वात्। न च प्रमाविषयत्वेन स्वविषयग्राहिण्याः स्मृतेर्भ्रमत्वे मानाभावेन न स्मृतिसामान्यस्य भ्रमत्वं युक्तम्, युक्तत्वेऽनुमित्यादावपि क्वचित् भ्रमविषयत्वेन स्वविषयग्राहकत्वसम्भवेनानुमित्यादिसामान्यस्य भ्रमत्वं स्यादिति वाच्यम्। अनुमित्यादिसामान्यस्य भ्रमत्वे लाघवात् परामर्शादेरेव तत्र दोषविधया हेतुत्वापत्त्या दोषजन्यत्वनिश्चयेन न तत्प्रामाण्यं साक्षिणा लिङ्गादिना वा गृह्यते, न हि दोषजन्यत्वेन निश्चिते भ्रमादौ तद्ग्रह इति वक्ष्यते। तथा च प्रवृत्त्यादेस्ततो जायमानस्यापलापापत्तिः। स्मृ-

न्यायरत्नावली ।

तिसामान्यस्य भ्रमत्वे तु संस्कारत्वेन स्मृतिरूपभ्रमहेतुत्वसिद्ध्या संस्काररूपदोषजन्यत्वस्य निश्चयेऽपि प्रमितविषयकत्वेन लिङ्गेन प्रमात्वानुमानसम्भवः । न च दोषजन्यस्य प्रमात्वतद्विषयत्वे च प्रमितत्वं न सम्भवतीति वाच्यम् । अविद्यावृत्तित्वेन दोषजन्यत्वेऽपि तद्विषये मिथ्यात्वानिश्चयेन वक्ष्यमाणस्य प्रवृत्त्युपयुक्तत्वस्य दोषजन्याविद्यावृत्तौ बाधानवतारदशायां सम्भवात् । न च प्रवृत्त्युपधायकानुमित्यादौ प्रमितविषयकत्वं नियमेन गृह्यते, स्मृतौ तु साक्षिणैव तद्गृह्यते । स्मृतिजनकज्ञानं हि पूर्वं प्रमात्वेन साक्षिणा भ्रमत्वेन लिङ्गादिना च गृह्यते। तथा च तद्विषयत्वस्य प्रमितत्वेन मिथ्यात्वेन वा निश्चितत्वात् स्मृतेरपि तादृशविशिष्टविषयकत्वात् तद्ग्राहकेण तथैव तद्ग्रहणम् । ज्ञानस्यावश्यवेद्यत्वमते स्मृतेर्गृहीतग्रहणं सुतरामुपपद्यते । तस्मात् स्मृतिसामान्यस्य गृहीतग्रहणस्वभावत्वेन उक्तरीत्या भ्रमत्वजातिविशिष्टरूपाविद्यावृत्तित्वात् मनोवृत्तिमात्रनिष्ठस्य प्रमात्वस्य न तत्र सम्भवः । ननूक्तरूपं प्रमात्वं न युक्तम् दोषाभावे। सति ज्ञानग्राहकमात्रग्राह्यत्वरूपस्य ज्ञप्तौ स्वतस्त्वस्य तत्राभावात् । न हि उक्तक्षणस्याबाधितत्वस्य च ज्ञानग्राहकसाक्षिणा प्रमाणनिरपेक्षेण ग्रहणसम्भव इति चेन्न । इदं हि प्रमात्वं न स्वतो ग्राह्यम्, किन्तु सर्वप्रमानुगतत्वात् अप्रमाव्यावृत्तत्वाच्च प्रमाणलक्षणम् । यत्तु प्रमात्वं प्रवृत्तिप्रयोजकं बाधानवतारकालीनभ्रमे स्मृतौ चानुवर्तते तत् स्वतोग्राह्यम् । आवश्यकं च तस्य स्वतोग्राह्यत्वम्, तद्वत्तया गृहीतस्य स्वोत्पत्तिद्वितीयक्षण एव प्रवृत्त्युपधायकत्वात् । तच्च मिथ्यात्वरूपेण यदज्ञातं तद्विषयकत्वम्, भ्रमस्यापि बाधाभावकाले मिथ्याविषयकत्वेनानिश्चयात्, मिथ्यात्वविशिष्टविषयकाज्ञानस्य साक्षिणा ग्रहणसम्भवाच्च भ्रमात् प्रवृत्त्युपपत्तिः । न च ज्ञानाज्ञानादेः स्वविशिष्टस्यावरणशून्यस्य साक्षिणा मानानपेक्षेण ग्रहणस-

न्यायरत्नावली ।

म्भवेऽपि मिथ्यात्वविशिष्टस्य कथं तद्ग्राह्यतेति वाच्यम् । 'ज्ञाततयाऽज्ञाततया वा सर्वं साक्षिभास्य'मिति विवरणकारोक्तेः स्वगृह्यमाणज्ञानाज्ञानयोर्विषये ग्राहकत्वस्य साक्षिणि सिद्धान्ते स्वीकारात् । न च घटादौ मिथ्यात्वग्रहे मिथ्यात्वेनाज्ञातत्वस्य गृहीतुमशक्यतया घटादिज्ञानात् प्रवृत्त्यनुपपत्तिरिति वाच्यम् । विशेषणतावच्छेदकप्रकारकनिश्चयादेर्विशिष्टवैशिष्ट्यविषयताशालिजन्यधीहेतुत्वस्वीकारेऽपि साक्षिणस्तादृशस्य नित्यत्वेन तत्र तस्याहेतुत्वात् । 'मिथ्यात्वविशिष्टावच्छिन्नविषयताकाऽज्ञानाश्रयावच्छेदकघटविषयकमिदं ज्ञानम्' इत्याकारकज्ञाने घटमिथ्यात्वस्याप्रकारत्वेन 'घटो मिथ्ये'ति ज्ञानस्य तत्रानुपयोगात् । 'इयं न शुक्ति'रिति ज्ञानकालेऽपि 'इमां शुक्तिं न जानामी'त्यस्यैव 'घटो न मिथ्ये'ति ज्ञानकालेऽपि 'घटं मिथ्याभूतं न जानामी'त्यस्य ज्ञानस्यानुभूयमानत्वाच्च । उक्तप्रमात्वस्येच्छादौ निश्चयेऽपि न ततः प्रवृत्त्यादिकम्, प्रमात्वेन निश्चीयमाननिश्चयत्वेनैव प्रवृत्त्यादिहेतुत्वात् । अत एव संशयादपि प्रवृत्तिस्स्यात् । 'अयं स्थाणुर्नवे'ति धीकालेऽपि 'मिथ्यात्वेनेदं न जानामी'त्यनुभवात् संशयस्यापि प्रमात्वेन निश्चयसम्भवादिति परास्तम् । ननु भ्रमस्मृत्योरपि प्रमात्वे प्रमापदमुख्यार्थत्वापत्तिरिति चेन्न । लक्षणात्मकपूर्वोक्तप्रमात्वविशिष्टस्यैव (१)प्रकृष्टज्ञानरूपस्य प्रमापदमुख्यार्थत्वात् सुखादिज्ञानस्य तदभावेऽपि न क्षतिः, प्रमाणाजन्यत्वात् । ज्ञानत्वं स्वसत्त्वापादकत्वरूपजातिविशेषाश्रयाज्ञानविषयत्वाभावप्रयोजकविशिष्टचित्त्वम् । तादृशप्रयोजकत्वं च घटादिज्ञानस्थले घटाद्याकारवृत्तिः, विद्यमानसुखादिज्ञानस्थले तु वृत्त्यस्वीकारपक्षे सुखादिजनकसामग्र्येव । सूक्ष्मा-

(१) प्रकृष्टज्ञानत्वप्रमारूपस्य प्रमेत्यादिपाठान्तरं घपुस्तके ।

न्यायरत्नावली ।

वस्थाभाविताद्दशायां सुखादौ तन्न जानामीत्यनुभवात् तदज्ञातं भ्रमविषयत्वादित्यनुमानाच्चाज्ञानसत्त्वात् तद्विषयत्वाभावस्य विद्यमानताद्दशायां तत्र सत्त्वात् तत्प्रयोजकेन चन्दनादिसंयोगेन विशिष्टायाश्चितस्तज्ज्ञानत्वसम्भवः । वस्तुतस्तु घटादिज्ञानस्थलेऽपि घटाद्याकारकवृत्त्युपधायकस्यैव अज्ञानविषयकत्वाभावप्रयोजकत्वम् , अन्यथोक्तवृत्तेः स्वोत्पत्तिकालीने अज्ञातत्वाभावे प्रयोजकत्वासम्भवात् उक्तवृत्त्युत्पत्तिकाले अज्ञातत्वस्य स्वीकारे ज्ञातत्वेन सह तस्य विरोधापत्तेः उक्तवृत्त्युत्पत्तिकाले उक्तज्ञानताद्विषयत्वाभावसत्त्वेऽपि उक्ताज्ञानकार्यसत्त्वं स्वीक्रियते । द्वितीयक्षण एव तदुच्छेदात् । ब्रह्माकारवृत्तिस्थले तथा दर्शनात् । प्रयोजकत्वं च अखण्डचिद्धर्मः । कार्योत्पत्त्यादिनिष्ठप्रयोज्यत्वादिवत् क्षेमसाधारणजनकत्वमेव वा । उक्तप्रयोजकवैशिष्ट्यं च उक्तप्रयोजकजन्यप्रतिविम्बितत्वं ग्राह्यम् , तेन वृत्तिसुखादिकाले तदुपधायकरूपप्रयोजकस्यासत्त्वेऽपि न क्षतिः । तादृशप्रयोजकजन्ये वृत्तिज्ञाने सुखादौ वा प्रतिबिम्बितत्वस्य तत्काले चिति सत्त्वात् । अविद्यादिज्ञानस्थले तु अविद्यादिकमेव तादृशप्रयोजकम् । तत्सत्त्वेऽग्रिमक्षणे अविद्यादिनिष्ठस्योक्ताभावस्य तदभावे तत्क्षणे तादृशाभावाभावस्य च सत्त्वात् । तज्जन्यत्वमपि क्षेमसाधारणम् , चित्प्रतिबिम्बो हि नाविद्यादावस्तीति तत्प्रतिबिम्बत्वं चितो बाध्यम् । तादृशप्रयोजकजन्योपहितचिदेव जानात्यर्थः । प्रयोजकत्वजन्यत्वयोः तदवच्छेदकभेदात् भिन्नत्वेऽपि जानातेर्नानार्थकत्वात् घटमित्यादिपदप्रयोगस्य वृत्तिसामग्र्यादिनिष्ठप्रयोजकत्वादिबोधे नियामकत्वाच्च न दोषः । वस्तुतस्तु तादृशाभावप्रयोजकविशिष्टचिदेव जानात्यर्थः । प्रयोजकत्वं च समानकालीनत्वे सति कारणत्वम् । तेन वृत्त्यभावकाले तादृशाभावस्वरूपयोग्यचैतन्यमादाय

न्यायरत्नावली।

घटादौ न ज्ञातत्वव्यवहारः। कारणत्वमधिष्ठानविधया जगदुपादानस्य चितोऽविद्याया वा ग्राह्यम्। तद्विशिष्टत्वं तत्तादात्म्यमेव। तच्च मनउपहितचित्यस्तीति तद्वत्त्वेन जीवो ज्ञाता। न च पुरुषान्तरीयज्ञानमादायातिप्रसङ्गः। स्वनिरूपिताज्ञानस्य निवेशात्। स्वं (१)विशिष्टान्तबोध्यं मनोवच्छिन्नचैतन्यम्। एवं च उक्तज्ञानवाचकजानातेः सकर्मकत्वमुपपद्यते। फलावच्छिन्नव्यापारबोधकस्य स्वबोध्यव्यापारव्यधिकरणफलबोधकस्य वा सकर्मकत्वादुक्ताभावरूपफलप्रयोजकविशिष्टचिद्वाचकस्य तदुपपत्तेः। यत्तु जानातेसकर्मकत्वं न युक्तम्, 'जानातेश्च सकर्मकत्वं फलापेक्षया न तु कर्मकारकापेक्षये'ति विवरणकारोक्तेरिति, तन्न। तदुक्तेरस्मदनुकूलत्वात्। तथा हि—भाविभूतस्य विषयस्य स्वरूपेण ज्ञानक्रियानिमित्तत्वरूपस्य कारकत्वस्याभावेपि ज्ञानक्रियाजनकसामग्र्युपहितसूक्ष्मावस्थारूपेण ज्ञानाक्रियानिमित्तत्वादसत्त्वापादकाज्ञानविषयत्वाभावरूपफलवत्त्वाच्च कर्मत्वमित्यभिप्रायकाविवरणोक्तिरस्मदर्थानुकूला। न च फलापेक्षयेत्यस्य वृत्तिगतं साक्षिचित्प्रतिबिम्बरूपफलमपेक्ष्येत्यर्थ इति वाच्यम्। तथासति वृत्तिं जानामीत्येव स्यात् न तु घटं जानामीति। अथ प्रतिबिम्बोपहितरूपेण वृत्तेरपि फलत्वाद्विषयतासम्बन्धेन तद्वतो घटादेः कर्मतासम्भव इति चेन्न। तथासति प्रत्यक्षधीस्थलेऽपि उक्तवृत्तेरेव फलत्वसम्भवेन आवरणभङ्गस्य तत्रैव फलत्वं न तु परोक्षधीस्थल इत्यत्र विनिगमकाभावात्। तस्मात् वृत्तेश्चिदुपरागार्थत्वपक्षे प्रतिबिम्बमेव फलम्। आवरणभङ्गार्थत्वपक्षे स्वज्ञानाविषयत्वमिति परोक्षापरोक्षसाधारणं वाच्यम्। तत्राद्यपक्षे घटादिज्ञानं घटाद्याकारवृत्तिप्रतिबिम्बिता चित्, सुखादिज्ञानं तु सुखादिप्रतिबिम्बिता चिदेव जानात्यर्थः।

(१) स्वं विशिष्टान्तं मनोवच्छिन्नं चैतन्यं बोध्यमिति घपुस्तके युक्तश्चेदम्।

न्यायरत्नावली ।

प्रतिबिम्बितत्वं (१)प्रतिबिम्बप्रयोजकप्रयोज्यप्रतिबिम्बविशिष्टत्वम् । तेन फलविशिष्टवाचकत्वेन जानातेस्सकर्मकत्वम् । तादृशप्रयोजकं च घटादिज्ञानस्थले वृत्तिसामग्री । सुखादिज्ञानस्थले तु सुखादिसामग्री । तादृशप्रयोज्यमपि वृत्तिसुखादिकम् । अविद्यादिज्ञानस्थले अविद्यादिनिष्ठप्रतिबिम्बस्यानादित्वेऽपि क्षेमसाधारणं तत्प्रयोजकत्वमविद्यादावस्त्येव । (२)*तादृशप्रतिबिम्बस्य स्वबिम्बत्वसम्बन्धेन स्वाश्रयोपहितत्वसम्बन्धेन वा वैशिष्ट्यं निवेश्यम् । वस्तुतस्तु(३) तत्प्रयोज्यमपि प्रतिबिम्बविशिष्टाविद्यात्मकं मनोवच्छिन्नचैतन्यं जानात्यर्थः । मनोवच्छिन्नचितो घटाद्याकारवृत्तिसुखाविद्यादौ प्रतिबिम्बसम्भवात्तदादाय यथाक्रमं घटादिज्ञानं निर्वाह्यम्, चैत्रीयघटाद्याकारवृत्तिनिष्ठप्रतिबिम्बप्रयोजकशुद्धचितमादाय मैत्रीयज्ञानस्य व्यवहारापत्तेः । उक्तवृत्तौ च चैत्रीयमनोवच्छिन्नचित एव प्रतिबिम्बोदयात् तस्याश्च चैत्रजीव एव सत्त्वान्नोक्तदोषः । न च चैत्रमनोवच्छिन्नचितः स्वकर्तृकालोकसंयोगाधीनमैत्रीयघटादिवृत्तिजननद्वारा तद्गतप्रतिबिम्बप्रयोजकत्वात् तादृशप्रतिबिम्बमादाय चैत्रज्ञानव्यवहारापत्तिः । विविधविधया प्रयोजकत्वस्योक्तत्वात् । 'सुखं जानाति घटं जानाती'त्यादौ स्वाश्रितत्वं स्वाकारवृत्तिनिष्ठत्वादिकं चेत्यन्यतमसम्बन्धेन जानात्यर्थैकदेशे प्रतिबिम्बरूपे सुखघटादेरन्वयः सुखत्वं जानामी'त्यादौ वृत्तेः प्रतिबिम्बस्यास्वीकारेऽपि स्वाश्रयसुखादिनिष्ठत्वादिसम्बन्धेन सुखत्वादेरन्वयः । घटं न जानामीत्यादौ च तादृशज्ञानाद्यभावबोधः । घटाद्यवच्छि-

(१) प्रतिबिम्बप्रयोज्यविशिष्टत्वमिति घपुस्तके ।

(२) तत्प्रयोज्यमपि प्रतिबिम्बविशिष्टाऽविद्यादिकम् तद्विशिष्टत्वं मनोवच्छिन्नचिति बोध्यम् इति पाठभेदो घपुस्तके ।

(३) वस्तुतस्तु प्रतिबिम्बप्रयोजकं मनोऽवच्छिन्नचैतन्यं जानात्यर्थ इति पाठान्तरं घपुस्तके ।

नां चाज्ञातज्ञापकत्वेनैव प्रामाण्यात् । अन्यथा स्मृतेरपि

न्यायरत्नावली ।

श्चिति भावरूपाज्ञानस्वीकारेण तद्बोधासम्भवात् मूलाज्ञानस्यैव परिणामः शुक्तिरूप्यादीति ब्रह्मज्ञानं विना न तस्य बाधः, किन्तु निवृत्तिमात्रम् । यदि तु 'घटं न जानामी'त्यादौ भावरूपाज्ञानं भातीत्याग्रहस्तदा वृत्तिविषयत्वाभावसमानाधिकरणमेव विषयत्वं तत्र द्वितीयार्थः । तथा च घटादिनिष्ठतादृशविषयताकस्य मूलाज्ञानस्यैव तत्र भानात् घटाद्याकारवृत्तिकाले न 'घटं न जानामी'ति धीः । सुखादौ वृत्तिस्वीकारे तु स्वाकारवृत्तिनिष्ठत्वसम्बन्धेनैव प्रतिबिम्बे सुखादेरन्वयः । साक्षात्कारस्तु विषयविशिष्टं यत्प्रतिबिम्बं तत्प्रयोजकप्रयोज्यविशिष्टचिदेव । (१)स्वावच्छिन्नवृत्तिनिष्ठत्वं स्वनिष्ठत्वं चेत्याद्यन्यतमसम्बन्धेन विषयविशिष्टत्वं बोध्यम् । वस्तुतस्तु वृत्त्युपरक्तघटादावेव प्रतिबिम्बोत्पत्तेः प्रतिकर्मव्यवस्थायां वाच्यत्वात् सुखत्वादावपि तस्यासम्भवाच्च विषयनिष्ठप्रतिबिम्बमेव निवेश्यम् । सैव चित् साक्षात्करोत्यर्थः । न च जानात्यर्थ एव साक्षात्करोत्यर्थोऽस्तु (२)किमुक्तान्यतमसम्बन्धेन, घटादेः प्रतिबिम्बे अन्वयात् परोक्षधीस्थले 'घटं साक्षात्करोमी'ति न व्यवहार इति वाच्यम् । 'जानामि साक्षात्करोमि' इत्येतयोर्भिन्नार्थत्वानुभवात् । 'घटं साक्षात्करोमी'त्यादौ तदेकदेशे विषये तादात्म्येन घटादेरन्वयः ।

नारायणी ।

एतदनङ्गीकारेऽनिष्टमाह—अन्यथेति । अनधिगन्तृत्वं विनापि प्रामाण्याङ्गीकारे इत्यर्थः । तदापत्तिः—प्रामाण्यापत्तिः । तद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वस्य तव मते स्मृतावपि सत्त्वात् । न चानुभवत्वविशेषणेन तन्मते स्मृतेः प्रमात्ववारणमिति वाच्यम् । याथार्थ्याविशेषणेऽप्यनुभवत्वविशेषणेन तद्वारणस्य निर्बीजत्वात् । गृहीतग्राहित्वरूपापराध एव तद्वारणे बीजमिति चेत् तर्हि 'तद्धेतोरेवास्त्वि'ति न्यायेनागृहीतग्राहित्वमेव प्रमालक्षणमुचितमिति

(१) स्वावच्छिन्नवृत्तिनिष्ठत्वस्वनिष्ठचैतन्याद्यन्यतमसम्बन्धेनेति गपुस्तके ।
(२) किमितिपदं नास्ति खपुस्तके ।

न्यायरत्नावली ।

'घटं न साक्षात्करोमी'त्यादौ तादृशसाक्षात्काराभावबोधः, पूर्वस्य वृत्तेरावरणभङ्गार्थत्वरूपे द्वितीयपक्षे अज्ञानाविषयत्वप्रयोजकविशिष्टचिदेव साक्षात्करोत्यर्थः। तस्मात् यथोक्तज्ञानत्वघटितप्रमात्वं नानुपपन्नम्। भ्रमवारणाय व्यवहारकालाबाधितत्वं विशेषणम्।(१)तत्प्रमात्वनिरूपितमूलाज्ञानकालावच्छिन्नं मिथ्यात्वनिश्चयाविषयत्वम्। घटादौ चोक्तकाले मिथ्यात्वानिश्चयात् तज्ज्ञाने प्रमात्वमक्षतम्। विषयभेदेनेव प्रमातृभेदेनापि प्रमात्वभेदेऽपि न क्षतिः। न च भ्रमविषयस्य प्रातिभासिकत्वेन अज्ञातत्वाभावादेव न भ्रमे अतिव्याप्तिरिति वाच्यम्। तस्य विद्यमानकालेऽज्ञातत्वाऽभावेऽपि भावित्वकाले अज्ञातत्वासम्भवात् शङ्खे कदाप्यनुत्पन्नपीतत्वभ्रमस्य पुंसः'मम भावी यः शङ्खे पीतत्वभ्रमस्तद्विषयं पीतत्वं न जानामी'ति प्रत्ययात् एतत् हरिद्रापीतत्वजातीयं स्वर्णपीतत्वजातीयं वेति संशयाच्च। तस्मात् स्वोत्पत्त्यव्यवहितपूर्वक्षणे स्वकरणक्षणे च यदज्ञातमुक्तकालावच्छेदेन अबाधितं च तद्विषयकज्ञानत्वं प्रमात्वमिति सिद्धम्। किञ्च स्मृतौ प्रमात्वमुक्तरीत्या प्रमितविषयकत्वरूपलिङ्गेनैवानुमीयते इत्यनुभवानुरोधेन संस्कारजन्यत्वस्य प्रमात्वनिष्ठसाक्षिग्राह्यताविरोधिदोषताकल्पनात् स्वतःप्रमात्वग्रहणरूपां प्रमासामान्यमर्यादामतिक्रान्तस्य स्मृतिसामान्यस्य प्रमालक्षणसङ्ग्रहो न युक्त इत्यतोऽपि तद्व्यावृत्तं प्रमालक्षणम्। ननूक्तलिङ्गेनैव स्मृतौ प्रमात्वमनुमीयते न तु साक्षिणा गृह्यते इति कथं निर्णीतम्? उच्यते। स्मृत्या नाव्यवहितोत्तरक्षणे प्रवृत्तिनियमः किन्तु द्वितीयक्षणे तत्प्रमात्वेऽनुमिते सत्येव प्रवृत्तिः। तत्समानविषयत्वेनानुमीयमानप्रमा(२)त्वकात् स्मृत्यन्तराद्वा सेति सर्वानुभाविकम्। अत एव या स्मृतिः स्वसमानविषयकभ्रममूलकत्वेन गृह्यते, तस्याः भ्रमत्वेनैव

(१) तच्च तत्प्रमातृनिरूपितेत्यादिः घपुस्तके। (२) प्रमातृकादिति गपुस्तके।

तदापत्तिरिति । एवं वेदान्तेषु सर्वत्रैवंविधविरोधे अयमेव परिहारः । तदाहुर्वार्तिककारपादाः—

न्यायरत्नावली ।

निश्चयात् न ततः प्रवृत्तिः । तथा च संस्कारजन्यत्वरूपदोषसहितत्वेन स्मृतिगतप्रमात्वस्याऽऽवृतत्वस्वीकारेणानावृतसाक्षितादात्म्यरूपस्य साक्षिभास्यत्वस्य तत्राभावात् न स्मृत्युत्पत्तिद्वितीयक्षणादौ प्रवृत्तिः । उक्तलिङ्गकानुमितौ तादृशावृतत्वाविरोधिन्यां सत्यां तत्क्षणे तादृशसाक्षिभास्यत्वविशिष्टप्रमा(१)त्मकया स्मृत्या स्वोत्पत्तितृतीयक्षणे स्मृत्यन्तरोत्पत्तिद्वितीयक्षणे वा प्रवृत्तिरुत्पद्यते । ननु जीवेश्वरादिबोधकवाक्ये पौरुषनानाविधकल्पनानुवादकत्वमास्ताम् 'यस्मिन् पञ्च पञ्चजना' इत्यादिब्रह्मबोधकवाक्ये भाष्यकारैव शारीरकभाष्ये प्राणचक्षुश्श्रोत्रान्नमनोरूपपञ्चकम्, उपनिषद्भाष्ये तु ब्राह्मणक्षत्रियवैश्यशूद्रनिषादरूपजातिपञ्चकं पञ्चजनशब्दार्थत्वेनोक्तम्, तत्त्वमस्यादिवाक्येऽपि जहदजहल्लक्षणादिकं मतभेदेनोक्तम्, तत्कथम् ? तत्राह—एवं वेदान्तेष्विति । एवंविधविरोधे—परमतात्पर्यविषयीभूतब्रह्मप्रतिपादनार्थमुच्यमानां शे विरोधे । अस्माभिर्मादृशैराचार्यैः । जीवेशादिव्यवस्थामुक्ता-

नारायणी ।

भावः । प्रासङ्गिकं परिसमाप्य प्रकृतमाह–वेदान्तेषु । 'जीवेशावाभासेन करोति' रूपं रूपं प्रतिरूपो बभूव, ज्ञाज्ञौ द्वावजावीशानीशौ, अजो ह्येको जुषमाणोऽनुशेते' इत्यादिश्रुतिषु सर्वत्र तत्तद्वादाभिप्रायपरासु अनन्तशाखास्थासु, एवंविधविरोधे—परस्परविरोधेनाप्रामाण्यलक्षणादिविरोधे, अयमेव—अबाधिताज्ञातफलवदर्थ एव प्रामाण्यं नान्यत्रेति । एतादृशपरिहारे वार्तिकाचार्यसम्मतिमाह—तदाहुरिति । यया यया—प्रक्रियया आभासप्रतिबिम्बावच्छेददृष्टिसृष्टिवादान्यतमरूपया, पुंसां—जीवानां, प्रत्यगात्मनि-प्रति जड़ादि प्रातिकूल्येनाञ्चति प्रकाशत इति प्रत्यगात्मा जीवेशजगद्व्यावृत्तोऽखण्डैकरसरूपस्तस्मिन् । व्युत्पत्तिः–दृढबुद्धिः, प्रक्रिया—प्रक्रियते व्युत्पाद्यतेऽनयेत्यभेदसाधनसम्पत् जीवेशविभागादिव्यवस्था,

(१) प्रमातृकयेति गपुस्तके ।

यथा यथा भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थिता॥

इति। श्रुतितात्पर्यविषयीभूतार्थविरुद्धं च हेयमेवेति शतश उद्घोषितमस्माभिः। तस्मान्न किञ्चिदेतत्। तदेवं जीवस्योपाधिनाभिभूतत्वात्संसारोपलब्धिः। परमेश्वरस्य तूपाधिवशित्वात् सर्वज्ञत्वादिकमिति सम्यगुपप-

न्यायरत्नावली।

मुपसंहरति—तदेवमिति। उपाधिनाभिभूतत्वात्—यं प्रसन्नाना-द्युपाधिनिमित्तप्रयुक्तं स्वरूपावरणं तत्त्वात्। संसारोपलब्धिः-स-सत्त्वेन प्रपञ्चोपलब्धिः। उपाधिवशित्वात्—श्रुत्यादिसिद्धेनो-क्ताभिभूतत्वाभावेन विशिष्टत्वात्। सर्वज्ञत्वादिकमित्यादिपदेन मि-थ्यात्वेन प्रपञ्चोपलम्भादिग्रहणम्। ननु न प्रतिबिम्बस्य जीवत्वं युक्तम्' सन्निहितस्यैव चैतन्यस्य उपाधौ प्रतिबिम्बितत्वेन सन्निहित-रूपबिम्बभेदेन प्रतिबिम्बभेदापत्त्या इहलोकगतजीवात् कर्तुः परलो-कगतजीवस्य भोक्तुर्भेदेन कृतहान्यकृताभ्यागमयोरापत्तेः।(१)+ना-

नारायणी।

साध्वी—तदंशे सोपपत्तिकदृष्टिपुरुषं प्रति प्रामाणिकी,(२)सा च प्रक्रिया अनवस्थिता—अप्रतिष्ठिता। स्वांशे प्रामाण्यरहितेति यावत्। साक्षात्फलत्वाज्ञातत्वादेरभावादिति भावः। नन्वनूद्यत्वेऽपि यदि जीवेशविभाग-कल्पनाऽवान्तरतात्पर्यमादाय साध्वी तदा 'द्वा सुपर्णे'ति मन्त्रोक्तभेदांशोपि साधुः स्यात्तत्राह-श्रुतीति। श्रुतीनां तात्पर्यस्याद्वैत एव प्रदर्शनात्तद्विरुद्धभेदांशो न साधुरिति भावः। शतशः-अद्वैतसिद्धिवेदान्तकल्पलतिकाऽद्वैतरत्नादौ। तस्मात्-अद्वितीयात्मन्येव सकलप्रमाणसमन्वयसमर्थनात्, एतत्-भेदांशादेः प्रामाणिकत्वाप्रमाणिकत्वकथा, नकिञ्चित-न किमपि वृथेति यावत्। जीवेशादिव्यवस्थामुपसंहरति—तदेवमिति। अभिभूतत्वात्-अनाद्यज्ञानेनावृतत्वात्।संसारोपलब्धिः—सत्यत्वेन प्रपञ्चोपलम्भः। उपाधिवशित्वात्-वशीकृतमायत्वात्। सर्वज्ञत्वादिकमित्यादिना

(१) +···+ एतच्चिह्नान्तर्गतः पाठो नास्ति घपुस्तके।

(२) तर्हि शास्त्रतात्पर्यविषयत्वमागतमेवेत्यत आह सा चानवस्थितेति पाठः खपुस्तके।

द्यते व्यवस्था। ननु अवत्वविद्यावशाज्जीवेश्वरविभा-
गव्यवस्था। मानमेयादिप्रतिकर्मव्यवस्था तु कथमि-

न्यायरत्नावली।

नाप्यवच्छिन्नस्य तद्युक्तम्। उपाध्यधिकरण+गृहादिप्रवेशभेदेनाव-
च्छिन्नानाम् आकाशादीनामिव इहलोकपरलोकगतमनोवच्छिन्न-
चितामपि भेदेनोक्तदोषापत्तेरिति चेन्न। 'रूपं रूपं प्रतिरूपः, स एष
इह प्रविष्ट' इत्यादिश्रुतिषु ब्रह्मचित एव प्रतिबिम्बभावोक्त्या उपा-
धिसन्निहितभागस्य बिम्बत्वे मानाभावात्। यथा च उपाधेर्म-
नआदेस्तत्तद्देशसम्बन्धरूपावस्थाभेदेऽपि स्वरूपैक्यम्, 'तद्धेदं
तर्ह्यव्याकृत'मित्यादिश्रुतेः, 'तदापीतेः संसारव्यपदेशादि'ति न्या-
याच्च, तथा तदवच्छिन्नचितां तदवस्थाभेदेन भेदेऽपि तदवच्छि-
न्नचिद्रूपैक्यम्। अत एव एककनकपरिणामानां क्रमोत्पन्नानां
कटककुण्डलादीनां कटकादीनां कटकत्वरूपैर्भेदेऽपि तत्कनकरू-
पेणैक्यम्। किञ्च गृहप्राङ्गणादिभेदेऽपि एकघटावच्छिन्नमाकाशमे-
कमेव, देशभेदेन तस्य नाशकोत्पादककल्पने गौरवात्। उपाध्युत्पा-
दकनाशकयोरेवोपहितोत्पादकनाशकत्वकल्पनात्। भेदप्रतीतेरुपा-
ध्याश्रयोपाधिभेदप्रयुक्तत्वात्। अन्यथा घटादिव्यक्तिभेदेन घट-
त्वादेरपि स्वाभाविकभेदापत्तेः। तस्मात् मतिमान्द्यादेवेदं दूषणो-
द्भावकत्वम्। मेयादीति। मेयादिघटितेत्यर्थः। प्रतिकर्मेत्यादि।
कदाचिदेव केनचिदेव किञ्चिदेव प्रमीयत इति कालविशे-

नारायणी।

सर्वान्तर्यामित्वपरिग्रहः। सम्यगुपपद्यते साहङ्कारनिरहङ्कारत्वाभ्यामिति
भावः। प्रतिकर्मव्यवस्थामुपपादयिष्यन्नाशङ्कते—नन्विति। मानमेयादी-
त्यादिना मातृमितिफलानां परिग्रहः। (१ *प्रतिकर्म ज्ञानविषयः व्यव-
स्था* कदाचिदेव कचिदेव केनचिदेव ग्रहणमिति कालदेशसहकारिविशे-
षादिना विषयविशेषार्थग्राहिता। दृष्टिसृष्टिपक्षे प्रतिकर्मव्यवस्थाया

(१) अत्रायं पाठभेदः खपुस्तके—* प्रतिकर्मव्यवस्थेति। कर्म ज्ञानविषयः। कर्म
कर्म प्रति वर्तते इति प्रतिकर्म ज्ञानादिसाधनं तस्य व्यवस्था *कदाचिदेवेत्यादिः समोग्रे।

ति चेत्, उच्यते। दृश्यत्वाज्जडत्वाद्विनाशित्वाच्च परिच्छिन्ना(१)प्यविद्या अनिर्वचनीयत्वेन विचारासहा आवरणविक्षेपशक्तिद्वयवती सर्वगतं चिदात्मानमावृणोति अङ्गुलिरिव नयनसन्निहिता सूर्यमण्डलम्। तत्र चक्षुष एवावरणे अङ्गुलेरप्यभानप्रसङ्गात् अधिष्ठानाव-

न्यायरत्नावली।

पादिप्रतिनियतस्य ज्ञानकर्मणो व्यवस्था नियामकोक्तिरित्यर्थः। परिच्छिन्ना-असर्वगता। जीवेशभेदाद्यनादिपदार्थेषु चित्तादात्म्यवत्स्वपि तादात्म्येन असम्बन्धेति यावत्। आवरणेत्यादि। आवरणं नास्ति न भातीति व्यवहारः। विक्षेपश्चाकाशादिकार्यं तयोरनुकूलशक्तिद्वयवतीत्यर्थः। तथा च असर्वगतस्यापि सर्वगतावरणोत्पादकत्वं तदनुकूलशक्तिमत्त्वादिति भावः। नन्वावारकस्यावरणीयापेक्षया परिच्छिन्नत्वेऽङ्गुलिर्न दृष्टान्तः, तदावरणीयस्य चक्षुर्निर्गमद्वारस्य तदपेक्षया परिच्छिन्नत्वात् तत्राह-चक्षुष इति। चक्षुर्निर्गमद्वारस्येत्यर्थः। अभानेति। गोलकादनिर्गतस्य चक्षुषो न ग्राहकत्वं ग्राह्यासम्बद्धादिति भावः। सर्वगतमावृणोतीत्य-

नारायणी।

अनपेक्षायामपि सृष्टिदृष्टिपक्षानुसारेण सिद्धान्तयितुमुपक्रमते—उच्यत इति। परिच्छिन्ना-सर्वदेशकालवृत्त्यत्यन्ताभावप्रतियोगिनी, असर्वगता-स्वकल्पितैकदेशे विद्यमाना, अविद्या-अघटितघटनापटीयसी, अनिर्वचनीयत्वेन-सदसद्भिन्नत्वेन, विचारासहा-धर्मिभिन्नत्वाभिन्नत्वाभ्यां निरूपणानर्हा। आवरणं-सतो नास्तीति धीः अस्तीति व्यवहारप्रतिबन्धकत्वादिः, विक्षेपः-आकाशादिप्रपञ्चः, तदनुकूलशक्तिद्वयवती। तथा चासर्वगताया अपि सर्वगतावरकत्वं तदनुकूलशक्तिमत्त्वादिति भावः। परिच्छिन्नस्य स्वापेक्षयाऽतिव्यापकावरकत्वे दृष्टान्तमाह—अङ्गुलिरिवेति। न स्वापेक्षयाऽङ्गुलिर्व्यापकमावृणोति किन्तु स्वापेक्षया परिच्छिन्नमेव तथा चासिद्धो दृष्टान्त इत्याशङ्कां परिहरति-तत्रेति। तत्र दृष्टान्ते, चक्षुषः-चक्षुरिन्द्रियस्य, आवरणे-निर्गमप्रतिबन्धे। अभानेति। गोलकादनिर्गतस्य

(१) असर्वगतेत्यधिकं कखपुस्तकयोः नारायण्यां च।

रणमन्तरेण विक्षेपानुपपत्तेश्च। ततः(१) सा पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती निखिलजगदाकारेण परिणमते। सा च स्वगतचिदाभासद्वारा चित्तादात्म्यापन्नेति तत्कार्यमपि सर्वमाभासद्वारा चिदनुस्यूतमेव। तथा च चैतन्यस्य दीपवत्स्वसम्बद्धसर्वभासकत्वात्

न्यायरत्नावली।

त्र हेत्वन्तरमाह---अधिष्ठानेति। अनुपपत्तेः-अनुपलब्धेः। संस्कारेति। सकलकार्यसूक्ष्मावस्थेत्यर्थः। प्रयुक्ता—सहकृता। चिदाभासद्वारा चित्तादात्म्येति। चित्तादात्म्यवत् आभासतादात्म्यवतीत्यर्थः। वार्तिकमते पक्षद्वयम्। तत्र चिदाभासस्यैव जगदधिष्ठानत्वपक्षे (२)*तस्यैव साक्षित्वेनाविद्यादिभासकत्वम्। तच्च चिदाभासस्य मिथ्यात्वेऽपि चित्तादात्म्यादुपपद्यते। आभासाविविक्तचित एव जगदधिष्ठानत्वपक्षे* तस्या एव सर्वभासकत्वेन अविद्यातादात्म्यस्य वाच्यत्वात्। चिदाभासद्वारेत्यादेः चिदाभासतादात्म्यवत्त्वात् चित्तादात्म्यवतीत्यर्थः। तत्कार्यं—कार्यरूपापन्ना सा। सर्वभासकत्वात्—सर्व-

नारायणी।

चक्षुषो न ग्राहकत्वं ग्राह्यासम्बन्धादिति भावः। सर्वगतमावृणोतीत्यत्र हेतुमाह—अधिष्ठानेति। शुक्त्यंशस्येव परिपूर्णानन्दरूपाश्रयविशेषस्याभानं विना कार्यासम्भवादित्यर्थः। अधिष्ठानभाने भ्रमानुत्पत्तेरिति भावः। सृष्टौ क्रमवैचित्र्यं ज्ञापयिष्यन् विशेषसामग्रीसहकृताविद्यातो जगदुत्पत्तिमाह—ततश्चेति। सर्वगतावरणाच्चेत्यर्थः। संस्कारेति। कार्यसूक्ष्मावस्थेत्यर्थः। अनेन वैचित्र्योपपत्तिः सूचिता। जीवकर्मेति। जीवादृष्टेत्यर्थः। अनेन पौर्वापर्यक्रमस्योपपत्तिःसूचिता। प्रयुक्ता-सहकृता। सृष्टिकथनस्य प्रयोजनमाह—सा चेत्यादि। सा च अविद्या चिदाभासद्वारा चित्तादात्म्यापन्ना-चिदाभासतादात्म्यवत्त्वादाभासतादात्म्यापन्नचित्तादात्म्यवतीत्यर्थः। चिदनुस्यूतं-भासकचित्सम्बद्धम्। सर्वावभासकत्वात्-अस्ति-

(१) ततश्च सेति कखपुस्तकयोः नारायण्यां च।
(२) *....*चिह्नितः पाठः प्रमादभ्रष्टो गपुस्तके।

जगदुपादानचैतन्यं प्रमाणापेक्षामन्तरेणैव सर्वदा सर्वं भासयत् सर्वज्ञं भवति। तेन तत्र न मानमेयादिव्यवस्था किन्तु जीवे। तस्य बुद्ध्यवच्छिन्नत्वेन परिच्छिन्नत्वाद्। तेन चिदभिव्यक्तियोग्येन (१)येनान्तः

न्यायरत्नावली।

स्मिन्नस्ति भातीति प्रयोजकत्वात्। भासयदुक्तव्यवहारविषययोग्यं कुर्वत्। तथा च जीवस्य सुखादाविव ईश्वरस्य दृश्यमात्रे आभासरूपप्रतिबिम्बद्वारा साक्षात्कारः। अनादिष्वपि दृश्येषु सर्वेष्वाभासस्वीकारात्। विवरणकारमते तु विद्यमानेषु प्रत्यक्षरूपा, भाविषु अनुमितिरूपा, अतीतेषु स्मृतिरूपा मायावृत्तिः स्वीक्रियत इति ताभिरेव ईश्वरस्य सर्वज्ञत्वं सदेति तत्रोक्तम्। वाचस्पतिमते तु प्रतिबिम्बमायावृत्त्योरीश्वरस्यास्वीकारेऽपि वक्ष्यमाणवृत्तेरभेदाभिव्यक्त्यर्थपक्षमनुसृत्य तदनुसारिसर्वज्ञत्वं सर्वदृश्यचिदभिन्नचिद्रूपत्वं बोध्यम्। सुखादौ जीवस्येव, सर्वदृश्येषु ईशस्या-

नारायणी।

भातीति सर्वव्यवहारजनकत्वात्। भासयन्निरुक्तरूपेण प्रकाशयत्। सर्वज्ञं-सर्वविषयकेक्षणरूपमायावृत्तिमत्। तेन-चिदाभासद्वारासर्वसम्बन्धस्य प्रमाणद्वारकसम्बन्धापेक्षाया अभावेन, तत्र-ईशचैतन्ये, (२)(न मानमेयादिव्यवस्था)-न मानमेयादिकृतप्रतिकर्मव्यवस्था। ननु जीवेऽपि कथं व्यवस्था? तस्यानावृतचितोऽभेदात्तत्राह—तस्येति। जीवस्येत्यर्थः। बुद्ध्यवच्छिन्नत्वेन-अन्तःकरणावच्छिन्नत्वेन, परिच्छिन्नत्वात्-सर्वासम्बद्धत्वात्। (३)* तथाच ग्राहकचिदभेदेऽपि ग्राहकतदीयोपरागाभावान्नास्य सर्वावभासोऽतो मानमेयाव्यपेक्षेत्यादौ* सामान्यतः प्रतिकर्मव्यवस्थां दर्शयति-तेनेति। तेन-जीवस्योपाधिकृताऽसर्वसम्बन्धेन, चिदभिव्यक्तिः-चित्प्रतिबिम्बसम्बन्धः, सत्त्वप्राधान्याच्चिदुपाधिता वा। येन येन-चक्षुरा-

(१) येन येनेति कखपुस्तयोः नारायण्यां च।

(२) अन्यचिह्नरहित एतच्चिह्न( )द्वयमध्यगतः पाठः केषुचित्पुस्तकेष्वनुपलब्धोपि आवश्यकत्वात् वर्धितोऽस्माभिरिति बोध्यम्। एवमग्रेपि।

(३) *...* चिन्हान्तर्गतः पाठो नास्ति खपुस्तके।

करणेन यदा यत्सम्बद्धं भवति, तदेव तदा तदव-च्छिन्नो जीवोऽनुभवतीति न साङ्कर्यप्रसङ्गः। एवमत्र प्रक्रिया। शरीरमध्ये स्थितः सर्वशरीरव्यापकः सत्त्वप्रा-

न्यायरत्नावली।

ज्ञानाविषयत्वघटितं वा तद्वाच्यम्(१)।+तत्पक्षे तस्यैव साक्षित्वेन अविद्यादिभासकत्वम्। तच्च चिदाभासस्य मिथ्यात्वेऽपि चित्ता-दात्म्यादुपपद्यते। आभासाविविक्तचित एव जगदधिष्ठानत्वपक्षे तस्या एव सर्वभासकत्वेन अविद्यादितादात्म्यस्य वाच्यत्वात् चि-दाभासद्वारेत्यादेरिति भावः+। ननु चिदभिव्यक्तियोग्यत्वादिकं कीदृशम्? तत्राह—एवमित्यादि। (२)शरीरमध्यस्थसुखादि-रूपेण परिणममानत्वात् शरीरमध्यस्थः युगपद्धस्तपादाद्यवच्छिन्न-सुखदुःखादिरूपेण परिणममानत्वात् शरीरावयवेषु सर्वेषु व्या-पकः। सात्त्विकज्ञानसुखादिपरिणामवत्त्वादाह—सत्त्वप्राधान्ये-

नारायणी।

त्रीयेण, यदा—तत्तदाकारसाक्षात्कारादिवृत्तिजनकासाधारणप्रमाणसम-वधानदशायाम्, यत्—किञ्चिदविद्यातत्कार्यजातम्, सम्बद्धम्—अन्वि-तम्, तदेव—तत्प्रमाणव्यापारेणान्तःकरणान्वितं वस्तु, तदा—तत्तत्प्रमाण-वृत्तिदशायाम्, तदवच्छिन्नो जीवः—अन्तःकरणावच्छिन्नः प्रमाता, न साङ्कर्यप्रसङ्गः—न युगपत्सर्वार्थग्राहकत्वप्रसङ्गः। न वा पश्यामि, जिघ्रामि, स्पृशामि, स्वादयामि, शृणोमि, जानामि, अनुमिनोमि, उपमिनोमि, शाब्दयामि, इत्यादिप्रतीतिसिद्धचाक्षुषत्वादिविजातीयधर्मानवच्छिन्नतया ई-श्वरस्येव ग्रहप्रसङ्गः। प्रतिकर्मव्यवस्थायाः परिच्छिन्नत्वेनापेक्षोक्तेरिति भावः। विशदयितुमाह—एवमिति। शरीरमध्यस्थः—सुखादिरूपेण परिणम-मानत्वात् शरीरमध्ये स्थितः। सर्वशरीरव्यापकः—सर्वशरीरावयवेषु व्या-पकः। युगपद्धस्तपादाद्यवच्छिन्नसुखदुःखादिरूपेण परिणममानत्वात्। ज्ञानाकारवृत्तेरेवाधिकपरिणामदर्शनदाह—सत्त्वेति। अनेन रजस्तमोन्वयो-

(१) वाच्यमिति भावः। ननुचिदभिव्यक्तीत्यादिः घपुस्तके पाठः। अर्थात् +…+ चिह्नद्वयमध्यस्थः पाठो नास्तीति।

(२) शरीरमध्यस्थः इति पाठो गपुस्तके।

घान्येन सूक्ष्मपञ्चभूतारब्धः अन्तःकरणाख्यः अविद्याविवर्तो दर्पणादिवदतिस्वच्छः नेत्रादिद्वारा निर्गत्य योग्यान् घटादीन् विषयान् व्याप्य तत्तदाकारो भवति

न्यायरत्नावली ।

नेति । उत्क्रमणसमये गतिविघाताभावादाह—सूक्ष्मेति । पञ्चभूतगुणानां ग्राहकत्वादाह—पञ्चभूतेति । आरब्धेति । परिणामेत्यर्थः । सत्त्वांशाधिक्ययुक्तापञ्चीकृतपञ्चमहाभूतपरिणाम इति समुदायार्थः । विवर्तः—परिणामः । भूतानां विशेषपरिणामित्वेऽपि सामान्यपरिणामिन्यविद्येत्यर्थः । अतिस्वच्छः—स्वसम्बधिनः प्रतिबिम्बोत्पत्तियोग्यः । नेत्रादीति । नेत्रादिद्वारा बहिरिन्द्रियेण संयुक्तो भूत्वा तेनैव रूपेण घटादिभिस्संयुक्तो भूत्वा घटादिविषयकचाक्षुषादिरूपेण परिणमत इत्यर्थः । मनस्संयुक्तेन्द्रियविषयसन्निकर्षस्य चाक्षुषादिहेतुत्वज्ञापनाय व्याप्य तत्तदाकारो भवतीत्युक्तम् । मनस इन्द्रियमिश्रितत्वेन मनोव्याप्तिकथनेनैव इन्द्रियव्याप्तिलाभात् । तावता च चाक्षुषादिमनोवृत्तेः घटादिस्वविषयसंयुक्तत्वमावश्यकम् । मनसश्चक्षुरादीन्द्रियसंयोगकाले चाक्षुषानुत्पत्तावपि चक्षुरादिमनोयोगचक्षुरादिविषयसंयोगयोः न पार्थक्ये कारणत्वं किन्तु शक्तिविशेषरूपेण एकमेव कारणत्वम् । मनोसंयुक्तचक्षुर्विषयसंयोगे तादृशशक्तिविशेषास्वीकारेणातिप्रसङ्गभङ्गादित्यपि ज्ञा-

नारायणी ।

ऽपि ज्ञापितः कामनिद्रादिवृत्तीनामुपलम्भात् । उत्क्रमणसमये गतिविघाताभावादाह—सूक्ष्मेति । पञ्चभूतानां गुणग्राहकत्वादाह—पञ्चेति । आरब्धः—परिणामः सत्त्वांशाधिक्ययुक्ताऽपञ्चीकृतपञ्चभूतपरिणाम इति समुदायार्थः । विवर्तः—परिणामः । भूतानां विशेषपरिणामित्वेऽपि सामान्यपरिणामिन्यविद्येत्यर्थः । अतिस्वच्छः—सान्निध्यमात्रेण प्रतिबिम्बग्रहसमर्थः, सत्त्वप्रधानत्वात्प्रमातृभावादियोग्यो वा । नेत्रादिद्वारा—नेत्रस्थानादिच्छिद्रमार्गेण, योग्यान्महत्त्वोद्भूतरूपवदालोकादिसंयोगविशिष्टान्, व्याप्य तत्तदाकारा भवति—पृथुबुध्नाद्याकारताशालिचाक्षुषादिवृत्तिरूपे

द्रुतताम्रादिवत् । तस्य च सौरालोकादिवद् झटित्येव

न्यायरत्नावली ।

पितम् । द्रुतताम्रादिवदिति । यथा द्रवीभूतताम्रादि मूषापात्रादौ क्षिप्तं पश्चाद्वाय्वाद्यपसारिततेजोभागं सत् कठिनीभवति, तथा मनो घटादिसन्निकृष्टेन्द्रियसंयुक्तं तदाकाराख्यविषयतासम्बन्धेन घटादिसम्बद्धं चाक्षुषादिरूपं भवतीत्यर्थः । ननु कथमतिशीघ्रमेव मनसस्सूर्यमण्डलादिसंयोगः तत्राह—तस्येति । ननु मनस इन्द्रियसंयुक्तत्वेऽपि घटादिसंयोगे मानाभावः, घटादिसंयुक्तभागावच्छेदेनैव इन्द्रिये तत्संयोगसम्भवात् । न च विषये मनस्संयोगं विना विषयचैतन्याभिन्नप्रमातृचैतन्यरूपस्य विषयसाक्षात्कारस्यानुपपत्तिरिति वाच्यम् ।(१) *विषयाकाराया अनिर्गताया अपि इन्द्रियजन्याया मनोवृत्तेर्विषयसाक्षात्कारसम्भवात् आत्मसुखादौ मनःकरणकस्यैव साक्षात्कारस्य वाचस्पतिमते स्वीकारात्* । अथ विनिगमकाभावादिन्द्रियघटादिसंयुक्तभागावच्छेदेनापि मनस्सं-

नारायणी ।

परिणमते इत्यर्थः । विषयेन्द्रियसन्निकर्षस्येव विषयमनोयोगस्यापि हेतुत्वज्ञापनाय व्याप्य तत्तदाकारो भवतीत्युक्तम् ; अत्र दृष्टान्तः—द्रुतेति । यथा द्रवीभूतताम्रं मूषापात्रे निक्षिप्तं वाय्वाद्यपसारिततेजोभागं सत्कठिनं भवति, तथा मनो विषयसंयुक्तं सदाकाराख्यविषयतासम्बन्धेन घटादिसंबद्धचाक्षुषादिरूपं भवतीत्यर्थः । निर्गत्य—निःसृत्य । देशान्तरे गतस्य विषयाकारतायां तुदृ ष्टान्तस्तडागोदकमिति । 'तद्यथा तडागोदकं छिद्रान्निःसृत्य कुल्यात्मना केदारेषु प्रविश्य केदाराकारं भवती'त्यादि स्पष्टम् । ननु कथमतिशीघ्रमेव मनसः सूर्यमण्डलादिसंयोगस्तत्राह—तस्येति । (२)स्पष्टम् । ननु 'युगपज्ज्ञानानुपपत्तिर्मनसो लिङ्गमि'ति सूत्रयता भगवताऽक्षपादेन मनसोऽणुत्वसमर्थनात्तस्य चाणोर्वहिर्निर्गमने सद्योमरणा-

(१) *साक्षात्कारत्वजातिस्वीकारेणैव तदुपपत्तेः चाक्षुषत्वादिजात्यैव पश्यामीत्यादिप्रत्ययस्य त्वयाप्युपपादनीयत्वात्* । चिन्हमध्यगः पाठो भिन्नो घपुस्तके ।

(२) स्पष्टमिति । सौरप्रभा यथा मेघाद्यावरणे सति सङ्कुचिता भवति मेघाद्यपगमे च झटित्येव जगद् व्याप्नोति तद्वदित्यर्थः ।

सङ्कोचविकासावुपपद्येते । स च सावयवत्वात्

न्यायरत्नावली ।

युज्यते। (१)+सावयवत्वाच्च युगपत्पादहस्ताद्यवच्छिन्नसुखादिपरिणामवत्+। किञ्च इन्द्रियसन्निकर्षं प्रति चाक्षुषादेः घटादिनिष्ठविषयतासम्बन्धेनेवावच्छेदकतासम्बन्धेनापि विनिगमकाभावेन कार्यतासम्भवात्, चाक्षुषादिमनोवृत्तेस्स्वविषयावच्छिन्नत्वसिद्ध्या बहिर्निर्गमस्यावश्यवाच्यत्वेन घटादिसंयोगस्यापि सम्भवः। न च (२)चक्षुरादेर्घटादिनिष्ठविषयताकत्वसिद्धौ विषयतासम्बन्धेनेन्द्रियसन्निकर्षकार्यत्वस्यावश्यकतया सैव तत्र विनिगमिकेति वाच्यम्। विशिष्टविषयकबुद्धित्वेन बाधाभावादिकार्यत्वस्यावश्यकतया तत एवोक्तसिद्धिसम्भवात् उक्तकार्यस्यानावश्यकत्वात्। न च निर्विकल्पकप्रत्यक्षस्य उक्तसिद्ध्यै तादृशमिन्द्रियसन्निकर्षकार्यत्वमावश्यकमिति वाच्यम्। उक्तप्रत्यक्षे मानाभावात्। न च 'जातिमान् घट' इत्यादौ शुद्धघटत्वादिप्रकारताप्रयोजकत्वेन घटत्वादिनिर्विकल्पकसिद्धिरिति वाच्यम्। विजातीयसन्निकर्षत्वेनैव उक्तविषयताधीहेतुत्व(३)सम्भवात्। अनन्तकोटिनिर्विकल्पककल्पने गौरवादिति चेन्न। तथापि(४) घटादिसंस्पृष्टस्य मनसश्शरीरसंसर्गे मानाभावे न शरीरावच्छिन्नमनोभागावच्छिन्नचितश्चाक्षुषादिकालेऽपि प्रमातृत्वसिद्धान्तानुपपत्तेः, तत्राह—स चेत्यादि। अवच्छिन्नः-अन्तः-

नारायणी ।

पत्तेर्विषयसन्निकर्षव्याप्तिरयुक्तेत्यत आह-स चेति। (५)अविद्याविवर्तश्चेत्यर्थः। सावयवत्वात्-भूतसूक्ष्मांशरूपावयवत्वात्। 'अन्नमयं हि सौम्य मन' इत्यादिश्रुत्या भूतकार्यत्वोक्त्या सावयवत्वज्ञापनादिति भावः। अ

(१)+तत्सम्भवात् तस्य सावयवत्वात्। सावयवत्वं च युगपद्पादहस्ताद्यवच्छिन्नसुखादिपरिणामवत्त्वात्+। इति पाठो भिन्नो घपुस्तके।

(२) चाक्षुषादेर्घटादिनिष्ठविषयताकत्वसिद्धौ इति घपुस्तके पाठः युक्तश्च।

(३) हेतुत्वकल्पनादिति घपुस्तके। (४) तथाहीति गपुस्तके।

(५) अन्तःकरणाख्यः अविद्याविवर्तश्चेति खपुस्तके।

परिणममानो देहाभ्यन्तरे घटादौ च सम्यग्व्याप्य देहघटयोर्मध्येऽपि चक्षुर्वदविच्छिन्नोऽप्यवतिष्ठते । तत्र(१) देहेऽन्तःकरणभागोऽहङ्काराख्यः कर्तेत्युच्यते । (२)देहविषयमध्यवृत्तिदण्डायमानस्तद्भागः वृत्तिज्ञानाख्यः क्रियेत्युच्यते । विषयव्यापकस्तद्भागो विषयस्य ज्ञानकर्मत्वसम्पादकमभिव्यक्तियोग्यत्वमित्युच्यते । तस्य च

न्यायरत्नावली ।

रघटादितदन्तरालदेशेषु युगपत्संयुक्तः । तत्र हेतुगर्भं विशेषणमाह—चक्षुर्वदिति । चक्षुरादीन्द्रियस्य यथा जीवनदशायां न शरीरत्यागः, जीवनादृष्टस्य तत्र प्रतिबन्धकत्वात् तथा मनसोऽपीत्यर्थः। कर्तेति । क्रियानुकूलेन्द्रियसंयोगादिव्यापारवत्त्वादिति शेषः । ज्ञानकर्मत्वसम्पादकम्–आवरणनिवृत्त्यादिरूपस्य ज्ञानाक्रियाजन्यफलस्य सम्पादकम् । तत्र हेतुः—अभिव्यक्तियोग्यत्व-

नारायणी ।

युगपन्नानावृत्त्याकारपरिणामोऽपि युज्यत एवेत्यभिप्रायेणाह–परिणममान इति । तस्मादेवाभ्यन्तरे बहिश्च स्थितिरपि युज्यत इत्याह–देहेति । देहघटयोर्मध्येपीत्यपिना मध्येऽन्तराले सम्यग् व्याप्त्यभावः सूचितः, मध्ये व्याप्तिफलस्य प्रमादैरनुपलम्भादित्यन्यत्र विस्तरः । अविच्छिन्नः–शरीरघटान्तरालदेशेषु युगपत्संयुक्तः । तत्र दृष्टान्तः–चक्षुर्वदिति । यथा चक्षुरदृष्टवशाज्जीवद्दशायां शरीरं न त्यजति अन्धत्वप्रङ्गात्, नापि मध्ये व्यवच्छेदः खण्डितत्वप्रसङ्गात्, मनःसंयुक्तेन्द्रियस्य विषयेन सह संगोगाभावेनाग्राहकत्वप्रसङ्गाच्च एवं मनसोपीति भावः। अन्तःकरणस्य सर्वत्रावस्थितिप्रयोजनमाह–तत्रेति। तत्र–तेषु भागेषु मध्ये। कर्ता–कार्यानुकूलकृतिमान्। चेतनावृत्तिमत्त्वादिति भावः। ज्ञानकर्मत्वेति। आवरणनिवृत्त्यादिरूपस्य ज्ञानरूपक्रियाजन्यफलस्य संपादकं तत्र हेतुः–अभिव्यक्तीति। आवरणनिवृत्तिरूपाभिव्यक्तिं प्रति कारणीभूताया वृत्तिज्ञानरूपक्रियाया योग्यतारूपमित्यर्थः। विषयसंसृष्टस्वभागावच्छिन्नक्रिया विषयाभिव्यक्तिजननयोग्या भवतीति भावः। अन्तःकरणविभागकथनस्य प्रयोजनमाह–तस्येति ।

(१) देहावच्छिन्नान्तःकरणेत्यादिः कपुस्तके ।
(२) देहघटयोर्मध्यवर्ती दण्डायमानेत्यादिः कखपुस्तकयोः ।

त्रिभागस्यान्तःकरणस्यातिस्वच्छत्वात् चैतन्यं तत्राभिव्यज्यते। तस्य चाभिव्यक्तस्य चैतन्यस्य एकत्वेऽप्यभिव्यञ्जकान्तःकरणभागभेदात् त्रिधा व्यपदेशो भवति। कर्तृभागावच्छिन्नचिदंशः प्रमाता। क्रियाभागावच्छिन्नचिदंशः प्रमाणम्। विषयगतोऽभिव्यक्तियोग्यत्वभागावच्छिन्नचिदंशः प्रमितिरिति। प्रमेयं तु विषयगतं

न्यायरत्नावली।

मिति। आवरणनिवृत्त्यादिरूपाभिव्यक्तिं प्रति कारणीभूताया वृत्तिज्ञानरूपक्रियाया योग्यतारूपमित्यर्थः। विषयसंसृष्टत्वभागावच्छिन्नक्रिया विषयनिष्ठाभिव्यक्तिजननयोग्या भवतीति भावः। प्रमातेति। प्रमानुकूलव्यापारवत्त्वादिति शेषः। प्रमाणमिति। विषयसंसृष्टभागरूपप्रमासिद्ध्यर्थं प्रमातृव्यापारविशिष्टत्वात् तादृशप्रमां प्रति अयोगव्यवच्छेदेन कारणत्वाच्चेति शेषः। प्रमात्रा व्यापृता हि वृत्तिर्विषयेण संसृज्यते, विषयसंसृष्टभागाऽयोगशून्या चेति भावः। प्रमितिरिति। अज्ञातविषयभागत्वादिति शेषः। तदव्यवधानेन अज्ञातविषयाभिव्यक्तिरूपफलदर्शने तस्यैवाज्ञात-

नारायणी।

अतिस्वच्छत्वात-प्रतिबिम्बासम्बन्धयोग्यत्वात्। तत्र-त्रिभागेऽन्तःकरणे, अभिव्यज्यते-प्रतिबिम्बितं भवति। अस्तु प्रतिबिम्बस्तथापि तस्यैकस्य प्रमात्रादिव्यवस्था कथं तत्राह-तस्येति। स्पष्टम्। त्रिधाव्यपदेशमेव स्पष्टयति-कर्तृभागेति। शरीरसम्बद्धान्तःकरणभागावच्छिन्नेत्यर्थः। प्रमाता-धात्वर्थज्ञानानुकूलव्यापारवत्त्वादिति शेषः। क्रियाभागेति। अन्तरालदेशावच्छिन्नान्तःकरणभागावच्छिन्नेत्यर्थः। प्रमाणं-विषयसंसृष्टभागरूपप्रमाया अयोगव्यवच्छेदेन सम्बन्धि,फलायोगव्यवच्छिन्नकारणस्यैव करणत्वाङ्गीकारात्। इन्द्रियादीनां तु प्रयोजकत्वेन करणत्वव्यपदेशो भाक्त इति भावः। विषयेति। घटादिरूपविषयगतो यः प्रमाणवृत्तेर्योग्यतारूपो भागः विषयसंसृष्टभागावच्छिन्नत्वेनैव प्रमावृत्तेरभिव्यक्तिकारणतावच्छेदकीभूतो भाग इति यावत्, तदवच्छिन्नचित्प्रतिबिम्बः प्रमितिरित्यर्थः। अज्ञातविषयकभागत्वादिति शेषः। तदनन्तरमेवाज्ञातविषया-

ब्रह्मचैतन्यमेव अज्ञातम्। तदेव च ज्ञानं सत् फलम्।

न्यायरत्नावली।

विषयकत्वमिति भावः। ब्रह्मेति। जीवचैतन्यस्य स्वत एवाभिव्यक्तत्वात् प्रमयाऽभिव्यज्यमानं ब्रह्मचैतन्यमेव प्रमेयमिति भावः। वस्तुतो ब्रह्म बृहत् जगदुपादानमिति यावत्, तथा च जीवस्य जगदुपादानत्वपक्षे विषयावच्छिन्नस्यैव प्रमेयत्वमिति ध्येयम्। ज्ञातम्—अभिव्यक्तम्। ननु चक्षुरादीनामपि प्रमाणत्वसम्भवात् दर्शनान्तरेषु उक्तत्वाच्च तदनुक्त्या न्यूनत्वमिति चेन्न। वृत्तिज्ञानस्य चक्षुरादिमिश्रितत्वेन तत्प्रमाणत्वोक्त्या चक्षुरादेरपि तल्लाभात्, प्रमासामान्यं प्रति करणस्य प्रकृते वाच्यत्वात्, मनसः प्रमासामान्यकरणत्वस्य दर्शनान्तरेष्वप्युक्तत्वाच्च, तदुक्तेरेव प्रकृते युक्तत्वाच्च। अत्र मनसोऽचेतनत्वेन स्वेतरसकलकारकप्रयोक्तृत्वरूपस्वातन्त्र्यात्मककर्तृत्वासम्भवात् मनोवच्छिन्नचितः प्रमातृत्वमुक्तम्। 'जानामि घटं जानामि पट'मित्याद्यनुगताकारधीषु चिद्रूपस्यैकज्ञानस्य विषयत्वात् सुखादौ वृत्त्यस्वीकारेण तदवच्छिन्नचित एव तज्ज्ञानत्वाच्च विषयसंसृष्टवृत्तिभागस्य ज्ञानत्वाभावेन प्रमितित्वस्याप्यसम्भवात् तदवच्छिन्नचितः तदुक्तम्। सा च वृत्त्यवच्छिन्नचितः विषयसंसृष्टात्मकं विशिष्टरूपमिति विशि-

नारायणी।

भिव्यक्तिरूपफलदर्शनेन तस्यैवाज्ञातविषयकत्वादिति भावः। एकत्वेऽपि त्रिधा व्यपदेशो भवतीत्यनेन ग्रन्थेनान्तःकरणगत एक एव प्रतिबिम्बोऽन्तःकरणाभिन्नवृत्तीनां प्रमितित्वादिसम्पादको न तु तत्र प्रतिबिम्बान्तरमपि युक्तं प्रमाणाभावाद् गौरवाच्चेति ध्वनितम्। प्रमेयस्य सर्वसाधारणत्वात्प्रमेयं पृथगाह—प्रमेयन्त्विति। निरुक्तप्रमायां विषयस्त्वित्यर्थः। ब्रह्मेति। जीवचैतन्यस्य स्वत एवाभिव्यक्तत्वात्प्रमयाऽभिव्यज्यमानं ब्रह्मचैतन्यमेव विषय इति भावः। विषये घटादौ स्फूर्त्यर्थं विषयाकारवृत्तौ चित्प्रतिबिम्ब एव फलमिति मतनिरासायाह—तदेवेति। ब्रह्मचैतन्यमेव प्रमेयात्मकमेवेत्यर्थः। ज्ञातम्—अभिव्यक्तं निवृत्तावरणमिति यावत्। वृ

अत्र च यस्मिन्पक्षे अन्तःकरणावच्छिन्नो जीवः यस्मिंश्च

न्यायरत्नावली।

ष्टरूपे केवलरूपस्य हेतुत्वात्, वृत्त्यवच्छिन्नचिदेव प्रमाण(१)मुक्तम्। तथा च विषयसंसृष्टवृत्त्यवच्छिन्नरूपेण प्रमात्वम्। प्रमाणत्वं तु विषयासंसृष्टवृत्त्यवच्छिन्नरूपेणेव शरीरासंसृष्टवृत्त्यवच्छिन्नरूपेणापि। शरीरसंसृष्टवृत्त्यवच्छिन्नचिद्रूपप्रमातुः प्रयत्नेन हि शरीरासंसृष्टवृत्त्यवच्छिन्नं व्याप्रियते प्रमानिष्पत्तये। अत एव शरीरसंसृष्टवृत्त्यवच्छिन्नचिद्रूपस्यैव प्रमातृत्वमुक्तम्। ननु कथं प्रमेयचितः प्रमाधीनाऽभिव्यक्तिः? न तावत् प्रमातृचिदभेदः। अविद्यावच्छिन्नचिद्रूपजीवस्य जगदुपादानत्वपक्षे घटाद्यवच्छिन्नायाः प्रमेयचितः अविद्यावच्छिन्नजीवचिद्रूपत्वेन जीवं प्रति घटादेः भानसम्भवेन घटादिचितः प्रमात्रभेदस्य व्यर्थत्वात्। न हि सुषुप्तौ प्रमात्रभावेऽपि अविद्यादिकं जीवं प्रति न भाति। न वा तेन भानेन जागरे न स्मर्यते। नाप्यावरणभङ्गः। मनोवच्छिन्नचितः जगदुपादानस्य अविद्याप्रतिबिम्बितचैतन्यस्य वा जीवत्वपक्षे तत्तादात्म्याभावादेव घटादीनाम् अभानसिद्धौ घटाद्याकारवृत्त्यभावकाले घटाद्यवच्छिन्नचिदावरणस्वीकारस्य व्यर्थत्वात्, तद्भङ्गस्य प्रमाफलत्वासम्भवात्, तत्राह—अत्र चेत्यादि। अत्र प्रमात्रादिषु त्रिषु मध्ये। अन्तःकरणवृत्तिः प्रमा उभयत्रापि प्रमातृचिदुपरागार्थावरणभङ्गार्था चेति योजना। सर्वगतः—सर्वकार्यतादात्म्यवदवि-

नारायणी।

त्याऽऽवरणे निवृत्ते ब्रह्मणैव स्वतःस्फूर्तिमता घटादेः स्फूर्तिसम्भवात्तदर्थं घटाकारवृत्तौ प्रतिबिम्बकल्पनमप्रामाणिकमिति भावः। ब्रह्मणैव यदि विषयप्रकाशस्तदा वृत्तेः कोपयोगस्तत्राह-अत्र चेति। अत्र-प्रमात्रादिमध्ये। अन्तःकरणवृत्तिः प्रमारूपा उभयत्रापि प्रमातृचिदुपरागार्था विषयगतचैतन्यावरणभङ्गार्था चेति योजना। सर्वगतः-सर्वकार्यतादात्म्याप-

(१) प्रमाणमुक्ता इति घपुस्तके। युक्तश्चेदम्, सा चेत्यनुसारात्।

पक्षे सर्वगतोऽसङ्गोऽविद्याप्रतिबिम्बो जीवः, तत्रोभयत्रापि प्रमातृचैतन्योपरागार्था विषयगतचैतन्यावरणभङ्गार्था

न्यायरत्नावली ।

द्योपाधिकः । असङ्ग इति । घटादितादात्म्यशून्य इत्यर्थः । जीवान्यचित एव जगदुपादानत्वात् जीवस्य तदभावेन घटादितादात्म्यशून्यो जीवः शुद्धचित् अविद्याबिम्बत्वोपहिताचिद्वा जगदुपादानमिति विवरणे उक्तम् । अविद्यागताभासाविविक्तचिद्रूप ईशस्तथेति वार्तिक उक्तम् । तत्र आद्याया अविद्याप्रतिबिम्बरूपविवरणोक्तजीवेशानुस्यूतत्वेन, द्वितीयाया अविद्यामनःप्रतिबिम्बरूपसंक्षेपशारीरकोक्तेशजीवानुस्यूतत्वेन, तृतीयायाः स्वास्मिन् स्वोपधेये मनोगतचिदाभासरूपे वार्तिकोक्तजीवेशानुस्यूतत्वेन सर्वदृश्येषु भासकत्वरूपसाक्षित्वसत्त्वात् तदधिष्ठानत्वप्रयोजकं तादात्म्यमावश्यकम् । अनादिदृश्येष्वपि तासामधिष्ठानत्वात् । जीवस्य तु न तेषु कथमपि तादात्म्यमिति भावः । प्रमातृचैतन्येति । जीवेत्यर्थः । स्वप्नेऽप्यविद्यावृत्तेः स्वाप्नविषयजीवयोरुपरागार्थत्वात् , स्वाप्नगजादेरस्वच्छत्वेन तत्र प्रतिबिम्बघटितोपरागस्य तत्साक्षात्कारार्थशुक्तिरूप्यादाविव आवश्यकत्वात्, स्वप्ने प्रमात्रभावस्य प्रमाणवृत्त्यभावप्रयुक्तस्य मूल एवाग्रे 'वृत्तिकान्तःकरणावच्छिन्नचैतन्यस्यैव प्रमातृत्वादि'त्यादिना वक्ष्यमाणत्वात् । 'अहं घटं साक्षात्करोमी'ति व्यवहारार्थं तु प्रमात्रुपरागोऽपेक्ष्यत एव । घटादिसाक्षात्कारस्य मनोवृत्तिघटितत्वेन तत्र प्रमात्रुपरागस्य आवश्यकत्वात् । उपरागेति । (१)प्रतिबिम्बाश्रयप्रमावच्छेदकत्वं घटादिनिष्ठं

नारायणी ।

न्नाविद्योपाधिकः । असङ्गः-घटादितादात्म्यशून्यः । जीवान्यचित एव जगदुपादानत्वात् जीवस्य घटादितादात्म्यशून्यतेति भावः । तथाचोपादानस्य ब्रह्मण एव विषयेण सह साक्षात्सम्बन्धाद्भासकत्वं सम्भवति न

(१) प्रमातृचितो घटादिनिष्ठप्रतिबिम्बा० इत्यादिः पाठः घपुस्तके ।

न्यायरत्नावली।

प्रत्यक्षस्थले सम्बन्धः। तेनैव 'घटं साक्षात्करोमि' इति व्यवहारसम्भवात्। प्रतिबिम्बाश्रयप्रमाविषयत्वं परोक्षस्थले। तेनैव 'घटमनुमिनोमि घटं जानामी'त्यादिव्यवहारसम्भवात्। ननु सुखादिषु जीवस्य तादात्म्यसम्बन्ध एव साक्षात्कारव्यवहारे नियामकः, घटादिषु तूक्तरूपवैरूप्यमिति चेन्न। ब्रह्मण एव जगदुपादानत्वपक्षे जीवस्य मनःसुखादौ प्रतिबिम्बद्वारैव सम्बन्धस्य वाच्यत्वेन मनस्सुखाद्यवच्छिन्नचिद्रूपस्य मनआदिसाक्षात्कारस्यापि (जीवप्रतिबिम्बाश्रयत्वेन जीवस्य)प्रतिबिम्बाश्रयसाक्षात्कारावच्छेदकत्वरूपसम्बन्धस्यैव मनस्सुखादिसाक्षात्कारनियामकत्वेन वैरूप्यात्। न च मनोऽवच्छिन्नचितः जीवत्वे मनोऽवच्छिन्नरूपेणैकेन बिम्बत्वं प्रतिबिम्बाधारत्वं च अनुपपन्नमिति वाच्यम्। मनोविशिष्टरूपेण द्वितीयस्य मनउपहितरूपेण आद्यस्य स्वीकारात्। मनसोऽपि स्वच्छत्वेन प्रतिबिम्बाधारत्वे विशेषणत्वम्। भोक्तृत्वरूपजीवकोटौ निवेशासम्भवेन जीवोपाधित्वेन तन्निष्ठे बिम्बत्वे उपाधित्वमेव। न च मनोविशिष्टचिद्रूपप्रतिबिम्बाश्रयं प्रति मनसोऽवच्छेदकत्वे मानाभाव इति वाच्यम्। चिति जायमानं प्रतिबिम्बं प्रति मनसोऽवच्छेदकत्वेन प्रतिबिम्बविशिष्टं प्रत्यवच्छेदकत्वात्। विशेषणं प्रत्यवच्छेदकस्य विशिष्टं प्रत्यवच्छेदकत्वनियमात्। एवं सुखादेरवच्छेदकत्वं बोध्यम्। तस्मात् स्वप्रतिबिम्बाश्रयसाक्षात्कारावच्छेदकत्वमेव सर्वत्र विषये जीवस्य सम्बन्धः। वस्तुतस्तु स्वप्रतिबिम्बाश्रयावच्छेदकत्वं सर्वत्र सम्बन्धः। तत्र घटादौ प्रतिबिम्बाश्रयवृत्त्यवच्छेदकत्वमिन्द्रियसन्निकर्षनियम्यम्। मनस्सुखादौ प्रतिबिम्बाश्रयमनस्सुखावच्छेदकत्वं प्रतिबिम्बोत्पादकसामग्रीनि-

न्यायरत्नावली।

जीवस्येति। 'घटमहं जानामी'ति जीवव्यवहारप्रयोजको वृत्तिघटितविषयसम्बन्ध आवश्यक इत्यभिप्रेत्याह—प्रमात्रिति। प्रमातृचैतन्यस्य जीवस्य

न्यायरत्नावली।

मन्यं मनस्सुखाद्युत्पादकसामग्रीनियम्यं वा। केवलमनस्सुखाद्यवच्छेदेन चिति प्रतिबिम्बविशिष्टमनस्सुखादेरध्यासादिति भावः। ननु जीवोपरागार्था वृत्तिरिति न युक्तम्। साक्षिचैतन्यं हि विषयभासकम्। तस्य च पूर्वोक्तत्रिविधस्यापि जगदुपादानत्वात् विषयोपरागो वृत्तिं विनापीति चेन्न। साक्षिणि जीवस्य तादात्म्यादिसम्बन्धान्तरसत्त्वेऽपि वृत्तिं विना घटादेर्जीवं प्रत्यभानेन घटाद्यवच्छिन्नवृत्तिविशिष्टजीवात्मकत्वरूपस्य साक्षिणि जीवोपरागस्य आवश्यकत्वात्। अत एवाद्वैतसिद्धावुक्तम्—'अधिष्ठानचिदेव प्रकाशमाना वृत्तिद्वारा जीवोपरक्ता जीवं प्रति विषयप्रकाशिके'ति। ननु ब्रह्मण्युक्तावच्छेदकत्वे मानाभावः, न हि सर्वव्यापकं वस्तु कस्यचिदवच्छेदकम्, न चावच्छेदकत्वे नियामकमिन्द्रियसन्निकर्षादिकं ब्रह्मण्यस्ति, तथा च 'ब्रह्मसाक्षात्करोमी'ति व्यवहारानुपपत्तिः तत्राह—विषयगतेत्यादि। विषयसंसृष्टं यत् प्रमातृचैतन्यं प्रत्यावरणं तद्भङ्गार्थेत्यर्थः। तथा च ब्रह्मविषयकाज्ञानशून्यसाक्षिविषयकोक्तव्यवहारः। न चैवम् 'घटं साक्षात्करोमी'त्यादेरुक्तावच्छेदकत्वविषयकत्वेन वैरूप्यमिति वाच्यम्। वक्ष्यमाणपक्षेऽप्येतादृशवैरूप्यसत्त्वात्। तत्र हि 'घटं साक्षात्करोमी'त्यादौ घटादिनिष्ठो योऽज्ञानविषयतावच्छेदकत्वाभावस्तत्प्रयोजकविशिष्टचैतन्यरूपस्साक्षात्कारो विषय इति 'ब्रह्म साक्षात्करोमी'-

नारायणी।

उपरागः विषयेण सह सम्बन्धः तदर्था तत्फलिकेत्यर्थः। प्रत्यक्षस्थले प्रतिबिम्बाश्रयप्रमावच्छेदकत्वरूपस्य, परोक्षस्थले प्रतिबिम्बाश्रयप्रमाविषयत्वरूपस्य वृत्तिं विनाऽभावात् वृत्तिनिर्वाह्यत्वेन वृत्तिफलत्वमिति भावः। ननु चिदुपरागार्था वृत्तिस्तदा ब्रह्माकारावृत्तिर्व्यर्था अधिष्ठानब्रह्मणा साक्षादेव जीवस्य (सम्बन्ध)सम्भवात् तत्राह-विषयेति। विषयसंसृष्टं यत्प्रमातृचैतन्यं प्रत्यावरणं तद्भङ्गार्थेत्यर्थः। तथाच सर्वत्र ब्रह्मसाधारणविषयनिष्ठाज्ञानावरणाभावप्रयोजकतयाप्यन्तःकरणवृत्तिरिति भावः। सर्वग-

चान्तःकरणवृत्तिः । यस्मिंश्च पक्षेऽविद्यावच्छिन्नः सर्व-
गतो जीवः आवृतः, तस्मिन्पक्षे जीवस्यैव जगदुपादा-
नत्वेन सर्वसम्बद्धत्वात् आवरणभङ्गार्था वृत्तिरिति

न्यायरत्नावली ।

त्यत्र(१) ब्रह्मविषयकाज्ञानशून्यसाक्षात्कारो विषय इत्येव वाच्यमि-
भावः । सर्वगतः—सता तादात्म्येन सर्वदृश्यसम्बद्धः । आवृत
इति । घटाद्यवच्छेदेनाज्ञानविषयतावान् । ननु सर्वगतत्वे आवृत-
त्वे वा मानाभावात् कथं तत्पक्षे आवरणभङ्गार्था वृत्तिः तत्राह-
जीवस्येत्यादि । सर्वसम्बद्धत्वादिति । आवृतत्वेनेति शेषः
घटाद्याकारवृत्तिं विनापि घटाद्याकारसाक्षात्कारव्यवहारापत्त
ब्रह्मणीव घटाद्यवच्छिन्न(२)*जीवचैतन्येऽप्यज्ञानविषयत्वं स्वीक्रिय
इति भावः । भङ्गेति । भङ्गमात्रेत्यर्थः । घटादौ जीवरूपा
अविद्यावच्छिन्न*चितस्तादात्म्यस्य स्वाभाविकत्वेन तस्यैव भास
कतानियामकत्वसम्भवेन च न पूर्वोक्तोपरागार्थत्वं वृत्तेरिति भा-
वः । ननु जीवस्य आवृतत्वं यदुक्तं तदयुक्तम् । सर्वदृश्यभासकं
चैतन्यं साक्षी, वाचस्पतिमते जीवेशानुस्यूतशुद्धचिदेव तथा वाच्य
तथा च तस्यैवावृतत्वं युक्तमिति चेन्न । यथा हि वार्तिकमते ईशस्य
जीवं च प्रति सर्वदृश्यभासकत्वम् सर्वदृश्याधिष्ठानत्वात्, तथा वाचस्
तिमते जीवस्यैव तत एव(३) स्वमीशञ्च प्रति तत् । जगत्कामनाक
रपि जीवाधिष्ठानकत्वमेव जीवाश्रिताविद्यापरिणामत्वात् । 'सोऽक

नारायणी ।

तः-सर्वदृश्येषु तादात्म्येन सम्बद्धः । आवृतः-घटाद्यवच्छेदेनाज्ञानाव-
रणविषयः 'घटं न जानामी'त्यादिप्रतीतेः । नोपरागार्था वृत्तिरिति ज्ञाप-
नायाह—जीवस्येति । आवरणभङ्गार्थेति । आवरणभङ्गार्थैव । आवरणनिवृत्त्य
स्वतः सम्बद्धजीवेनैव भानोपपत्तेर्नोपरागार्था वृत्तिरस्मिन्पक्षे युक्ते

(१) ब्रह्मनिष्ठाऽज्ञानविषयत्वाभावस्तत्प्रयोजकविशिष्टचैतन्यरूपः साक्षात्कारो वि
इति पाठो घपुस्तके । (२) *...* चिह्नितो भागः प्रमादभ्रष्टो गपुस्तके ।
(३) तत एव—सर्वदृश्याधिष्ठानत्वादेव इत्यर्थः ।

विवेकः। ननु चिदुपरागार्था वृत्तिरिति पक्षे स्वतोऽन्तः-करणसम्बद्धानां धर्माधर्मादीनां ब्रह्मणश्च वृत्तिमन्तरेणैव सर्वदा भानं स्यात्। न स्यात्। चैतन्यस्य तत्तदाकारत्वा-

न्यायरत्नावली।

यते'त्यादिश्रुतिस्तु ब्रह्मणो जगदुपादानत्वश्रुतिवत् परिणाम्य-विद्याविषयबोधिका। यथा च वार्तिकमते जीवः ईशतादात्म्यवान् तदुपादानकत्वात्, तथा वाचस्पतिमते ईशविषयकाविद्यावान् द्रव्य-तादात्म्यवान् घट इव ईशतादात्म्यवान्वेति। (१)तस्य तं प्रति भासकत्वसम्भवः। यथा च तन्मते सुखादिभासकत्वेन ईशस्य वृत्त्यपेक्षा, तथा वाचस्पतिमते जीवस्येशं प्रति, सर्वभासकत्वे तं प्र-ति विषयाणामनावृतत्वात्। स्वत इति। वृत्तिं विनापीत्यर्थः। अन्तःकरणसम्बद्धानां—जीवप्रतिबिम्बाश्रयमनोऽवच्छिन्नत्वादिस-म्बन्धवताम्। ईशप्रसादकोपरूपधर्माधर्मयोरीशोपाधिमायापरिणा-मयोरपि तत्कारणयागादिक्रियावत् मनोऽवच्छिन्नत्वं स्वीक्रियते। तादृशमनोगतसुखादिजनकत्वादिति भावः। अधर्मादीनामित्या-दिपदेन शुक्तिरूप्यादिसङ्ग्रहः। भानं स्यादिति। तथा च प्रतिबि-म्बाश्रयमनस्तादात्म्यादिसम्बन्धेन सुखादिसम्बद्धजीवस्य 'सुखं साक्षात्करोमी'त्यादौ विषयत्वात् वृत्तिं विनापि ब्रह्मणि(इव) धर्मा-दावपि तथासम्बद्धजीवेन तत्तत्साक्षात्कारव्यवहारः स्यात्। शुक्तिरूप्यादावपि इदमाकारवृत्तिनिर्गमेन तादृशमनोऽवच्छिन्नचि-त्तादात्म्यमेव भासकतानियामकः सम्बन्धोऽस्तीति तत्राविद्यावृ-त्तिस्वीकारः सिद्धान्ते वृथेति भावः। स्वप्रतिबिम्बाश्रयावच्छेदक-त्वसम्बन्धेन सुखादिसम्बद्धो जीवः, तत्साक्षात्कारो धर्मादौ तु

नारायणी।

भावः। स्वतः इति—वृत्तिं विनेत्यर्थः। धर्मादीत्यादिपदात् शुक्तिरू-प्यादिपरिग्रहः। भानं स्यादिति। प्रतिबिम्बाश्रयमनस्तादात्म्येन सुखा-

(१) तस्य तु प्रतिभासकत्वसम्भव इति गपुस्तके।

भावात्। तदभावश्च स्वच्छेऽपि ब्रह्मचैतन्ये आवरणात्।

न्यायरत्नावली।

प्रतिबिम्बाभावेन न जीवस्य तत्सम्बन्धेन धर्मादिसम्बद्धत्वा- शंक्याह—न स्यादित्यादि। चैतन्यस्य—जीवस्य। तत्तदा- कारत्वाभावात्—स्वप्रतिबिम्बेत्यादिसम्बन्धेन धर्मादिसम्बद्धत्वा- भावात्। ननु घटाद्याकारायामिव ब्रह्माकारायामपि श्रवणमन- नादिपूर्वकालीनवृत्तौ जीवस्य (१)प्रतिबिम्बसम्भवात् घटादाविव ब्रह्मण्युक्तरूपप्रतिबिम्बाश्रयावच्छेदकत्वसम्भवात् कथं ब्रह्माद्या- कारत्वाभावः। एवमविद्यावृत्त्यभावेऽपि शुक्तिरूप्यादौ वृत्तिसा- मान्याभावेऽपि सुखादाविव धर्मादौ तत्प्रतिबिम्बसम्भवात् कथं तदाकारत्वाभावः तत्राह—तदभावश्चेति। स्वच्छे—जीवप्रति- बिम्बयोग्यपातञ्जानरूपवृत्तिविषये। आवरणात्—आवरणयोग्या- परिच्छिन्नानन्दरूपत्वात्। तथा च परिच्छिन्नत्वेन ब्रह्मणो न प्र- तिबिम्बाश्रयवृत्त्यावच्छेदकत्वसम्भव इति भावः। यथाश्रुतं तु स्वच्छादिपदं न सङ्गच्छते, अनावृतेऽपि ब्रह्मणि प्रतिबिम्बाधार- तावच्छेदकत्वाभावेनावरणस्य तत्र प्रयोजकत्वात्। अथवा स्वच्छा- वरणपदयोः यथाश्रुत एवास्तामर्थः। ब्रह्मणि स्वच्छेऽप्यावृतत्वात् न जीवप्रतिबिम्बवत्त्वम्। चरमवृत्तौ सत्यां त्वावरणनाशेन तद्व- त्त्वसम्भवाद्ब्रह्माकारता। तथा च घटादौ भासकतया क्लृप्तस्य प्रतिबिम्बाश्रयावच्छेदकत्वस्याभावेऽपि ब्रह्ममनस्सुखादौ प्रति-

नारायणी।

दीनामिव धर्माधर्मादीनामपि साक्षात्कारः स्यादित्यर्थः। ब्रह्मणस्तु स्वा- धिष्ठानभूतस्याभेदरूपः सम्बन्धः स्फुट एवेति संक्षेपः। न यथाकथञ्चि- त्सम्बन्धमात्रं पदार्थभानप्रयोजकं किन्तु स्वप्रतिबिम्बाश्रयप्रमावच्छेदक- त्वमेव, तच्च तेषु नास्त्येवेति न तेषां भानसम्भव इत्याशंक्याह—न स्यादि- ति। चैतन्यस्य-प्रमातृचैतन्यस्य, तत्तदाकारत्वाभावात्-निरुक्तसम्बन्धे- सम्बद्धत्वाभावात्। एतदेव समर्थयति-तदभावेति। सम्बन्धाभावश्च

(१) प्रतिबिम्बाभावे। ननु जीवस्येति गपुस्तक पाठः।

न्यायरत्नावली ।

बिम्बत्वमेव भासकतानियामकसम्बन्धः । यथा च ब्रह्मण्यज्ञानविषयत्वमावरणम्, घटादौ तु तदवच्छेदकत्वमज्ञानविषयचित्तादात्म्यं तथा ब्रह्मणि आद्यौ साक्षात्कारो जीवप्रतिबिम्बत्वम्', घटादौ तु तदवच्छेदकत्वं तद्धर्मावच्छेदकत्वं वा । एवं च 'साक्षात्करोमी'त्याकारकसर्वप्रत्ययेषु प्रतिबिम्बघटितविषयकत्वेनैकरूप्यम् । वस्तुतस्तु प्रतिबिम्बत्वमेव सर्वत्र(१) सम्बन्धः । घटादावपि वृत्त्यवच्छेदककाले तत्सम्भवात् । अनुभूयते च जलाद्युपरक्ते मृदादिपात्रे सूर्यादेः प्रतिबिम्बम् । ननु प्रतिबि(२)म्बत्वसम्बन्धेन स्वावच्छिन्नमनोवृत्त्यादिप्रतिबिम्बितत्वसम्बन्धेन वा घटादिविशिष्टस्य जीवस्य 'घटं साक्षात्करोमी'त्यादिप्रत्यये विषयत्वं पूर्वोक्तमयुक्तम् । साक्षात्करोत्यर्थ एव हि तत्र विषयः । स च विषयविशिष्टप्रतिबिम्बस्य प्रयोजकं मनोऽवच्छिन्नं चैतन्यम् । अन्यथा फलघटितार्थवाचकत्वेन साक्षात्करोतेरकर्मकत्वं स्यादित्युक्तं जानातिसाक्षात्करोत्यर्थविषयविवेचनप्रस्तावे । घटादिविशेषितस्य तदर्थत्वे च तस्य नानार्थत्वापत्तिरिति चेन्न । वस्तुगत्या घटादिविशिष्टं मनोऽवच्छिन्नं चैतन्यं तद्विषय इत्युक्तम्, न तु घटादिविशिष्टमनोऽवच्छिन्नचित्त्वेन चितो विषयत्वम् । तच्च विषयविशिष्टप्रतिबिम्बप्रयोजकमनोऽवच्छिन्नत्वेन घटादिविशिष्टचितेः विषयत्वेऽपि न क्षतम् । मनोऽवच्छिन्नचित्तादात्म्यं च सुषुप्तजीवेऽप्यस्त्येव । मनस्त्वाश्रयस्य हि तादात्म्यं साक्षात्कारघटकम्, न तु तद्विशिष्टस्य । तथा च सौषुप्तमनोऽवस्थायां मनोजात्यभावेऽपि सकलमनोवस्थानुगतव्यक्तौ जागरस्वप्नकालयोः मनस्त्वसत्त्वेन तद्व्यक्तेरेव सौषुप्तमनोऽवस्थानुगतत्वात् सुषुप्तावपि मनस्त्वाश्रयोपहितचिदक्षता । ननु क्वचिदपि न साक्षात्करोत्यर्थः । ज्ञानविशेषो हि सः । ज्ञानं च साक्ष्येव, तस्यैव सर्वदृश्यानुगतत्वेन ज्ञानत्वात् । न हि ज्ञानं सि-

(१) सर्वत्रेति गपुस्तके नास्ति । आवश्यकञ्च । (२) प्रतिबिम्बितत्वेति घपुस्तके ।

न्यायरत्नावली ।

द्धान्ते प्रतिज्ञेयं भिन्नम् । उक्तं हि मूल एव=विषयविशेषोपर-क्तया ज्ञानं नाना स्वतस्तु (ज्ञानं) ज्ञानमित्येकं प्रतीयते=इति चेन्न। अधिष्ठानीभूतसाक्षिण(१) एव मनोऽवच्छिन्नत्वरूपेण ज्ञानत्वात् तदुक्तमद्वैतसिद्धौ—'यत्र दृश्याध्यासस्तत्र ज्ञानत्वम्, न तु ज्ञानत्व-विशिष्टेऽध्यास' इति । अत एव प्रतिकर्मव्यवस्थायामद्वैतसिद्धा-वुक्तम्—'अविद्योपहितचिद्रूपस्य जीवस्य जगदुपादानत्वपक्षे घटा-द्यवच्छेदेन आवृतत्वादावरणभङ्गार्था वृत्तिः । जगदनुपादानत्व-पक्षे तु जीवस्य विषयेषु सम्बन्धस्याभावात् तदर्थापत्तिः । पक्षद्वये-ऽपि जीवस्यैव विषयावभासकत्वम् । मनोऽवच्छिन्नचितः जीवत्वे तु जीवस्य जगदुपादानब्रह्मचिदभेदाभिव्यक्त्याऽर्थापत्तिः। ब्रह्मचि-देव विषयावभासिकेति चरमपक्षे अभेदाभिव्यक्त्यर्थत्वस्य जीवोपरा-गार्थत्वे पर्यवसानात् अत्र मूले तथोक्तमिति ध्येयम् । यदि च सा-क्षिरूपस्य ज्ञानत्वमित्याग्रहः, तदा तादृशमनोवच्छिन्नचित्तादात्म्य-विशिष्टसाक्ष्येव साक्षात्करोत्यर्थोऽस्तु । (नचोक्त) प्रतिबिम्बप्रयोजक-साक्ष्येव सोऽस्त्विति वाच्यम् । चैत्रीयमनोवृत्तिमादाय मैत्रस्यापि 'घटं साक्षात्करोमी' ति व्यवहारापत्तेः । प्रयोजकत्वंहि बिम्बवि-धया प्रकृते निवेशितम् । तथा च घटावच्छिन्नचैत्रियमनोवृत्तिप्र-तिबिम्बितसाक्षिणो मैत्रीयमनोवच्छिन्नचिद्रूपे अहमर्थेऽपि सत्त्वादु-क्तापत्तिः स्यादेव । मनोवच्छिन्नाचितः निवेशे तु तादृशवृत्तिनिष्ठप्र-तिबिम्बप्रयोजकचैत्रमनोऽवच्छिन्नचितः मैत्रीयाहमर्थे तादात्म्याभा-वेन नोक्तापत्तिः। उक्तमनोऽवच्छिन्नचित्तो हि साक्षिणि विशेषणत-या भानस्वीकारात् साक्षिविशेषेऽपि तादात्म्येन प्रकारत्वम् । य-दि च विषयसाक्षात्कारशरीरे भासमाने साक्षात्कारे विषयस्या(२)

(१) साक्षिण्येवेति पाठ उपलब्धोपि न युक्तः । ज्ञानत्वादित्यस्य ज्ञानत्वस्वीकारा-दित्यर्थकत्वे क्लिष्टकल्पनमवधार्य शोधितोऽस्माभिरिति ।

(२) विषयस्य द्वारीकृतस्य तादात्म्येति घपुस्तके ।

न्यायरत्नावली ।

प्यासिकस्य तादात्म्यस्य भानमावश्यकम् । तस्य भासकतानि-यामकत्वात्, तदा 'घटं साक्षात्करोमी'त्यादौ साक्षात्कारैकदेशे विषय इव साक्षिण्यपि घटादेस्तादात्म्यं द्वितीयाविभक्त्यु-पस्थापितं विशेषणतया भातीति स्वीक्रियताम् । एवं जाना-त्यर्थोऽपि पूर्वोक्तरीत्या प्रतिबिम्बप्रयोजकमनोऽवच्छिन्नचित्तादा-त्म्यविशिष्टः साक्ष्येवोच्यताम्, उच्यतां च 'घटं जानामी'-त्यादौ जानात्येकदेशे प्रतिबिम्बे स्वाकारवृत्तिनिष्ठत्वाद्यन्यतमस-म्बन्धाद्यवच्छिन्नं घटादेराधेयत्वमिव साक्षिणि घटादेस्तादात्म्य-मपि द्वितीयाविभक्त्युपस्थापितं विशेषणमिति । एवं वृत्तेरावरण-भङ्गार्थत्वपक्षे अज्ञानाविषयत्वप्रयोजकमनोऽवच्छिन्नचिद्विशिष्टसाक्षी साक्षात्करोतेरसत्त्वापादकाज्ञानाविषयत्वप्रयोजकमनोऽवच्छिन्नचि-द्विशिष्टसाक्षी जानातेरर्थः । तदाप्युक्तरीत्या घटादेरज्ञानविषयत्वे आधेयत्वस्यैव साक्षिणि तादात्म्यस्य द्वितीयाविभक्त्यर्थस्य विशे-षणत्वम् । मनोऽवच्छिन्नचिति तादृशप्रयोजकत्वं च स्वनिरूपितं तदज्ञानं तद्विषयत्वाभावस्य समानकालीनं कारणं या अविद्या तादात्म्यम् । कारणत्वं क्षेमसाधारणं प्रयोजकत्वरूपोऽखण्डध-र्मो वा तत्स्थाने वाच्य इत्यादि साक्षात्करोत्यर्थनिर्वचने पूर्वोक्तं ज्ञेयम् । यदि च चिदुपरागार्थत्वपक्षात् वृत्तेर्जीवचितो विषयाव-च्छिन्नचिदभेदाभिव्यक्त्यर्थत्वपक्षो भिन्नो वाच्यः, तदा विषय-भावान्तरस्थले स्वप्रतियोगिकभेदस्य चिन्निष्ठो योऽभावः तस्यैव निवेशेन साक्षात्करोत्यर्थो वाच्यः । तदेकदेशे (१)साक्षिणि घटा-द्यन्वितस्य तादात्म्यस्य द्वितीयाविभक्त्यर्थस्यान्वयः । स्वपदा-र्थोऽत्र पूर्वत्र च मनोऽवच्छिन्नचिदेव । जानात्यर्थस्तु पूर्ववदेव । चित्सुखादौ प्रतिबिम्बास्वीकारादेवाभेदाभिव्यक्त्यर्थपक्षे इति

(१) चिति साक्षिणीति घपुस्तके ।

अनावृतेऽपि शुक्तिरजतादावस्वच्छत्वात्। धर्माधर्मा

न्यायरत्नावली।

स्वीकारे तु स्वतादात्म्यप्रयोजकत्वमेत्र मनोऽवच्छिन्नचिति वि
षणं वाच्यम्। तादात्म्ये च घटाद्याकारवृत्तिप्रतियोगिकत्वं
जानामी'त्यादौ सुखादिनिष्ठत्वं 'सुखं जानामी'त्यादौ वि
यया बोध्यते। यद्वा स्वीयाकाराख्यविषयता स्व
दात्म्यं स्वतादात्म्याश्रयतादात्म्यं चेत्याद्यन्यतमप्रयोजकं यत्
तद्विशिष्टसाक्ष्येव तत्पक्षे जानात्यर्थः। (१)इच्छाद्वेषादिपरिण
स्यापि मनस्त्वात्तदीयविषयत्वमपि मनोविषयत्वम्। द्वेषादि
दाय घटादौ ज्ञानव्यवहार इष्ट एव। इदं तु बोध्यम्। ज्ञाने
क्षात्कारे च पूर्वोक्ते सर्वत्र मनसो न मनस्त्वेनैव निवेशः।
शो जानाती'त्यादावीशस्य जगदनुपादानत्वपक्षे मनोविशिष्ट
दात्म्यबाधात्। किन्त्वीशोपाधिमनोन्यतरत्वादिना निवेशः,
मनोऽवच्छिन्नचिच्चेत्यन्यतराविशिष्टसाक्षिणो वेति। नन्वेवं
श्चिदुपरागार्थत्वपक्षेऽपि ब्रह्मणि चिदुपरागावरणभङ्गोभयार्थ
त्वात् केवलचिदुपरागार्थकत्वमद्वैतसिद्ध्युक्तमयुक्तमिति चेत्
तस्य घटादिब्रह्मसाधारणं चिदुपरागमात्रं वृत्तेः प्रयोजन(२)मि
कत्वात् मुख्यफलं चिदुपराग एवेत्यर्थकत्वाद्वा। यत्तु द्रव्ये प्रति

नारायणी।

स्वच्छेऽपि—प्रतिबिम्बसम्बन्धयोग्येऽपि। ब्रह्मचैतन्ये—अधिष्ठानचैतन्ये
वरणात्—श्रवणादिजन्यवृत्तेः पूर्वं 'ब्रह्म नास्ति न भाती'ति च विरुद्ध
हारजनकाज्ञानात्। तथाच श्रवणादिजन्यैव वृत्तिरज्ञाननाशिका न स
न्यवृत्तिरतो भासकसम्बन्धाभावान्न सदा तद्भानमिति भावः। शुक्ति
तभानापत्तिं वारयति—अनावृत इति। प्रतीतिमात्रशरीरत्वेनाज्ञानसत्त्वा
अज्ञानविषयतावच्छेदकत्वेऽपि। अस्वच्छत्वात्-तमःप्रधानाज्ञानपरि
मत्वात् प्रतिबिम्बावच्छेदकत्वायोग्यत्वात्। अनावृतत्वेऽपि तमःका
तस्योत्पन्नमात्रस्य भानं विना वृत्तिमसम्भावितमिति चिदुप

(१) धीच्छेत्यादि घपुस्तके। (२) प्रयोजकमिति पाठो गपुस्तके।

तु अस्वच्छत्वादावृतत्वाद्वा । तेन स्वच्छेऽप्यावृते प्रमाणवृत्त्या तदाकारता । अनावृतेऽप्यस्वच्छे शुक्तिरजतादौ अविद्यावृत्त्या तदाकारता । अनावृते स्वच्छे

न्यायरत्नावली ।

स्वरूपवद्वृत्तिसंयोगः गुणादौ तु तस्यास्संयुक्तसमवायादिरिति, तदसिद्ध्यादावुक्तमपि अननुगतत्वादुपेक्षितम् । अस्वच्छत्वात्—प्रतिबिम्बायोग्यत्वात् । नन्वीश्वरप्रसादकोपयोः सिद्धान्ते धर्माधर्मत्वस्वीकारात् जीवप्रसादकोपयोरिव तयोस्स्वच्छत्वमेव तत्राह—आवृतत्वाद्वेति । ईशं प्रति तयोरनावृतत्वेऽपि जीवं प्रत्यावृतत्वमिति भावः । तेन—स्वाभाविकेन ब्रह्माद्याकारत्वाभावेन, स्वच्छेऽप्यावृत इति पूर्ववदर्थः । ब्रह्मणीति शेषः । प्रमाणवृत्त्या—श्रवणानन्तरं ब्रह्मास्मीति वृत्त्या । स्वच्छावृतब्रह्मविषयकतादृशवृत्त्येति समुदायार्थः । तदाकारता—साक्षिणो ब्रह्मविषयकाज्ञानशून्यता । अथवेत्यादिव्याख्यानपक्षे ब्रह्मप्रतिबिम्बिततेत्यर्थः । अनावृते—प्रातीतिकत्वात् अज्ञानविषयतानवच्छेदके, अविद्यावृत्त्या तदाकारता—शुक्तिरूप्याद्यवच्छिन्नाविद्यावृत्तिप्रतिबिम्बतत्वरूपसाक्षिणः, शुक्तिरूप्याद्याकारता । ननु यद्यपि विवरणादौ शुक्तिरूप्याद्याकाराविद्यावृत्तिरुक्ता, तथापि न युक्ता । प्रातीतिकरूप्यादेस्स्वच्छत्वसम्भवादिति चेन्न । व्यावहारिकरजतादेः चित्प्रतिबिम्बयोग्यत्व-

नारायणी ।

तत्रापि वृत्तिरावश्यकीति भावः । दोषद्वयमेवेदं यद्यपि धर्मादावप्यस्ति तथाप्यन्यतरत्वेनैव तयोस्तत्र सम्बन्धव्यावर्तकता न मिलितस्य व्यावर्तकतेत्यभिप्रेत्य विकल्पमाह—अस्वच्छत्वात्—स्वभावविशेषकृतायोग्यत्वात् । आवृतत्वात्—फलसंस्काररूपाणां सूक्ष्मत्वेन जीवाज्ञानविषयत्वात् । तेन—स्वाभाविकेन, तत्तदाकारत्वाभावेन स्वच्छेप्यावृते इति पूर्ववत् । ब्रह्मणीति शेषः । प्रमाणवृत्त्या—वेदान्तप्रमाणजन्याखण्डाकारवृत्त्या, तदाकारता—तत्सम्बन्धत्वमिति यावत् । अनावृते—प्रतीतिमात्रशरीरत्वेनाज्ञानविषयतावच्छिदनवच्छेदके । अविद्यावृत्त्या—ज्ञानाकारसत्त्वपरि-

तु सुखदुःखादौ स्वत इति नान्तःकरणसम्बन्धमात्रेण भ-

न्यायरत्नावली ।

रूपस्वच्छत्वादर्शनेन तज्जातीयप्रातीतिकरूप्यादेः तदसम्भवात् । सत्त्वांशाधिकभूतपरिणामस्य मनआदेरेव स्वच्छत्वसम्भवेन तमोंशाधिकाविद्याया व्यावहारिकसाधारणरजतत्वाविशिष्टहेतुतया क्लृप्तायाः परिणामस्य प्रातीतिकव्यवहारादेः स्वच्छत्वासम्भवाच्च । सत्त्वांशाधिकाविद्यापरिणामस्य तदाकारवृत्तिज्ञानस्य चिन्निष्ठतदाकारतासम्पादकत्वेनावश्यकत्वात् । तमोंशाधिकाविद्याकार्यतावच्छेदके प्रातीतिकान्यत्वनिवेशे तु गौरवम् । आवश्यकी च प्रातीतिकाविद्यावृत्तिः, तत्त्वांशस्यैव संस्कारत्वात् । अनुमित्यादिवृत्तिनाशस्य रजताद्याकारत्वेन स्मृतिहेतुतायाः क्लृप्तत्वात् । रजताद्यवच्छिन्नचैतन्यनाशस्य (१)+रजतादितादात्म्यसम्भवेऽपि+ रजतादिसम्बन्ध्याकाराख्यविषयत्वाभावात् । विद्यमानसुखादौ तु गत्या तदवच्छिन्नचैतन्यनाशस्यैव संस्कारत्वं कल्प्यते । अन्यथा मनःपरिणामे वृत्तिकल्पने वृत्तावपि तत्कल्पनापत्तेः । अतोऽनावृतस्य मनःपरिणामस्य स्मृतौ तदवच्छिन्नस्य चिन्नाशस्य तत्तादात्म्यापन्नचिन्नाशत्वेनैव हेतुत्वं कल्प्यते । अनावृतत्वं च स्वकाले बोध्यम् । तेन सुखादेः स्वनाशकाले आवृतत्वेऽपि न क्षतिः । अविद्यातत्सम्बद्धशुद्धचिज्जीवादेः स्मृतौ व्यभिचारात् मनःपरिणामत्वनिवेशः । अनावृते-साक्षिमात्रभास्यत्वात् अज्ञानाविषयत्वानवच्छेदके । स्वच्छे-स्वच्छमनःपरिणामत्वेन स्वच्छे । सम्ब-

नारायणी ।

णामरूपवृत्त्या,तदाकारता-निरुक्तसम्बन्धेन सम्बद्धता । ननु यदि वृत्तिद्वारक एव सर्वत्र सम्बन्धस्तर्हि साक्षिमात्रभास्यानां सुखादीनां कथं भानं तत्राह—स्वच्छे त्विति । प्रतिबिम्बसम्बन्धयोग्ये त्वित्यर्थः । स्वतः-(२)

(१) +...+एतच्चिह्नद्वयमध्यगः पाठो घपुस्तके नास्ति ।

(२) यद्यपि सर्वत्र 'वित्तिं विना' इति पाठमुपलभ्य तथैव रक्षितोऽस्माभिस्तथापि 'वृत्तिं विना' इत्येवार्थः कार्यः ।

नप्रसङ्गः। ननु ब्रह्मणः कथमावरणम्? निरवद्यस्वप्रकाशत्वेन सर्वज्ञत्वात्। सत्यम्। स्वसम्बद्धसर्वभासकतया सर्वज्ञमपि अन्तःकरणावच्छिन्नजीवाज्ञानविषयतया आवृ-

न्यायरत्नावली।

न्धमात्रेणेति। मनसो ब्रह्मणि तादात्म्यं शुक्तिरूप्यादौ सामानाधिकरण्यम्। (१)ईशप्रसादधर्माधर्मादौ स्वावच्छिन्नत्वसम्बन्धो यत्र हि मनसि यागादिप्रयत्नः, तदवच्छेदेन ईश्वरोपाधिः प्रसादरूपेण परिणमते। तथा च नानाविधानां मनस्सम्बन्धानां विषयसाक्षात्कारघटकत्वेनाननुगमोऽपीति भावः। स्वं प्रत्यनावृतत्वेऽपि जीवं प्रत्यावृतं ब्रह्मेत्याशयेन समाधत्ते—सत्यमिति। अन्तःकरणावच्छिन्नेनेत्यनेन मनोऽवच्छिन्नचित् अविद्याप्रतिबिम्बो

नारायणी।

वित्ति विना, भानप्रसङ्गः—अपरोक्षभानप्रसङ्गः, स्वतःसम्बद्धानां धर्माधर्मादीनामिति शेषः। अयमत्र निष्कर्षः। घटाद्यवच्छिन्नान्तःकरणवृत्तौ चैतन्यस्य प्रतिबिम्बात् प्रतिबिम्बाश्रयवृत्त्यवच्छेदकत्वेन घटादौ सुखाद्यवच्छेदेन ब्रह्मचैतन्ये प्रतिबिम्बात्प्रतिबिम्बाश्रयब्रह्मचिदवच्छेदेन सुखादौ ब्रह्मचैतन्यावच्छेदेन ब्रह्माकारकवृत्तौ प्रतिबिम्बाश्रयवृत्त्यवच्छेदकत्वेन ब्रह्मणि प्रातिभासिकरजताद्यवच्छेदेन रजताकारायामविद्यावृत्तौ प्रतिबिम्बात् प्रतिबिम्बाश्रयवृत्त्यवच्छेदकत्वेन सम्बन्धेन प्रातिभासिके सम्बन्धत्वाज्जीवस्य घटसुखब्रह्मरजतादिभानं न धर्मादेः। धर्माद्यवच्छेदेन धर्मानुस्यूतचैतन्ये प्रतिबिम्बाभावात् कल्पनाहेतोरभावात् फलानुसारित्वात्कल्पनाया इति दिक्। ननु विषयावभासकमधिष्ठानं ब्रह्मचैतन्यमावृतमित्युक्तं तन्न युक्तम्, तस्यावृतत्वे जगदान्ध्यप्रसङ्गादिति भ्रान्तः शङ्कते—नन्विति। ब्रह्मणः—अधिष्ठानभूतचैतन्यस्य। निरवद्येति—अविद्यातीतेत्यर्थः। सर्वज्ञत्वात्—वशीकृतमायत्वेन सर्वविषयकेक्षणादिसमर्थत्वात्। अन्यथान्याविशिष्टत्वेन तस्य जगदध्यासाधिष्ठानत्वानुपपत्तेः, अविद्याविशिष्टस्याप्याध्यासिकत्वादिति भावः। स्वं प्रत्यावृतत्वमेव सार्वज्ञ्यभावप्रयोजकं न तु जीवं प्रत्यपि, ब्रह्मणश्च जीवं प्रत्येवावृतत्वमित्यभिप्रेत्य समाधत्ते—सत्यमिति। स्वसम्बद्धसर्वावभासकतया—स्वाध्यस्तजग-

(१) ईशप्रसादादिरूपधर्मादाविति घपुस्तके।

तामिति व्यपदेशात् । तस्मात् ब्रह्म जगदुपादानमिति पक्षे चिदुपरागार्था आवरणभङ्गार्था च वृत्तिः । (१)+

न्यायरत्नावली ।

वा जीव इत्यादि सर्वपक्षेषु मनोवृत्तिसापेक्षं घटादिकिञ्चिज्ज्ञत्वमेव जीवस्येति सूचितम् । जीवाज्ञानविषयतया—जीवं प्रत्यावारकं यदज्ञानं तद्विषयतया । तस्मात्—ब्रह्मण्यावृतत्वसम्भवात् । ननु घटाद्यवच्छिन्नमनोवृत्तेरुत्पत्तिक्षणे तत्र प्रतिबिम्बोत्पत्तिः तदुत्तरक्षणे वा ? । आद्ये प्रतिबिम्बघटितचिदुपरागस्य उक्तवृत्तिफलत्वासम्भवः । ब्रह्माकारवृत्तौ तदुत्पत्तिक्षणद्वितीयक्षण एव ब्रह्मण्यावरणोच्छेदकत्वेन प्रतिबिम्बसम्पादकतया वैरूप्यापातश्च । द्वितीये मनस्सुखादावपि तदुत्पत्तिक्षणे प्रतिबिम्बाभावस्य तुल्यत्वेन भानाभावापत्तिः । न चेष्टापत्तिः । साक्षिमात्रवेद्यस्याभासमानतया विद्यमान(२)त्वास्वीकारात् । दर्पणाद्युपाधेः मुखादिसन्निधानस्य प्रतिबिम्बोत्पत्तिहेतुत्वेन तदुत्पत्तिद्वितीयक्षण एव तत्स्वीकारेऽपि सप्रतिबिम्बस्य मनसः परिणामे सुखादौ वृत्तिज्ञाने च सप्रतिबिम्बत्वस्य स्वाभाविकत्वेन तदुत्पत्तिक्षण एव सम्भवादिति चेत् । अत्रोच्यते । आद्यपक्ष एव युक्तः । 'अज्ञातं चैतन्यं प्रमेयं ज्ञातं फलमि'त्यनेन मूलेन हि चिदुपरागक्षणे फलत्वं तत्पूर्वं प्रमेयत्वं चोक्तम् । तत्र घटादौ वृत्तेरुपरागघटकत्वमेव उपरागफलकत्वम् । ब्रह्मणि तु आवरणभङ्गक्षणे प्रतिबिम्बोत्पादकत्वेन तद्घटितोपरागफलकत्वं मुख्यमेव । वृत्तेरावरणभङ्गार्थत्वं तु आवरणविरोधित्वं वृत्त्यधिकरणक्षणत्वम् आवरणकालपूर्वत्वाभावव्याप्यमिति यावत् । वस्तुतस्त

नारायणी ।

त्प्रकाशकतया जीवाज्ञानविषयतया जीवं प्रत्येवावरकं 'नास्ति न भाती'तिव्यवहारजनकं यदज्ञानं तद्विषयतया । उपसंहरति—तस्मादिति । वि

(१) +... + अयं चिह्नितः पाठः कपुस्तके नास्ति ।
(२) विद्यमानभानत्वेति घपुस्तके ।

जीवोपादानत्वपक्षे तु आवरणभङ्गार्थैवेति+ । नन्वेकेनै-

न्यायरत्नावली ।

वृत्त्युत्पत्तिक्षणे (१)एवावरणनाशस्य युक्तत्वात् आवरणकालपूर्वत्वा-नधिकरणक्षणाऽव्यवहितोत्तरत्वमेवावरणविरोधित्वम् । एवं च ब्रह्मण्यपि वृत्तेरुपरागफलकत्वं न मुख्यम् । एवं चोपरागसम्पादकसामग्रीविशिष्टमज्ञानशब्देनोच्यते । प्रमोत्पत्तियोग्यमेव प्रमेयशब्देनोच्यते । प्रमाविषयत्वं तु प्रमाकाल एव । यत्तु वृत्तेश्चिदुपरागार्थत्वपक्षेऽपि घटाद्यवच्छिन्ने ब्रह्मचैतन्ये अज्ञानाविषयत्वं स्वीक्रियते । तद्विशिष्टमज्ञातशब्देनोच्यते । तथा च (२)प्रमावृत्त्या ज्ञानविषयत्वमेव प्रमेयत्वम् । एवं च घटाद्यवच्छिन्नचैतन्येऽपि आवरणोच्छेदक्षणे प्रतिबिम्बोत्पादिका वृत्तिः । अन्यथा ब्रह्मचैतन्येऽपि आवरणस्वीकारस्य वैयर्थ्यापत्तेः । अत एव स्वच्छेऽप्यावृते प्रमावृत्त्या तदाकारतेऽत्र मूले ब्रह्मणीति विशेष्यवचनं नोक्तम् । तस्मात् सर्वस्याः प्रमाणवृत्तेरावरणोच्छेदक्षणे प्रतिबिम्बोत्पादकत्वमित्यापाततः प्रतिभाति । तन्न रम्यम् । श्रवणादिपूर्वकालीनवृत्तिगतप्रतिबिम्बेन 'ब्रह्म साक्षात्करोमी' ति व्यवहाराभावेन ब्रह्मण्यावरणस्वीकारेऽपि घटाद्यवच्छिन्नब्रह्मचैतन्ये तत्स्वीकारे मानाभावात् । अथानभ्यासदशोत्पन्ने घटाद्याकारवृत्तिज्ञाने सत्प्रतिबिम्बे सत्यपि 'घटं साक्षात्करोमी'त्यादेरभावः तत्रापि तत्स्वीकारे मानमिति चेन्न । तावताप्यभ्यासदशोत्पन्नवृत्तेः पूर्वं तद्विषये आवरणे मानाभावेन सर्वस्या घटाकारवृत्तेर्घटाद्यवच्छिन्नचैतन्यनिष्ठावरण(३)भङ्गा-

नारायणी ।

विनाऽऽवृतानावृतादौ प्रमातृचैतन्यस्य भासकसम्बन्धाभावात् चिदुपरागार्था-प्रमातृचैतन्यसम्बन्धफलिका। आवरणेति-अज्ञाननाशफलिकेत्यर्थः।

(१)—क्षणे नाशस्य इति गपुस्तके खण्डितः पाठः ।

(२) प्रमानिवर्त्याज्ञानविषयत्वमेव प्रमेयत्वमिति रम्यम् ।

(३)—भङ्गाभावात् इति घपुस्तके।

च घटादिज्ञानेनावरणस्य भङ्गे सद्यो मोक्षप्रसङ्गः, अज्ञानस्यैकत्वात् । नानाज्ञानपक्षेऽप्येकस्य जीवस्यैकाज्ञानोपाधित्वात् । न । उत्तेजकेन मणेरिव वृत्त्या आवरणस्याभिभवाङ्गीकारात् । तथा च प्रमाणजन्यान्तःकरणवृत्त्यभावसहकृतमज्ञानं सति भात्यपि वस्तुनि नास्ति न भातीति प्रतीतिजननसमर्थमावरणमित्युच्यते । वृत्तौ जातायां तु अवच्छेदकाभावाद्विद्यमानमप्यविद्य-

न्यायरत्नावली ।

र्थत्वे मानाभावात् । तस्माच्छुक्तिरूप्याकाराया इव घटाद्याकाराया अपि अनभ्यासदशानुत्पन्नवृत्तेः प्रतिबिम्बाश्रयत्वेनैव चिदुपरागार्थकत्वम् । न तु चैतन्यावरणनिवृत्त्यधीनचैतन्यनिष्ठप्रतिबिम्बोत्पादनद्वारा गौरवादिति ध्येयम् । वृत्तेरावरणभङ्गमात्रत्वपक्षे तु प्रमोत्पत्तिक्षणे चैतन्यमा(१)वरणाविशिष्टम् आवरणोच्छेदविशिष्टं वा प्रमाविषयत्वादेव प्रमेयमित्युच्यते । तदुत्तरक्षणे तु फलीभूतस्य साक्षात्करोमीति व्यवहारस्य सम्भवात् फलमित्युच्यते इति दिक् । आवरणस्याज्ञानस्य । नानाज्ञानपक्षे—जीवभेदेनाज्ञानभेदपक्षे । अभिभवं प्रकटयति—तथा चेत्यादि । सहकृतं—विशिष्टम् । जननेति । 'अस्ति भाती'तिव्यवहाराभावप्रयोजकमित्यपि बोध्यम् । अवच्छेदकाभावात्-जनकताप्रतिबन्धकतयोरवच्छेदकस्य वृत्त्यभावस्याभावात्(२) ।

नारायणी ।

आवरणस्य-अज्ञानस्य । नानाऽज्ञानपक्षे जीवभेदेनाज्ञानभेदपक्षे । उत्तेजकेन-प्रतिबन्धकशक्तिविघटकेन मणिमन्त्रमहौषध्यन्यतमेन । वृत्त्या-'अयं घट' इत्यादिविषयकज्ञानेन, आवरणस्य-'घटमहं न जानामी'त्याद्यज्ञानस्य, अभिभवेति-स्वकार्याक्षमत्वेत्यर्थः । एतदेव स्पष्टयति-तथाचेति । सहकृतं विशिष्टम् । जननेति । 'अस्ति भाती'तिव्यवहाराभावप्रयोजकमित्यपि बोध्यम् । अवच्छेदकाभावात्-जनकताप्रतिबन्धकतयोरवच्छेदस्य वृत्त्यभावस्या-

(१) चैतन्यं नावरणविशिष्टमिति गपुस्तके ।
(२) वृत्त्यभावादित्येव गपुस्तके विरुद्धश्चेदम् ।

मानसममेवेति न स्वकार्यसमर्थमज्ञानं तेनाभिभूतमि-

न्यायरत्नावली।

स्वकार्येति।'अस्ती'त्यादिव्यवहाराभावस्य क्षेमसाधारणकार्यत्वाश्रयस्य 'नास्ती'त्यादिव्यवहाररूपकार्यस्य जननसमर्थमित्यर्थः। तथा चोत्तेजकीभूतमन्त्रविशेषाद्यभावविशिष्टमणित्वेन दाहाभावं प्रति कारणता यथा, तथा वृत्त्यभावविशिष्टाज्ञानत्वेन 'अस्ती'त्यादिव्यवहाराभावं 'नास्ति न भाती'ति व्यवहारं च प्रति कारणता। तत्रापि प्रमाविषयत्वसमानाधिकरणमज्ञानविषयत्व'मस्ती'तिव्यवहाराभावे 'नास्ती'ति व्यवहारे च कारणम्। प्रमावच्छेदकत्वाभावसमानाधिकरणमज्ञानविषयत्वं 'भाती'ति व्यवहाराभावे 'न भाती'ति व्यवहारे च कारणम्। साक्षात्कारप्रमाया अवच्छेदकत्वस्य सद्विषये स्वीकारात् तस्यावच्छेदकत्वस्य घटादौ पूर्वं सत्त्वेन उक्ताकारोत्पत्तिः। ब्रह्मणि तु विश्वव्यापकत्वेनावच्छेदकत्वस्य सर्वदा भावेऽपि श्रवणाद्युत्तरसाक्षात्कारस्य सत्त्वे अज्ञानविषयत्वाभावसत्त्वात् विशेष्याभावादेव तादृशाज्ञानविषयत्वाभावरूपस्य (१)सत्त्वान्नोक्तकार्योत्पत्तिः। वस्तुतस्तु 'विदेहकैवल्यपर्यन्तमज्ञानविषयत्वं न निवर्तत' इति वक्ष्यमाणपक्षे श्रवणाद्युत्तरस्यात्मसाक्षात्कारस्य सत्त्वेन 'भाती'तिव्यवहारसिद्धये लौकिकविषयत्वमेवावच्छेदकस्थाने

नारायणी।

भावात्। न स्वकार्येति। यथोत्तेजकाभावविशिष्ट एव मणिर्दाहप्रतिबन्धकः।प्रतिबन्धकतावच्छेदकश्चोत्तेजकाभाव इत्युत्तेजकसत्त्वप्रतिबन्धकतावच्छेदकस्याभावान्न प्रतिबन्धकः तथा चक्षुरादिप्रमाणजन्या या अन्तःकरणवृत्तिस्तदभावविशिष्टमेकज्ञानविरुद्धव्यवहारजनकमुचितव्यवहारप्रतिबन्धकं चेति कारणतावच्छेदकः प्रतिबन्धकतावच्छेकश्च वृत्त्यभाव इति वृत्तिसत्त्वे तदुभयरूपस्याभावात् न स्वकार्ये विरुद्धव्यवहारे उचितव्यवहारप्रतिबन्धे च शक्तमित्यर्थः। तत्सत्त्वेप्युत्तेजकेन मणेरिव तस्य शक्तेर्नाशादिति भावः। तेन—असमर्थहेतुना। एवं सति—घटादिज्ञानस्या-

(१) विशिष्टाभावस्य सत्त्वादित्यादिः घपुस्तके।

न्यायरत्नावली।

वाच्यम्। लौकिकेन्द्रियसन्निकर्षादीनामिव विद्यमानसुखात्मादि-विषयाणामपि तादात्म्येन प्रयोजकत्वे(१) तद्विषयकशाब्दधीवृत्ती-नामपि तन्निष्ठलौकिकविषयताकत्वसिद्धिः। आस्तां वक्ष्यमाणाया अविद्यावृत्तेः विद्यमानसुखादिष्विव(२) *तत्रापि तत्काले 'भाती'-त्यादिव्यवहारः। स्वीक्रियतां वा ब्रह्मणोऽपि शरीराद्यवच्छिन्न-मवच्छेदकत्वम्। न हि शाखादेरवच्छेदकत्वमनवच्छिन्नम्, किन्तु अग्राद्यवयवावच्छिन्नम्। प्रयोजकं तु तत्र पूर्ववल्लौकिकसन्निक-र्षादिकम्। घटादौ तूक्ताज्ञानविषयत्वाश्रयचित्तादात्म्यान्नोक्ताका-रोत्पत्तिः। प्रमावच्छेदकेत्यत्र प्रमापदेनापरोक्षत्वेन प्रमात्वेन च निश्चीयमाना वृत्तिर्बोध्यते। तेनानभ्यासदशापन्ने घटादिज्ञाने आ-पातब्रह्मज्ञाने च सत्यपि तादृशाकारोत्पत्तिः। प्रमाविषयेत्यादौ तु प्रमात्वेन निश्चीयमाना वृत्तिर्बोध्या। तेनातादृशे परोक्षज्ञाने सत्यपि उक्ताकारोत्पत्तिः। अत्रेदं बोध्यम्। सुखादौ (३)वृत्त्यस्वी-कारे तस्मिन् विद्यमानेऽपि 'नास्ति न भाती'ति व्यवहारापत्तिः। अज्ञानविषयाचित्तादात्म्यस्य तत्र सत्त्वात्। न च सुखाद्यवच्छिन्न-चिद्भिन्नमनवच्छिन्नं घटाद्यवच्छिन्नं च चैतन्यमज्ञानाविषय इति वा-च्यम्। अज्ञानविषयत्वस्यावच्छिन्नानवच्छिन्न(४)निष्ठस्य एकत्वे, ब्रह्मणि साक्षात्कृते घटादौ 'नास्ती'त्यादिव्यवहारानुपपत्तेः। नाना-त्वेऽपि ब्रह्माज्ञाने नष्टे तद्विषयत्वसत्त्वानुपपत्त्या तद्दोषतादवस्थ्यात्। अनवच्छिन्नचिन्निष्ठविषयत्वं प्रथमेन तत्त्वज्ञानेन नश्यति, अज्ञानं तु चरमेणैवेति स्वीकारे जीवन्मुक्तस्याज्ञाननाशानुप(५)पत्तिः। अथ

(१) प्रयोजकत्वात्तद्विषयकशाब्दादिवृत्तीनामपीत्यादिः घपुस्तके पाठः।

(२) अयमत्राधिकः पाठः घपुस्तके।—सुखादिष्विव* श्रवणाद्युत्तरमनोवृत्तिवि-षयताकालावच्छेदेनात्मन्यपि विषयता, तथाच तेष्विव*तत्रापि इत्यादिः समोऽग्रे।

(३) वृत्त्यस्वीकारादिति घपुस्तके। (४)—नवच्छिन्नाचिन्निष्ठस्येत्यादिः घपुस्तके।

(५)—नाशानुभवानुपपत्तिरिति घपुस्तके।

त्युच्यते। नन्वेवं सति ब्रह्मज्ञानेनाप्यविद्याया अनिवृ-

न्यायरत्नावली।

'ब्रह्माज्ञानं नष्ट'मित्यनुभवस्य (१)किमुक्तकल्पनागौरवेण। तस्माद् ब्रह्मसाक्षात्कारोत्तरं घटादौ 'नास्ती'तिव्यहारानुपपत्तिवारणाय विदेहकैवल्यपर्यन्तमज्ञानविषयत्वं न निवर्तते। एकाज्ञानपक्ष इत्येव वाच्यम्। तथा च घटाद्यवच्छिन्नचैतन्येऽप्यज्ञानविषयत्वस्वीकारे मानाभावात् शुद्धचिन्निष्ठेनैवाज्ञानविषयत्वेन 'घटादिकं नास्ती'त्यादिव्यवहारादिकम्। तथा च सुखादावपि तदापत्तिर्दुर्वारा। तस्मात् घटाद्याकारवृत्तीनामिव मनस्त्वस्य मनोधर्मत्वस्य च उत्तेजकत्वं वा मनस्सुखादिषु विद्यमानेष्वेकैवा(२)विद्यावृत्तिर्वा स्वीक्रियते। सृष्ट्यारम्भकालोत्पन्नाविद्यावृत्तौ मनस्सुखादीनामवच्छिन्नत्वसम्बन्धेन विषयत्वसम्बन्धेन चोत्पत्तिः स्वीक्रियते। तथा च धीत्वज्ञा(३)नरूपेण वृत्तित्वेनोत्तेजकत्वस्वीकारान्नानुपपत्तिः। अत एव शुक्तिरूप्यादेरपि तद्वृत्तिविषयत्वमेव स्वीक्रियते, न तु वृत्त्यन्तरविषयत्वम्। प्रतिभासव्याप्यस्थितिकत्वरूपेण विषयतासम्बन्धेनोत्पत्तिं प्रति तद्वृत्तिव्यक्तेर्हेतुत्वस्वीकारात्। एवं च तद्वृत्तेः सृष्टिकाले नाशाभावेऽपि प्रतिभासव्याप्यसुखशुक्तिरूप्यादेः स्मृतौ तदवच्छिन्नचिन्नाशस्यैव संस्कारविधया हेतुत्वमिति दिक्। एवं सति—घटाद्याकारवृत्तेरज्ञानानुच्छेदकत्वे सति। अनिवृत्तेरिति। 'या या प्रमा सा सा स्वसमान-

नारायणी।

ज्ञानानाशकत्वे सति। अनिवृत्तेः-अनाशात्। अनिर्मोक्षप्रसङ्गः-तन्नाशे स्वरूपप्राप्तिलक्षणमोक्षस्यासम्भवप्रसङ्गः। तयोर्नाश्यनाशकभावदर्शनं

(१)—नानुपपत्तिः, ब्रह्मनिष्ठविषयताया नष्टत्वेन तद्विशिष्टरूपेणाज्ञानस्य नष्टत्वादिति चेत्तर्हि वृत्त्यभावविशिष्टस्याज्ञानविषयत्वस्यात्यन्ताभाव एव उक्तानुभवविषयोस्तु किमुक्तकल्पनागौरवेणेति घपुस्तके पाठः। युक्तश्चायम्।

(२)—एकैकाविद्येति गपुस्तके। (३) धीत्वजातिरूपेणेति घपुस्तके।

त्तेरनिर्मोक्षप्रसङ्गः। न। तत्त्वमस्यादिवाक्यार्थज्ञानादवि-द्यानिवृत्त्यभ्युपगमात्। स्वविषयविषयकप्रमात्वेनैव अवि-द्यानिवर्तकत्वाभ्युपगमात्। महावाक्यार्थज्ञानस्यैव अबा-

न्यायरत्नावली।

विषयकाज्ञानतत्प्रयुक्तोच्छेदिके'ति व्याप्तिग्रहात् ब्रह्मप्रमाया अज्ञा-नोच्छेदकत्वं स्वीक्रियते। उक्तव्याप्तिश्च घटादिप्रमायां साध्यसाध-नयोः सहचारदर्शनेन ग्राह्या। तच्च न सम्भवतीति भावः। अविद्यानिवृत्त्यभ्युपगमात्—नानाविद्योच्छेदाभ्युपगमात्। अयं च निवर्तकत्वादित्यत्र हेतुः। स्वविषयविषयकप्रमात्वेनैवाविद्यानिवर्त-कत्वादिति। 'या अज्ञानविषयविषयिका प्रमा सा तदज्ञानतत्प्रयुक्तो-च्छेदिके'ति व्याप्तेः पुरुषान्तरीयब्रह्मज्ञानेषु(१) सहचारदर्शनेन ग्रहा-दज्ञानसमानविषयकप्रमात्वव्यापकमज्ञानतत्प्रयुक्तोच्छेदकत्वमित्यस्य नियमस्य सम्भवादित्यर्थः। प्रमात्वम् 'असम्भावनादिप्रयुक्ताप्रा-माण्यबुद्ध्यविषयत्वे सत्यबाधितविषयकत्वम्'। तदनुक्तावापातब्र-ह्मज्ञाने घटादिज्ञाने च व्यभिचारः, अतो विशिष्टरूपेण व्याप्य-ता। प्रमात्वात्—उक्तविशिष्टप्रमात्वात्। तथा चाज्ञानसमानविषयकत्वं ब्रह्मज्ञानस्यैवेति तत्रैव सहचारस्य वाच्यतया घटादिज्ञाने तदभा-वेऽपि न क्षतिरिति भावः। ननु तर्हि घटादिज्ञानस्य प्रमात्वव्यव-

नारायणी।

विना ब्रह्मज्ञानादज्ञाननिवृत्त्या मुक्तिरिति निर्णयस्यासम्भवादिति भावः। नानाऽज्ञानवादिवाचस्पतिमिश्रमते समाधानमाह—तत्त्वमिति। अविद्येति। नानाऽविद्याच्छेदाभ्युपगमात्। तथाच पुरुषान्तरे शुकादौ च जीवन्मुक्ते तयोर्नाश्यनाशकभावग्रहान्नानिर्णय इति भावः। ननु घटादिज्ञानान्नाज्ञान-निवृत्तिः किन्तु तत्त्वमस्यादिवाक्यादेवेत्यत्र किं विनिगमकम्? तत्राह—स्व-विषयेति। अज्ञानविषयविषयकप्रमात्वेनेत्यर्थः। प्रमात्वं चाबाधितविष-यत्वं तच्च तत्त्वमस्यादिजन्यज्ञानस्यैव नान्यस्येत्याह—महावाक्येति। तत्त्व-रूपदार्थाभेदज्ञानस्येत्यर्थः। अबाधितेति—कालत्रयाबाधितविषयतया प्रमा-

(१)—ज्ञानेष्वुक्तसहचारेति घपुस्तके।

धितविषयतया प्रमात्वात्। प्रत्यक्षादीनां तु बाधितविषयतया भ्रमत्वेऽपि व्यवहारसामर्थ्येन प्रामाण्याभिमानात्। ज्ञानादज्ञाननिवृत्तेरन्यत्रादर्शनञ्चाकिञ्चित्करम्, स्वानुभवसिद्धत्वादन्यथानुपपत्तेश्च (१)सर्वतो बलवत्त्वात्। (२) तदुक्तम्—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका।
पिनष्ट्यदृष्टिवैमत्यं सैव सर्वबलाधिका॥

न्यायरत्नावली।

हारः कथम्? तत्राह—प्रत्यक्षेत्यादि। नन्वेकजीववादे कथमुक्तव्याप्तिग्रहः तत्राह—ज्ञानादिति। अन्यथानुपपत्तेः—'विद्वान्नामरूपाद्विमुक्त' इत्यादिश्रुत्यन्यथानुपपत्तेः। अदृष्टिवैमत्यम्—अन्य-

नारायणी।

त्वात् तथा चानधिगताबाधितविषयकं यज्ज्ञानं तदेवाज्ञाननाशकम्, तच्च तत्त्वमस्यादिजन्यमेव, शुद्धचित एवानधिगताबाधितरूपत्वात्, अतो बाधितविषयात् घटादिज्ञानात्तदनिवृत्तावपि न हानिरिति भावः। ननु यदि तत्त्वमस्यादिजन्यं ज्ञानमेव प्रमा तदा कथं शुक्तिज्ञानं प्रमा रजतज्ञानं भ्रम इति व्यवहारस्तत्राह—प्रत्यक्षेति। शुक्त्यादिप्रत्यक्षप्रतीतीनां बाधितविषयतया—अदृष्टदृष्टग्रनष्टस्वभावत्वेन वर्तमानकालेऽपि वस्तुतो बाधितवस्तुग्राहित्वेन, भ्रमत्वेपि—शुक्तिरजतादिज्ञानवद् भ्रमव्यक्तित्वेऽपि, व्यवहारसामर्थ्येन—व्यवहारकालाबाधितार्थविषयकत्वेन, प्रामाण्याभिमानात्—प्रमात्वव्यवहारात्। एकजीववादे समाधानमाह—ज्ञानादिति। स्वानुभवेति। शास्त्रप्रमाणैकसमधिगम्यफलस्य भावितदनुभववेद्यत्वादित्यर्थः। यद्यन्यत्रादर्शनमेव तर्हि शमदादीनां का प्रत्याशा तत्राह—अन्यथेति। मुक्त्यर्थं प्रवृत्तस्य मुक्तिं विना शास्त्रप्रामाण्याद्यनुपपत्तेरित्यर्थः। अपसिद्धान्तशङ्कां निराकरोति—तदुक्तमिति। चेत्—यदि अन्यथानुपपत्तिः—'तरति शोकमात्मवि'दित्यादिश्रुतेर्मुक्तिं विना प्रामाण्यानुपपत्तिः वस्तुप्रसाधिका ज्ञानाज्ञानयोर्नाश्यनाशकभावज्ञापिकाऽस्ति तदा सैव अन्यथानुपपत्तिरेव अदृष्टिवैमत्यं दृष्टान्तादर्शनेन विवादं पिनष्टि निवारयति, तत्र हेतुगर्भं विशेषणं—सर्वेति।

(१) सर्वतः प्रत्यक्षादिसर्वप्रमाणेभ्यो बलवत्त्वात् इतरप्रमाणविरोधोपमर्दनपूर्वकं स्वार्थसाधकत्वादित्यर्थः। (२) तदुक्तं खण्डनकारैरिति शेषः।

इति। अथवा मूलाज्ञानस्यैवावस्थाज्ञानानि घटादिविषयावरणानि। अज्ञानस्य ज्ञानप्रागभावस्थानीयत्वेन यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्यभ्युपगमात् एकेन ज्ञानेन एकाज्ञानस्यैव नाशात् घटादिज्ञानेन आवरणनाशे न काचिदनुपपत्तिः। नन्वनुमानादिभिरावरणं निवर्तते न वा? । आद्ये साक्षात्कारिभ्रमस्यापि शङ्खपीतत्वादेर्दिङ्मोहादेश्च श्वेतत्वाद्यनुमानादिना निवृत्तिप्रसङ्गः। अधिष्ठानाज्ञानोपादानकत्वे भ्रमस्य तन्निवृत्तौ

न्यायरत्नावली।

त्रादर्शनेन विवादम्। विषयावरणानि–विषयावच्छिन्नचिदावरणानि। एकाज्ञानस्येति। (१)तज्ज्ञानाव्यवहितपूर्वतज्ज्ञानविषयावारकं यदज्ञानं तस्यैव तज्ज्ञानमुच्छेदकम्। सर्वश्चाज्ञानं न सर्वदा आवृणोतीति भावः। अनुमानादिभिः–अनुमित्यादिभिः। तन्निवृत्तौ–अधिष्ठानाज्ञा-

नारायणी।

सर्वप्रमाणाधिकेत्यर्थः। प्रमाणान्तरविरोधोपमर्द्दनेन स्वार्थसाधिकेति यावत्। मुक्तिप्रतिपादकशास्त्रान्यथानुपपत्त्यैव ज्ञानाज्ञानयोर्नाश्यनाशकभावसिद्धिरिति संक्षेपः। सर्वेषामेकमेवाज्ञानमिति पक्षे जीवभेदेनाज्ञानभेदपक्षेऽपि बाह्यविषयज्ञानमज्ञानस्याभिभावकमात्रं न तु नाशकं सकलविषयकाज्ञानस्यैकत्वादेकज्ञानेन तन्नाशे सर्वाज्ञाननाशापत्तेरित्युक्तम्, तन्न सम्यक्। मूलाज्ञानैकत्वेऽपि तूलाज्ञानानां भेदेन तत्रापि नाश्यनाशकभावोपपत्तेः। न च गौरवम्, प्रागभावस्थानीयत्वेन गौरवाभावादित्यभिप्रेत्याह—अथवेति। अवस्थाज्ञानानि–शुक्तिरूप्याज्ञानानि, विषयावरणानि–विषयावच्छिन्नचिदावरणानि। गौरवं निराकरोति–अज्ञानस्येति। स्थानीयत्वेनेति। 'घटं न जानामी'त्यादिप्रतीतेरुक्तरीत्या प्रागभावेनानिर्वाहादज्ञानमेवावश्यकमिति प्रागभावाङ्गीकार एव गौरवादनुचित इति ज्ञापितम्। एकाज्ञानस्येति। यज्ज्ञानाव्यवहितपूर्वं यज्ज्ञानविषयावरकं यदज्ञानं तस्यव ज्ञानमुच्छेदकं सर्वं चाज्ञानं न सर्वदाऽऽवृणोतीति भावः। अनुमानादिभिः—अनुमित्यादिभिः। साक्षात्कारीति—अपरोक्षेत्यर्थः। पीत-

(१) तज्ज्ञानाव्यवहितपूर्वतज्ज्ञानेत्यादिः घपुस्तके।

निवृत्तेः । यौक्तिकज्ञानेन च ब्रह्मणः अवि-द्यानिवृत्तेः साक्षात्कारार्थं श्रवणमननापेक्षा न स्यात्। द्वितीये च वह्न्यादिव्यवहारो न स्यात्, प्रतिबन्धकस्य विद्यमानत्वात्। उच्यते। द्विविधमावरणम्। एकम-सत्त्वापादकमन्तःकरणावच्छिन्नसाक्षिनिष्ठम्। अन्य-दभानापादकं विषयावच्छिन्नब्रह्मचैतन्यनिष्ठम्। 'घट-

न्यायरत्नावली।

ननिवृत्तौ, यौक्तिकज्ञानेन—वाचस्पत्यभ्युपगतेन 'अहं ब्रह्मास्मी'ति परोक्षज्ञानेन। एतेन विवरणादिमते श्रवणादिपूर्वज्ञानस्यापि अपरोक्षत्वा-दिदमयुक्तमित्यपास्तम्। अथवा यौक्तिकेति अपरोक्षत्वेनाज्ञायमा-नेत्यर्थः। आत्मविषयकशाब्दज्ञानस्य अपरोक्षस्यापि अपरोक्षत्वेना-ज्ञायमानस्य नापरोक्षाध्यासमूलाज्ञानोच्छेदकत्वमिति भावः। व-ह्न्यादिव्यवहारः—'वह्निरस्ती'ति व्यवहारः। द्विविधं—परस्परासङ्कीर्णधर्मद्वयविशिष्टम्। असत्त्वापादकं—नास्तीति धीप्रयोजकतावच्छेदकाखण्डधर्मवत्। अन्तःकरणावच्छिन्नसाक्षिनिष्ठं—मनोवच्छिन्ना साक्षिनिष्ठाऽऽश्रयता यस्य तादृशम्। विषयावच्छिन्न-ब्रह्मचैतन्यनिष्ठं—घटाद्यवच्छिन्ना ब्रह्मनिष्ठाऽऽश्रयता यस्य ता-

नारायणी।

त्वादेरित्यादिना दिङ्मोहादिपरिग्रहः। श्वेतत्वाद्यनुमानादिना—'अयं श्वेतः शङ्खत्वात् शङ्खान्तरवदि'त्यनुमानादिना। आदिपदादाप्तवाक्यजशाब्दबोधपरिग्रहः। नन्वपरोक्षप्रमां विना कथमपरोक्षभ्रमनिवृत्तिः स्यात्तत्राह—अधिष्ठानेति। तन्निवृत्तौ—(अधिष्ठानाज्ञाननिवृत्तौ)। कारणनाशे कार्यनाशावश्यंभावादिति भावः। यौक्तिकेति। द्वैतनिरासपूर्वकाद्वैतसाधकहेतुजन्यज्ञानेन, साक्षात्कारार्थम्—ऋतंभरा प्रज्ञेत्युक्तापरोक्षप्रमार्थम्। श्रवणेति। आचार्यवक्तृकश्रुतिकरणकश्रवणतत्पूर्वकमनननिदिध्यासनानामपेक्षा न स्यात् तर्कमात्रेणैव फलसद्भावसम्भवादिति भावः। वह्न्यादेति। 'वह्निरस्ती'ति व्यवहारः। प्रतिबन्धकस्य व्यवहारकारणीभूताभावप्रतियोगिनोऽज्ञानस्य विद्यमानत्वात् अज्ञानस्य यौक्तिकज्ञानादनिवृत्तेरिति भावः। द्विविधं—परस्परासङ्कीर्णधर्मद्वयविशिष्टम्। असत्त्वापादकं-'ना-

महं न जानामी'त्युभयावच्छेदानुभवात् । तत्राद्यं परोक्षापरोक्षसाधारणप्रमाणज्ञानमात्रेण निवर्तते । अनुमितेऽपि वह्न्यादौ नास्तीति प्रतीत्यनुदयात् । द्वितीयं तु साक्षात्कारेणैव निवर्तते । यदाश्रयं यदाकारं ज्ञानं तदाश्रयं तदाकारमज्ञानं नाशयतीति नियमात् ।

न्यायरत्नावली ।

दृशम् । उभयावच्छेदानुभवात्-उभययोरेकैकावच्छिन्नाश्रयताकाज्ञानयोरुक्ताश्रयत्वानुभवात् । एकाज्ञानपक्षे अज्ञानस्य घटावच्छिन्ननानाविषयताकत्ववत् मनोघटाद्यवच्छिन्नाश्रयताकत्वं सम्भवत्येवेति तत्पक्षेऽपि 'घटं न जानामी'त्युभयावच्छेदेनानुभवोपपत्तिः । यदि च तत्पक्षे घटाद्यवच्छिन्नान्यज्ञानाविषयत्वानि न स्वीक्रियन्ते, 'घटज्ञानेन घटाज्ञानं नष्ट'मित्यादिप्रत्ययस्य उक्तविषयतानाशविषयकत्वानुरोधात् तत्स्वीकारः । तादृशप्रत्ययस्य नोक्तनाशो विषयः । अनन्तानामवच्छिन्नविषयतानां कल्पने गौरवात्, किन्तु दृश्यविषयत्वसमानाधिकरणं यत् घटाद्यात्मकाचिद्वृत्त्यज्ञानविषयत्वं तदत्यन्ताभावो विषय इति तत्स्वीकारो व्यथ इति चिन्त्यते, तदा पल्लवाज्ञानानामेवोक्ताश्रयताकत्वम् । एकाज्ञानपक्षे 'घटं न जानामी'ति धीस्तु घटात्मकाचिद्वृत्तिदृश्यविषयत्वसमानाधिकरणविषयताकाज्ञानवानहमित्याकारेति भावः । यदाकारं—यादृशविषयताकम्, तन्निष्ठं—तन्मात्रनिष्ठमेव । आलोकतमसोस्तथानियमस्य दृष्टत्वात् ज्ञानाज्ञानयोरपि स कल्प्यते । आ-

नारायणी ।

स्ती'तिधीप्रयोजकतावच्छेदकाखण्डधर्मवत् । अन्तरिति-मनोवच्छिन्नसाक्षिणि निष्ठा वृत्तिर्यस्य तादृशम् । अभानापादकं—'न भाती'ति व्यवहारप्रयोजकतावच्छेदकाखण्डधर्मवत् । विषयेति । विषयानुस्यूतब्रह्मचैतन्ये निष्ठा वृत्तिर्यस्य तादृशम् । उभयेति । मनोघटाद्यवच्छेदेन चैतन्येऽज्ञानानुभवात् । प्रकृतभेदकल्पनाफलमाह—तत्रेति । यदाश्रयं—यदाश्रितम् । (यदाकारं—यद्विषयकम्) । तदाकारं—तद्विषयम् । नियमात्—प्रका-

परोक्षज्ञानस्य इन्द्रियविषयसन्निकर्षाभावेन ज्ञानस्यान्तः-करणमात्राश्रयत्वात् । अपरोक्षज्ञानस्यैव (१)विषयव्यापारजन्यत्वेन विषयान्तःकरणोभयजन्यत्वेन तदुभयनिष्ठत्वात् । तदुक्तम्—

परोक्षज्ञानतो नश्येदसत्त्वावृत्तिहेतुता ।
अपरोक्षधिया नश्येदभानावृत्तिहेतुता ॥

इति । तेनानुमानादावसत्त्वावरणनाशात् तत्र तद्व्यवहारः । अभानावरणनिवृत्त्या च सोपाधिकसाक्षा-

न्यायरत्नावली ।

लोकमनोवृत्त्यो'रस्ति भाती'तिव्यवहारप्रयोजकत्वरूपस्य प्रकाशत्वरूपस्य तमोऽज्ञानयो'र्नास्ति न भाती'ति व्यवहारप्रयोजकत्वस्य चाविशिष्टत्वात् । असत्त्वावृत्तिहेतुता—'नास्ती'ति व्यवहारप्रयोजिकाऽविद्या । अभानावृत्तिहेतुता—'न भाती'ति व्यवहारप्रयोजिकाविद्या । असत्त्वरूपायां सत्त्वविरोधिन्यां नास्तीति व्यवहाररूपायां वा वृत्तौ हेतुता यस्या इत्यादि व्युत्पत्तेः । व्यवहारः—'अस्ती'ति व्यवहारः । अत्रेदं विभावनीयम् । असत्त्वापादकाज्ञानस्यापि विषयावच्छिन्नचिदाश्रयताकत्वम् । अन्यथा 'ह्रदो वह्निमानि'ति ज्ञानस्य ह्रदविशेष्यतावच्छिन्नवह्निप्रकारताकत्वं न स्यात् । ह्रदवह्निभ्यां ये चितस्तादात्म्ये तयोर्विशेष्यताप्रकारतारूपयोर्मिथो ऽवच्छेद्यावच्छे

नारायणी ।

शतमसोस्तथादर्शनादिति भावः । प्रकृतनियमोक्तेः फलमाह—परोक्षेति । ज्ञानाकारकज्ञानस्येत्यर्थः । अन्तरिति—अन्तःकरणमात्राश्रितत्वात् । तथाच विषयावच्छिन्नाभावान्न विषयावच्छिन्नज्ञाननाशे समर्थमिति भावः । अपरोक्षस्य—ज्ञानाकारणकज्ञानस्य । तथा चेदमेव समानाश्रयविषयकं विषयताज्ञाननाशे समर्थमिति भावः । असत्वेति । नास्तीति व्यवहारप्रयोजिकाऽविद्या, स्वार्थे भावप्रत्ययः । अभानेति—न भातीति व्यवहारप्रयोजिकाऽविद्या, तेन—द्विविधहेतुमद्धात्रेन, तद्व्यवहारः—विष-

(१) विषयेन्द्रियसन्निकर्षात्मकव्यापारजन्यत्वेनेति कपुस्तके ।

न्यायरत्नावली।

दकभावस्य वाच्यत्वेन हृदचित्तादात्म्यावच्छेदेन चिति तादात्म्ये वह्न्युत्पत्तेरावश्यकत्वात्। न च 'तद्घटध्वंसवानयमि'त्यादौ भिन्नकालीनानां तद्घटध्वंसयोः चित्तादात्म्यानां 'तद्घटात्यन्ताभाववदिदमि'त्यादौ तद्घट(१)तदत्यन्ताभावयोः चित्तादात्म्यानां भिन्नदेशावच्छिन्नानां चावच्छेद्यावच्छेदकभाववत् मनोवच्छिन्नवह्निचित्तादात्म्यस्य हृदचित्तादात्म्येन भिन्नदेशेनावच्छिन्नत्वमिति वाच्यम्। यद्यप्यनिर्वचनीयवादे प्रतीत्यनुरोधे क्वचित्किञ्चिदनुपपन्नं स्वीक्रियते, तार्किकादिमते भिन्नकालीनयोर्विषयविषयित्वादिवत्, घटाभावादौ तदाधारत्वादिवच्च, तथाऽपि तत्परिहारसम्भवे तत्स्वीकारस्यान्याय्यत्वात्। अत एव परोक्षभ्रमस्यान्यथाख्यातित्ववादिनो निरस्ताः। विशेष्यतावच्छिन्नप्रकारत्वासम्भवात्। तस्माद्द्विविधमप्यज्ञानमुभयावच्छिन्नाश्रयताकमेव वा। (२)यथा हि—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।

इत्यनेन मूलाज्ञानाश्रयतानवच्छिन्नत्वेनोक्ता तथापि'ब्रह्म न जानामी'त्यत्र प्रमातृविशेषनिरूपितत्वेनाज्ञानं भाति, तथा प्रमातृविशेषानाश्रितमप्यज्ञानं प्रमातृविशेषनिरूपितत्वेन 'घटमहं न जानामी'त्यादौ भाति, तत्पुरुषीयब्रह्मप्रमया पुरुषान्तरीयब्रह्माज्ञानानिवृत्त्या प्रमातृनिरूपितत्वसम्बन्धस्य मूलाज्ञाने क्लृप्तत्वेन पल्लवाज्ञानेऽपि तस्यैव व्यवस्थापकतया कल्पनाया युक्तत्वात्। तथा चासत्त्वापादकाज्ञाननिवर्तकत्वं प्रमामात्रस्य तत्समानविषयत्वेनैव अभानापादकाज्ञाननिवर्तकं तदवच्छेदकावच्छिन्नप्रमात्वेनेति। तादृशप्रमाया विषयावच्छिन्नत्वं विषयेन्द्रियसन्निकर्षाद्यधीनं स्वीक्रियते। तदवच्छेदकावच्छिन्नत्वं प्रमायां स्वानव-

(१) तद्घटिततदत्यन्ताभावेति घपुस्तके।
(२) मेव वा तथाहि इत्यादि घपुस्तके।

त्कारभ्रमनिवृत्तिरिति । तस्मान्निर्धर्मकस्याप्यात्मनोऽविद्ययान्तःकरणतादात्म्याध्यासात् तद्धर्मकर्तृत्वभोक्तृ-

न्यायरत्नावली ।

च्छेदकावच्छिन्नाज्ञानकत्वम् । तेन ब्रह्मज्ञाने स्वावच्छेदकाभावेऽपि न क्षतिः । न'न्वस्ति भाती'ति व्यवहारप्रतिबन्धकत्वस्य 'नास्ति न भाती'ति व्यवहारजनकत्वस्य तदाश्रयानन्ताज्ञानानां कल्पनामपेक्ष्य सुखादिसाधारण्येन (१)प्रमापरोक्ष एवा'स्ति भाती'-तिव्यवहारनियामकत्वम् । तद्विषयत्वयोरस्तित्वभानत्वरूपत्वादिति चेन्न । असत्त्वापादकाज्ञानशून्या चिदस्तित्वम् । अभानापादकाज्ञानशून्या चिद्भानम् । असत्त्वाभाने—तादृशाज्ञानाभ्यां विशिष्टचितौ, तथा च प्रमाकाले विषयसत्त्वात् 'अस्ति भाती'ति व्यवहारेऽपि तदन्यकाले विषयासत्त्वादेव तदभावः, विषयासत्त्वादेव च 'नास्ति न भाती'ति व्यवहार इति मन्मते नाज्ञानस्य प्रतिबन्धकत्वं जनकत्वं च स्वीक्रियते । व्यवहारविधया व्यवहारे परं भानाभानसत्त्वासत्त्वानां प्रयोजकत्वम् । तच्च परैरपि वाच्यम् । अज्ञानाश्रयतायां देशेनेव कालेनाप्यवच्छिन्नत्वात् 'इदमिदानीमिह नास्ती'त्यादिधीः(२)। 'इदमिदानीमिहास्ती'त्यत्राप्यस्तित्वघट(३)-ककालज्ञाने कालाद्यवच्छिन्नाश्रयताकत्वधीः। अत्यन्ताभावस्येवाज्ञानस्याप्यनादेरप्याश्रयतायाः कालाद्यवच्छिन्नत्वमिति दिक् । त-

नारायणी ।

यव्यवहारः, तस्मादध्यासे दोषाभावात् । उपपद्यते—धर्मितादात्म्याध्यासस्य धर्मसंसर्गाध्यासे कारणत्वादिति भावः । नन्वन्यगतानामेव कर्तृत्वादीनामात्मवृत्तितया भानं किं वाऽऽत्मन्युत्पद्यमानानामपि ? आद्ये अन्यथाख्यातिप्रसङ्गः, द्वितीये अन्तःकरणधर्माणामवभास इति सिद्धा-

(१) प्रमात्रपरोक्षप्रमयोरेवास्तीत्यादिः घपुस्तके ।

(२) सा चावच्छेदकतापरम्परया इदमादिरूपशुक्त्यादिनिष्ठा या चिद्वृत्त्याश्रयता तदवच्छेदकतेति यावत् । इत्यधिकः पाठो घपुस्तके ।

(३)—घटके अज्ञाने तदभावे वा कालाद्यवच्छिन्नेत्यादिः घपुस्तके ।

त्वाद्यध्यास उपपद्यते । ननु त्वन्मतेऽनिर्वचनीयख्या-त्यभ्युपगमात् ये कर्तृत्वादयोऽन्तःकरणधर्मा आत्म-न्यध्यस्यन्ते ते अनिर्वचनीयास्तत्रोत्पद्यन्त इति वा-च्यम् । तथा च व्यावहारिकप्रातीतिकभेदेन कर्तृत्व-भोक्तृत्वादीनां द्वेधाऽवभासः स्यात् । न स्यात् । तादा-

न्यायरत्नावली ।

त्म्यात्—अध्यासे दोषासम्भवात् । व्यावहारिकेत्यादि । व्या-वहारिककर्तृत्वादेः मनसि स्वाभाविकधर्मत्वात् मनोनिष्ठं तद्व्याव-हारिकम् आत्मनि तस्यास्वाभाविकधर्मत्वात् गगननैल्यादिवत् प्रा-तीतिकमित्यर्थः । यद्यपि मनोनिष्ठस्यैव कर्तृत्वादेरात्मनि संसर्ग-मात्रमध्यस्यते न तु स्वरूपान्तरं तथाप्यात्ममनस्संसृष्टाभ्यापेक्ष-स्यापि कर्तृत्वादेर्भेदस्वीकार इति मते समाधत्ते—न स्यादिति । ता-दात्म्याभिमानेन—आत्ममनसोर्भेदाग्रहेण । अविवेकात्—आत्मम-नोधर्मयोर्भेदाग्रहात् । उक्तरूपाभ्यामेकमेव कर्तृत्वादिकं भाति, न तु भिन्ने रूपे स्वीक्रियेते इति मतमाश्रित्य समाधत्ते—सकले-त्यादि । वस्तुतः प्रातीतिकस्यात्मनि कर्तृत्वादिसंसर्गस्योत्पत्त्यस्वी-कारान्न तद्विशिष्टरूपेण भेदप्रसक्तिः । परन्तु यदेव मनसस्तादात्म्यम् ( आत्मनि ) स्वीक्रियते तदेव कर्तृत्वादेरप्यात्मनि धर्मितानियाम-

नारायणी ।

न्तो भज्येत, अन्तःकरणे इव स्वास्मन्नपि उत्पत्तिस्वीकारात् । न च सम्बन्धकृतो विशेषः, समवायनिरासेन सर्वत्राविद्यकतादात्म्यस्यैव सम्बन्धत्वाङ्गीकारात् । व्यावहारिकप्रातीतिकभेदेन तयोर्विशेषोपपादने तु द्विविधयोस्तयोर्भानेऽपि भेदः स्यादित्याशयेनाशङ्कते—नन्विति । अनिर्वचनीयेति ।अन्यथाऽन्यथाख्यात्यापत्तेरिति भावः । व्यावहारिकेति । स्वाभाविकत्वेन मनोनिष्ठं व्यावहारिकम्, अस्वाभाविकत्वेनात्मनिष्ठं तद्गगननैल्यादिवत्प्रातीतिकमिति तयोर्जपाकुसुमारुण्यस्फटिकारुण्ययो-रिव पृथगवभासः स्यादित्यर्थः । सोपाधिकाध्यासे तथा, न चायं सो-पाधिकाध्यासः, अधिष्ठानाध्यस्तोपाधिकत्वादित्यभिप्रेत्य समाधत्ते—न स्यादिति । तादात्म्येति—आत्ममनसोरभेदाध्यासेन । अविवेकात्-

त्म्याभिमानेनाविवेकात्। सकलधर्मविशिष्टस्यैवान्तःकरणस्यात्मन्यध्यस्तत्वेन द्वयाभावाद्वा। तस्मादेकस्यात्मन उपाधिभेदेन प्रमात्रादिव्यवस्थोपपत्तेर्न सौगतमतापत्तिर्न वा विरोधः। अन्या अपि व्यवस्थाः स्पष्टतरमुपरिष्टादुपपादयिष्यन्ते। तस्मात् ज्ञानरूपस्यात्मनः सुषुप्तावव्यभिचारित्वाद्देहेन्द्रियादीनां च व्यभिचारित्वात् दृश्यत्वाच्च तत्र तत्रात्मबुद्धिस्तेषां तेषां वादिनां भ्रान्तिरित्यौपनिषदं मतं प्रामाणिकमिति सिद्धम्॥ १॥

न्यायरत्नावली।

कः सम्बन्धः। धर्मधर्मिणोरपि तादात्म्यस्यैकस्यैव स्वीकारात्। अथवा कर्तृत्वादेर्यदेव मनसि आधारत्वं तदेवात्मन्यपि, युगपदेवोभयत्र प्रतीयमानत्वात् उभयोरैक्यापन्नत्वाच्च। इदन्त्वादेराधारत्वं तु रजतप्रतीतेः पूर्वमपि इदमादौ प्रतीयत इति इदमादिरजतयोर्नैकं तद्वक्तुं शक्यते। तस्य च तादात्म्यस्याधारत्वस्य वा व्यावहारिकमात्रत्वादात्ममनोऽनुयोगिकविशिष्टरूपाभ्यां कर्तृत्वादेर्भेदस्वीकारेऽपि तादात्म्याभिमानेनेत्यादिरीत्या न तदवभासः। प्रातीतिकरूपान्तरं तु कर्तृत्वादेर्न सम्भाव्यत इत्याशयेनाह—सकलेत्यादि। आत्मनीति। एकै(१)कतादात्म्येनाधारत्वेन वेति शेषः। द्वयाभावात्–कर्तृत्वादिव्यवहारिकप्रातीतिकभेदेन रूपद्वयाभावात्। सुषुप्त्येकसिद्ध इति पदव्याख्यानोपसंहारपूर्वकं श्लोकव्याख्यामुपसंहरति––तस्मादित्यादि॥ १॥

नारायणी।

आत्ममनोवृत्तितया पृथक्तया धर्मयोरग्रहात्। एकमेव कर्तृत्वादिकं न पृथगिति मते समाधत्ते—सकलेति। द्वयेति–व्यावहारिकप्रातिभासिकभेदेन रूपद्वयाभावात्। श्लोकव्याख्यामुपसंहरति–तस्मादिति। अना-

(१) एकेन तादात्म्येत्यादिः घपुस्तके पाठः।

स्यादेतत्, आत्मनो निर्धर्मकत्वे प्रमात्रादिव्यवहारस्याध्यासमूलत्वेन 'ब्राह्मणो यजेते'त्येवमादीनां शास्त्राणामप्रामाण्यप्रसङ्गः, अकर्तुरभोक्तुश्चात्मनः प्रवृत्त्यनुपपत्तेः। वेदाप्रामाण्ये च कुतो ब्रह्मसिद्धिरपि। तस्य तन्मात्रगम्यत्वात्। शास्त्रयोनित्वादिति न्यायात्। तथा च वेदप्रामाण्यार्थं प्रमातृत्वादिव्यवहारस्य सत्यत्वमभ्युपेयमित्याशङ्क्य किं तत्त्वज्ञानात्पूर्वमप्रामाण्यमा-

न्यायरत्नावली।

द्वितीयं पद्यमवतारयति-स्यादेतदिति। यत् उक्तं तदास्तामित्यर्थः। प्रमात्रादीत्यादीपदेन ब्राह्मणादिसङ्ग्रहः। तस्य-ब्रह्मणः, तन्मात्रगम्यत्वात्-वेदमात्रगम्यत्वात्। ननु कार्यत्वहेतुकसकर्तृकत्वानुमानेन ब्रह्मसिद्धिस्सम्भवतीत्यत आह-शास्त्रेति। ब्रह्म विचार्यमाणवेदान्तैकगम्यम् वेदान्यमानगम्यत्वाभावात्-सकर्तृकत्वानुमानस्याप्रयोजकत्वात् सत्यज्ञानानन्दशुद्धरूपेणानुमानाद्यगम्यत्वा-

नारायणी।

द्यविद्याध्यासकृततत्कार्यप्रतिबिम्बादेः समर्थनादित्यर्थः। एकस्य-अद्वितीयस्य। उपाधिभेदेन-अन्तःकरणाद्युपाधिभेदेन। प्रमात्रादीत्यादिना सुखित्वादिपरिग्रहः। न सौगतेति। तेनानिर्वचनीयानाद्यविद्यानङ्गीकारात् इति भावः। न वा विरोध इति। केवलस्यैकस्य प्रमातृत्वाद्यनङ्गीकारादिति भावः। स्पष्टम् अन्यत्॥ १॥

द्वितीयपद्यमवतारयति—स्यादित्यादि। (१)*एतत् वक्ष्यमाणं स्यात् अनिष्टमिति शेषः*। प्रमात्रादीत्यादिना ब्राह्मणादिपरिग्रहः। तस्य-ब्रह्मणः, तन्मात्रेति-वेदमात्रेत्यर्थः। कर्तृजन्यत्वव्याप्येन कार्यत्वादिहेतुनापीश्वरसिद्धिः सम्भवतीत्यत आह—शास्त्रेति। शास्त्रमेव योनिः प्रमाणं यत्र तस्य भावः शास्त्रैकसमधिगम्यत्वं तस्मादित्यर्थः। न्यायात् तत्र 'तं त्वौपनिषदं पुरुषं पृच्छामी'त्यादिश्रुतिबलेनोपनिषन्मात्रावगम्यत्वसा-

(१) यदुक्तं तदास्तामित्यर्थः इति खपुस्तके पाठभेदः*...* चिह्नद्वयमध्यवर्ती।

पाद्यते ऊर्ध्वं वा ? । तत्राद्ये सर्वेषां प्रमाणानामविद्यावद्विषयत्वेन तद्दशायां बाधाभावान्निष्प्रत्यूहं प्रामाण्यम् । द्वितीये त्विष्टापत्तिरेवेत्याह—

न वर्णा न वर्णाश्रमाचारधर्मा
न मे धारणाध्यानयोगादयोऽपि ।
अनात्माश्रयाहंममाध्यासहाना-
त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ २ ॥

न्यायरत्नावली ।

दिति सूत्रार्थः । अविद्यावद्विषयत्वेन—(१)अविद्याकालपरमार्थत्वेन गृह्यमाणप्रमेयकत्वेन, तद्दशायां–प्रमाविषयाणामबाध्यत्वग्रहदशायाम् । निष्प्रत्यूहमिति दशायामित्यनेनानुषक्ते नान्वितम् । प्रामाण्यम्–अबाध्यविषयकत्वम् । इष्टापत्तिरेवेत्यत्र पद्येनैव हेतुमाह—न वर्णा इत्यादि । योगादयोऽपीत्यपिशब्देन हेतुत्वमुच्यते । तथा च यतो मयि वर्णाद्यभावः, अतोऽद्वितीये इष्टापत्तिरित्यर्थः । वर्णाद्यभावे हानादित्यन्तं हेतुः । ननु वर्णाश्रमेत्यादौ वर्णाश्रमयोरा-

नारायणी ।

धनादिति भावः । अविद्येति । अविद्यावान् अध्यस्तो व्यवहारकालाबाध्यो विषयः प्रतिपाद्यो येषां तेऽविद्यावद्विषयास्तेषाम्, भावो व्यवहारकालाबाध्यविषयधीजनकत्वं तेन, तद्दशायाम्–अविद्यादशायाम्, व्यवहारकाले–अबाध्यत्वग्रहकाले, बाधाभावात्–आत्मतत्त्वधीकरूपबाधकस्यासत्वात् अध्यस्तस्य सत्त्वेन विषयविसंवादाभावाद्वा, अविद्यावानात्मतत्त्वानभिज्ञो विषयोऽधिकारी यत्र तेऽविद्यावद्विषयास्तेषां भावोऽविरुद्धधिकारकत्वं तेन प्रामाण्यं फलकामनावत्तादृशपुरुषकर्तव्यताकार्थप्रतिपादकत्वादिरूपम् । इष्टापत्तिरेवेत्यत्र पद्येनैव हेतुमाह––न वर्ण इत्यादि । योगादयोपीत्यपिशब्देन हेतु(२)रुच्यते यतो मयि वर्णाद्यभावोऽतो द्वितीये इष्टापत्तिरित्यर्थः वर्णाद्यभावे हानादित्यन्तं हेतुः । ननुवर्णाश्रमेत्यादौ वर्णा-

(१) अविद्याकाले प्रमात्वेन गृह्यमाणप्रमाजनकत्वेन इति घपुस्तके ।

( २ ) हेतुत्वमुच्यते इत्यर्थः ।

वर्णाः ब्राह्मणत्वादयः। आश्रमाः ब्रह्मचर्यादयः। आचाराः स्नानशौचादयः। धर्माः ब्रह्मचर्यगुरुसेवादयः। अत्र द्वन्द्वद्वयगर्भषष्ठीतत्पुरुषेण वर्णानामाचारधर्माश्च आश्रमाणामप्याचारधर्माश्च लभ्यन्ते। धारणा

न्यायरत्नावली।

चारधर्मनिषेधे आश्रमनिषेधो न लभ्यते तत्राह—द्वन्द्वेत्यादि। आश्रमाश्चाचारधर्माश्चेति द्वन्द्वोत्तरं षष्ठीतत्पुरुषेणेत्यर्थः। वर्णसम्बन्धिन आश्रमाचारादयो लभ्यन्ते तेषां मध्ये आश्रमपुरस्कारेण विहिता आचारधर्मा अपि लभ्यन्ते वर्णसम्बन्धित्वादिसाशयेनाह—वर्णानामित्यादि। आश्रमाणामपीत्यपि शब्दादाश्रमा अपि लभ्यन्ते इत्यर्थः। लभ्यन्ते निषेध्यत्वेन ज्ञायन्ते। द्वन्द्वद्वयेति पाठे तु धर्मपदेनैवाश्रमा ग्राह्याः, तेषामपि वर्णधर्मत्वसम्भवात्। धारणाध्यानशब्दयोर्बाह्यविषयसाधारण्येन धारणादिबोधकत्वसम्भवेऽपि प्रकृतपद्यस्य तत्त्वनिष्ठपुरुषक(१)र्तृकत्वेनात्मधारणाध्यानयोरेव उक्तपुरुषे प्रसक्तेः तत्पर(२)त्वमेवाह-धार

नारायणी।

श्रमयोराचारधर्मनिषेधे आश्रमानषेधो न लभ्यते तत्राह—द्वन्द्वेति। आश्रमाश्चाचाराश्च धर्माश्चेति द्वन्द्वोत्तरषष्ठीतत्पुरुषेणेत्यर्थः। वर्णसम्बन्धिन आश्रमाचारादयो लभ्यन्ते तेषां मध्ये आश्रमपुरस्कारेण विहिता आचारधर्मा लभ्यन्ते सम्बन्धित्वाविशेषादित्याशयेनाह—वर्णानामित्यादि। लभ्यन्ते निषेध्यत्वेन ज्ञायन्ते। द्वन्द्वद्वयेति पाठे तु धर्मपदेनैव आश्रमा अपि बोध्याः, आश्रमस्यापि वर्णधर्मत्वसम्भवात्। तथाच वर्णाश्चाश्रमाश्चेति वर्णाश्रमौ, आचाराश्च धर्माश्चाचारधर्माः वर्णाश्रमयोराचारधर्माविति विग्रहः। शास्त्रस्यात्मपरत्वात्तत्रोक्तधारणादिपदार्थमात्मपरत्वेन योजयति—धारणेत्यादि। स्थैर्यं स्थिरीकरणं यत्नपूर्वकपरमात्माकारप्रत्ययप्रवाह इति युवात्। बाह्यविषयपरित्यागेनेत्यंशेन प्रत्याहारपूर्वकत्वं धारणाया उक्तं बाह्यविषयासम्प्रयोगस्य योगस

(१)—पुरुषवक्तृकत्वेनेति घपुस्तके।
(२) तत्पुरुषरत्वमेवेति गपुस्तके।

ब्रह्मणि बाह्यविषयत्यागेन मनसस्स्थैर्यम्। ध्यानं परमात्मचिन्तनम्। योगश्चित्तवृत्तिनिरोधः। आदिशब्देन श्रवणमननादयो गृह्यन्ते। सर्वेषां ज्ञानोत्तरकाले असत्त्वे हेतुमाह—अनात्माश्रयाहंममाध्यासहानादिति। अनात्मा आत्मविरोधिनी अविद्या तदाश्रयस्तदुपादानो योऽहङ्कारममकाराद्यध्यासस्तस्य मूलस्यापि तत्त्वज्ञानेन हानात् तत्प्रयुक्तवर्णाश्रमादिव्यवहारो नास्तीत्यर्थः ॥ २ ॥

वर्णाश्रमादिव्यवहारस्य मिथ्याज्ञानमूलत्वेन मिथ्यात्वं दृढयितुं तद्व्यतिरेके सुषुप्तौ तद्व्यतिरेकमाह—

न्यायरत्नावली।

णेत्यादि। आत्मविरोधिनी—पूर्णानन्दोऽहमित्यादिव्यवहारविरोधिनी ॥ २ ॥

तृतीयपद्यमवतारयति—वर्णेत्यादि। व्यवहारस्याभिलापप्रवृत्त्यादेः मिथ्याज्ञानमूलकत्वेन 'अहं ब्राह्मण' इत्यादिभ्रमनिमित्तकत्वेन। मिथ्यात्वं—मिथ्याविषयत्वम्। तद्व्यतिरेके—मिथ्याज्ञानव्यतिरेके सति। तद्व्यतिरेकं—वर्णाश्रमादिव्यवहारव्य-

नारायणी।

ङ्गेषु प्रत्याहारत्वोक्तेरिति संक्षेपः। धारणासाध्यं ध्यानं लक्षयति—परमात्मेति। यत्नमनपेक्ष्यैव परमात्माकारप्रत्ययप्रवाह इत्यर्थः। ध्यानसाध्यं योगं लक्षयति—योग इति। चित्तस्य सत्त्वप्राधान्येन सूक्ष्मपञ्चभूतारब्धस्यान्तःकरणस्य या वृत्तयः विषययोगपरिणामरूपास्तासां निरोधः प्रतिलोमपरिणामेनोपशमः। अतिरोहितार्थमन्यत् ॥ २ ॥

तृतीयपद्यमवतारयति—वर्णेत्यादि। मिथ्येति। 'अहं ब्राह्मण' इत्यादिभ्रममात्रकारणकत्वेन, मिथ्यात्वं बाधितार्थत्वम्। तद्व्यतिरेके-मिथ्याज्ञानव्यतिरेके सति(१) (तद्व्यतिरेकम्-) वर्णाश्रमादिव्यवहारव्यति

(१)—सति वर्णाश्रमादिव्यवहारव्यतिरेके न मातेत्यादिः पाठ आसीत् तं संशोध्य प्र पूरितोऽस्माभिरिति ज्ञेयम्।

न माता पिता वा न देवा न लोका
न वेदा न यज्ञा न तीर्थं ब्रुवन्ति ।
सुषुप्तौ निरस्तातिशून्यात्मकत्वा-
त्तदेकोऽवशिष्टः शिवः केवलोहम् ॥ ३ ॥

माता जनकस्त्री । पिता जनकः पुमान् । देवा इन्द्रादयः आराध्याः । लोकास्तदाराधनफलानि स्वर्गादीनि । वेदाः अलौकिकहिताहितसाधनताप्रतिपादकानि ब्रह्मप्रतिपादकानि च प्रमाणवाक्यानि । यज्ञाः स्वर्गादिसाधनीभूता ज्योतिष्टोमादयः । तीर्थं यज्ञसाधनीभूतः कुरुक्षेत्रादिदेशः । एवं पापकर्मसाधनान्यप्युपलक्षणीयानि । सर्वेषां देहाभिमानमूलकत्वात् तदभाव

न्यायरत्नावली ।

तिरेकम् । न मातेत्यादि । पूर्वपद्यात् मे इत्यस्यानुषङ्गात् न मे मातेत्यादि सुषुप्तौ न ब्रुवन्ति तस्मादेकोऽहमित्यर्थः । ननु (१)देहादिव्यवहारस्य कथं देहाभिमानमूलकत्वम् तत्राह- सर्वेषामिति । मत्सेव्यत्वादिरूपममत्वाध्यासाविशिष्टानां सर्वेषामित्यर्थः । स्वतो-देहाभिमानं विना । सम्बन्धाभावात्-ममत्वाध्याससम्बन्धाभावात् । अविद्यमानता—ममत्वविशिष्टरूपेण व्यवहारस्य सामान्यस्याभावो युक्त इति भावः । वस्तुतस्तु वर्णाश्रमादिव्यवहारस्य मिथ्याज्ञानमूलकत्वेनेति विवरणादिव्यवहारस्य सर्वस्य मनोऽवच्छिन्नचिन्निष्ठत्वेन 'अहमि'तिमिथ्याज्ञानमूलकत्वेनेत्यर्थः । एवं च मे इत्यस्याननुषङ्गेऽपि न क्षतिः । सर्वे

नारायणी ।

रेकम् । न मातेत्यादौ पूर्वपद्यान्मे इत्यनुषङ्गः, मे मातेत्यादिसुषुप्तौ न ब्रुवन्ति तत्तस्मादेकोऽवशिष्टः अद्वितीयोहमित्यर्थः । सर्वेषामिति । मत्से

( १ ) देवादिव्यवहारस्य इति घपुस्तके ।

स्वतस्सम्बन्धाभावादविद्यमानेत्यर्थः । तथा च सुषुप्तिं प्रकृत्य श्रुतिः–'अत्र पिताऽपिता भवति माताऽमाता देवा अदेवा वेदा अवेदा यज्ञा अयज्ञास्स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसश्श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं पुण्ये-

न्यायरत्नावली ।

षामित्यादि । सर्वव्यवहाराणाम् अहङ्काराध्यासमूलकत्वादित्यर्थः । तदभावे—अहङ्काराध्यासाभावे, स्वतः अहङ्कारानवच्छिन्नचिति, सम्बन्धाभावात्–सर्वव्यवहारसम्बन्धाभावात् । अत्र–सुषुप्तौ । अपिता–ममत्वविशिष्टपितृत्वादिरूपेणाव्यवहार्यः । एवमग्रेऽपि । चाण्डालो–ब्राह्मण्यां शूद्रेणोत्पन्नः । पौल्कसः—क्षत्रियायां जातः । श्रमणः–परिव्राट् । पुण्यपापयोर्व्यवहारहेतूत्पादकत्वात् उपाधिप्रयुक्तभेदस्य मिथ्यात्वेन सच्छून्यत्वाद्व्यवहाराभाव इत्याह—अनन्वागतं पुण्येनेति । सुषुप्तौ पुण्येनानन्वा-

नारायणी ।

व्यत्वादिरूपममत्वाध्यासविशिष्टानां सर्वेषामित्यर्थः । स्वतः–देहाभिमानं विना, सम्बन्धाभावात्–ममत्वाध्यासवैशिष्ट्याभावात् । अविद्यमानसमताममत्वविशिष्टरूपेण व्यवहार्यत्वं तथाच ममत्वाध्यासं प्रति स्थूलदेहाध्यासस्य हेतुत्वात् तदभावे ममत्वविशिष्टरूपेण व्यवहारसामान्याभावो युक्त इति भावः । अथवा वर्णाश्रमादिव्यवहारस्य सर्वस्य मनोऽवच्छिन्नचिन्निष्ठत्वेनाहमिति मिथ्याज्ञानमूलकत्वेनेत्यर्थः । एवं च मे इत्यस्याननुषङ्गेऽपि न क्षतिः । सर्वेषामिति सर्वव्यवहाराणामहङ्काराध्यासमूलकत्वादित्यर्थः । तदभावे–अहङ्काराद्यध्यासाभावे । स्वतः–अहङ्कारानवच्छिन्नचिति । सम्बन्धाभावात्–सर्वव्यवहारसम्बन्धाभावात् । अत्र–सुषुप्तौ, अपिता–ममत्वादिविशिष्टपितृत्वादिरूपेणाव्यवहार्यः । एवमग्रेऽपि । चाण्डालो ब्राह्मण्यां शूद्राज्जातः, पौल्कसः क्षत्रियायां निषादाज्जातः, निषादस्तु शूद्रायां ब्राह्मणाज्जातः, श्रमणः परिव्राट्, तापसः वानप्रस्थः, अनन्वागतम् असंस्पृष्टम्, पुण्येन शास्त्रविहितकर्मजादृष्टेन, पापेन विहिताकरणप्रतिषिद्धकरणजादृष्टेन; कुत इत्याकाङ्-

नानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवती'त्याद्या अभिमानाभावे सर्वानर्थनिवृत्तिमनुवदन्ति। ननु सर्वव्यवहाराभावे शून्यतैव स्यात्। नेत्याह—निरस्तातिशून्यात्मकत्वादिति। निरस्तम् अतिशून्यात्मकत्वं यस्मात्तत्तथा। भावप्रधानो निर्देशः। तस्य सुषुप्तिसाधकत्वात्पुनरुत्थानानुपपत्तेश्च। 'अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति, यद्वै तन्न पश्यति पश्यन्वै तन्न प-

न्यायरत्नावली।

गमः असम्बन्धो जीवेष्वित्यर्थ। अत्र हेतुमाह—तीर्णो हीत्यादि। तदा—सुषुप्तिकाले। शोकान्—व्यवहारविषयतत्साधनीभूतार्थान्, संस्कारान्यकार्यरूपार्थानिति यावत्। धर्मिणो हेतुत्वास्वीकारमते धर्मस्य हेतुत्वलाभायाह—भावप्रधान इति। शून्यात्मत्मकतानिरासे हेतुमाह—सुषुप्तीत्यादि। मात्रासंसर्गः-स्थूलकार्यासम्बन्धः। अस्य—सुषुप्तात्मनः। यद्वा इत्यादि। तद्

नारायणी।

क्षायामाह—तीर्णो हीति। यस्मात्तस्मात्सुषुप्तिकाले हृदयस्य हृदयस्थायाः बुद्धेः सम्बन्धिनः सर्वाञ्छोकान् पापपुण्यहेतुसंस्कारान् तीर्णः अतिक्रान्तो भवतीत्यर्थः। उद्बोधाभावादिति भावः। धर्मिणो हेतुत्वास्वीकारमते धर्मस्य हेतुतालाभायाह—भावेति। तथाच निरस्तातिशून्यात्मकत्वादित्यर्थः। कथमस्मादतिशून्यात्मकत्वनिरासस्तत्राह—तस्येत्यादि। तस्य ब्रह्मणः सुषुप्तिसाधकत्वात्। अन्यथोत्थितस्य स्मृत्यनुपपत्तेरित्युक्त्वादिति भावः। पुनरुत्थानेति। सुषुप्त्यनन्तरं जाग्रदमानित्वानुपपत्तेरित्यर्थः। उत्थातुरप्यनङ्गीकारादिति भावः। न केवलं युक्तिगम्यमेवात्मसत्त्वं तदानीमपि तु श्रुतिगम्यमपीत्यभिप्रेत्य श्रुतिमुदाहरति—अविनाशीति। अविनाशित्वे हेतुमाह—अनुच्छित्तिधर्मेति। न विद्यते उच्छित्तिर्विनाशो यस्यै तादृशो धर्मः सच्चिदानन्दत्वादिरूपो यस्येत्यर्थः। मात्रेति। मीयन्ते इति मात्रा विषयास्तैरसम्बन्धः अस्य आत्मनः। श्रुत्यन्तरमाह—यद्वै इति। यत् किञ्चित् वै प्रसिद्धं तत्तत्र सुषुप्तौ न पश्यति व

श्यति, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदि' त्यादिश्रुतिभ्यश्चात्मचैतन्यस्य न सुषुप्तौ शून्यतेत्यर्थः। निराकृतमप्येतत्पुनरपि स्थूणानिखननन्यायेन निराक्रियते। यद्वा निरस्तमज्ञानाद्यत्यतीतम्, अद्वितीयमति-

न्यायरत्नावली।

तदा सुषुप्तिकाले। पश्यति नेति। यद्वै प्रसिद्धं पश्यन् चाक्षुषवृत्त्युपलक्षितचिद्रूपेण प्रकाशमान एव(१) तादृशचाक्षुषवृत्त्यभाववान्। उक्तप्रकाशमानत्वे हेतुमाह—न हीत्यादि। उक्ताभावहेतुत्वे मानमाह—न तु तदित्यादि। ततश्चिद्रूपात् विभक्तं स्थूलरूपापत्तिप्रयुक्तभेदविशिष्टं तत् तदा न त्वस्ति। यदित्यव्ययम् येनेत्यर्थः उत्तरवाक्यस्थो यच्छब्दो न तच्छब्दापक्षः। स्व-

नारायणी।

साक्षात्करोति तत् स्वयंज्योतिस्वाभावनिबन्धनं न। कुतः? 'पश्यन्वै तन्न पश्यति' तत्तत्र पश्यन्स्वयंज्योतिःस्वरूप एव सन्न पश्यतीति वै प्रसिद्धं प्रमाणसामान्यव्यापाराभावात्। किं विनिगमकं? तत्राह—नहीति। द्रष्टुः कूटस्थस्य चिन्मात्रस्य स्वरूपभूता या दृष्टिस्तस्याः हि यस्मात् विपरिलोपो न विद्यते तत्र हेतुमाह—अविनाशित्वादिति। विविधो नाशो यस्मात्तद्विनाशि परिणामि, न विनाशि अविनाशि तस्य भावस्तस्माद् अपरिणामित्वात् इत्यर्थः। न पश्यतीत्यत्र हेतुमाह—नत्विति। तत्तदा सुषुप्तौ। तुशब्दो हेत्वर्थः। यस्मात्ततः कूटस्थचैतन्यात् द्वितीयं प्रमातृभावापन्नम् अन्यत् प्रमाणादिकं विभक्तं स्वरूपाद्विलक्षणं प्रमेयं तमःप्रधानं नास्ति यत्प्रमेयं प्रमाता जीवः करणेन पश्येदित्यर्थः। आशङ्कानिरासाभिप्रायेण हेतुव्याख्यानं शब्दस्वारस्यसिद्धं न भवतीत्यभिप्रेत्य न मातेत्यादिप्रतिज्ञातार्थोपपादनपरत्वेन हेतुं योजयति—यद्वेति। 'धार्मिकोयं कलहान्निरस्तः' इत्यादाविव निरस्तशब्दस्य राहि-

(१) प्रकाशमान एव न पश्यति चाक्षुषवृत्त्यवच्छिन्नचिद्रूपाभावात् 'नाह द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति. ततोऽन्यद्विभक्तं यत्पश्येत्' इति श्रुतिशेषः। अयं पाठो घपुस्तके न्यायरत्नावल्यां वर्तते। गपुस्तके तु सिद्धान्तबिन्दावेव पूर्णा श्रुतिरस्ति।

शून्यं यद्ब्रह्म तदात्मकत्वात्। तथा च श्रुतिः—'यदा वै पुरुषः स्वपितिनाम सता सोम्य तदा सम्पन्नो भवति तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मिति। तेन जगत्कारणीभूतसर्वज्ञसर्वशक्तिपरिपूर्णानन्दबोधरूपेण ब्रह्मणा सहैकत्वादसंसार्येव जीव इति सिद्धम् ॥ ३ ॥

एवं तावत् त्रिभिः श्लोकैः वादिविप्रतिपत्तिनिराकरणपूर्वकं त्वम्पदार्थो निर्धारितः। सम्प्रति तत्पदार्थ-

न्यायरत्नावली।

पितिः—सुषुप्तः, सता—ब्रह्मणा, सम्पन्नः—एकीभूतः, मनआद्यभिमानप्रयुक्तभेदशून्य इति यावत्। प्राज्ञेन—ब्रह्मणा, सम्परिष्वक्तः—उक्तभेदशून्यः। एकत्वादुपाधिप्रयुक्तभेदस्य मिथ्यात्वेन तच्छून्यत्वात् ॥ ३ ॥

नारायणी।

त्यार्थत्वमाह—निरस्तेति। 'एकाक्ययमतिशून्य' इत्यादावविवातिशून्यशब्दस्य द्वितीयाभावार्थत्वमाह—अद्वितीयमिति। अति अतिशयेन शून्यं रहितं स्वद्वितीयसर्वशून्यमित्यर्थः। तदात्मकत्वात्-तदभिन्नत्वान्न ममत्वाध्यासपूर्वको मातृत्वादिबन्ध इति भावः। प्रमाणमाह—तथेति। यदा यस्मिन्समये स्वपितिनाम सुषुप्तः सता ब्रह्मणा तदा सुषुप्तौ सम्पन्नः एकीभूतः। एकीभावेनाऽयद्दृष्टिरूपबन्धाभावे दृष्टान्तमाह—तद्यथेति। तत्तत्र व्यामिश्रीभावे यथा प्रियया मनोहरणसमर्थया स्त्रिया सम्परिष्वक्तः सम्यक् परिष्वक्तो व्यामिश्रीभावापन्नः कामुकः सम्भोगसुखमनुभवन् स्वस्माद्बाह्यं बहिर्भूतं किञ्चन किञ्चिदपि वस्तु न वेद न जानाति, यथाऽयं दृष्टान्तः एवमेवायं जलचन्द्रादिवत्कार्यकारणादिषु प्रविष्टः क्षेत्रज्ञः पुरुषः उपाधिविलयात् प्राज्ञेन अविद्यासाक्षिणाऽऽत्मना सम्परिष्वक्तोऽत्यन्तमेकीभूतः सन्सर्वात्मना बाह्याद्यभिमानाभावात् बाह्यं मेयादि आन्तरं प्रमातृप्रमितिरूपं न जानातीत्यर्थः। तेन-एकीभावदृष्टान्तादिना स्वतो निरभिमानित्वाद्युपपादनेन ॥ ३ ॥

चतुर्थपद्यमवतारयति—एवमिति। तथैवेति। तत्त्वमसीत्याद्युक्ताभेदस्य सिद्धये चार्वाकादिमतनिराकरणेन त्वंपदार्थो यथाऽकर्त्रभोक्तात्मना निर्धा-

स्तथैव निर्धारणीयः । (१)तत्र निराकार्या वादिविप्रतिपत्तयः प्रदर्श्यन्ते । ननु न ब्रह्मणा सह जीवस्यैक्यमुपपद्यते । तथा हि सच्छब्दवाच्यं जगत्कारणं ब्रह्म 'सदेव सोम्येदमग्र आसीदि'त्यादिवाक्येन प्रतिपादितम् । जगत्कारणं च प्रधानमचेतनमिति साङ्ख्याः । पशुपति-

न्यायरत्नावली ।

चतुर्थपद्यमवतारयति—ननु न ब्रह्मणेत्यादि । प्रधानं साम्यावस्थापन्नं सत्त्वादिगुणत्रयम् । पृथिव्यादिकार्यं सुखदुःखमोहात्मकम्, पुरुषविशेषान्प्रति तथा भासमानत्वात् । तथा च सुखादिपरिणामयोग्यं गुणत्रयं पृथिव्याद्युपादानं कल्प्यते न तु

नारायणी ।

रितस्तथा साङ्ख्यादिमतनिराकरणेन तत्पदार्थोऽपि विधेयभूतः केवलात्मना निर्धारणीय इत्यर्थः । वादिविप्रतिपत्तिमुत्थापयति—नन्विति । सद्भावस्यैव-सत्त्वस्यैव । कर्तृजन्यत्वव्याप्यः कार्यत्वहेतुर्न ब्रह्मणोऽनुमापकः सम्भवति, तत्र सकर्तृकत्वमात्रसाधनेऽदृष्टद्वारककृतिमादाय जीवेन सोपादानकत्वसाधने तु प्रधानेन सिद्धसाधनादर्थान्तराच्च, तस्मात् श्रुतिरेव ब्रह्मणि मानमिति वाच्यं तदपि नेत्याह—तथाहीति । 'सदेव सोम्येदमग्र आसीदि'त्यादिवाक्येन प्रतिपादितं सच्छब्दवाच्यं जगत्कारणं न ब्रह्मेत्यन्वयः । आदिना 'सन्मूलाः सोम्येमाः सर्वाः प्रजा' इत्यादिवाक्यपरिग्रहः । सच्छब्दवाच्यं सामान्यतः जगत्कारणं जगदुपादानं सदेवेति । अग्रे गुणत्रयसाम्यावस्थायाम् इदं नामरूपाभ्यां व्याकृतं सदेवासीत् परिणामिनित्यं प्रधानात्मनाऽऽसीदित्यर्थः । अत एव नीलोत्पलमित्यादिवत् इदं सदेवासीदिति सामानाधिकरण्यमप्युपपद्यते, जडयोरेव कार्यकारणयोरभेदसम्भवादिति संक्षेपः । प्रधानं साम्यावस्थोपलक्षितं गुणत्रयम्, अचेतनं जडमिति साङ्ख्यमतनिष्कर्षः । एतच्च न सम्यक् श्रुतियुक्तिविरोधात् । तथाहि जडस्य स्वतः प्रवृत्त्ययोगात्प्रवर्तकश्चेतनोऽसर्वज्ञजीवाद्भिन्न आवश्यकः, स च 'भूयः सृष्ट्वा पतयस्त्वथेशः सर्वाधिपत्यं कुरुते महात्मे'तिश्रुतेः पशुपतिरेवेति पाशुपतमतमवतारयति—पशुरेवेति ।

(१) तदर्थं निराकार्येति कपुस्तके ।

मित्याद्या 'अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्' इत्याद्याश्च सर्वानर्थशून्यं परमात्मस्वरूपं प्रतिपादयन्ति। श्रौतस्याप्यर्थस्य न्यायेन निर्णयाय

न्यायरत्नावली।

बोध्यत इति वक्तुं शक्यते। अस्नेहमित्यादिवाक्यशेषस्य भेदबोधपरत्वे तत्पुरुषत्वेन नपुंसकत्वानुपपत्तेर्बहुव्रीह्यावश्यकत्वेन तत्समभिव्याहारात् अत्यन्ताभावमात्रबोधकत्वम्। अशब्दामित्यादौ तु नपुंसकत्वात् बहुव्रीहित्वनिर्णयेनात्यन्ताभावबोधकत्वमेवेत्याशयेनाह-अशब्दमित्यादि। अप्रमेयत्वात्-चिदभास्यत्वात् ॥६॥

नारायणी।

'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ती'ति पूर्वभागः। 'अस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्रमाणमसुखमात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चने'त्युत्तरभागः। श्रुत्यर्थस्तु-स याज्ञवल्क्य उवाच हे गार्गि एतद्वै तदक्षरं यत्त्वं पृष्टवत्यसि 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे'त्यादिना अव्याकृतरूपाकाशाधिष्ठानं तत् अव्याकृताधिष्ठानम् एतदक्षरं न क्षरति न क्षीयते वाऽक्षरं शुद्धं ब्रह्म ब्राह्मणाः ब्रह्मविदः अभिवदन्ति कथयन्ति तद्ब्रूहीत्युक्त आह—अस्थूलमित्यादि। अस्थूलं न विद्यते स्थूलं यस्मिन्निति स्थूलभिन्नं स्थूलात्यन्ताभाववद्ब्रह्मेत्यर्थः। एवमग्रेऽपि बोध्यम्। अदीर्घमित्यनेन परिमाणवतां सामान्यतो निषेधमुक्त्वा विशेषत आह अलोहितमिति—लोहितवत्त्वं पृथिवीतेजसोरिति तयोर्निषेधः। अस्नेहमित्यनेन जलात्मत्वनिषेधः, अच्छायमतम इत्यनेन तमसः, अवायुरिति वायोः अनाकाशमित्याकाशस्य निषेधः। असङ्गमिति वासनारहितम्, कुतः भोगहेतोरभावादित्याह-अरसमित्यादि। न केवलं भोग्याभावादेव भोगवासनाया अभावः किन्तु भोगकरणाभावादपीत्यभिप्रेत्याह--अचक्षुष्कमिति। संग्रहेण निषेधमाह-न तदिति। तद्ब्रह्म किञ्चन किमपि नाश्नाति न भुङ्क्ते स्वव्यतिरिक्तस्य भोग्यस्याभावात्। अत एव कश्चन कोऽपि जनः तदक्षरं नाश्नाति न भुङ्क्ते। अत्र कारणेऽक्षरे सर्वस्यापि जगत ओतप्रोतस्याभावोक्त्या स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वज्ञापनेन मिथ्याभूतानात्मगुणदोषादिकमधिष्ठानभूतस्य ब्रह्मणो नास्तीति समर्थितम्। श्रुत्यन्तरमाह-अशब्दमिति। न विद्यते शब्दो यस्येत्यशब्दम्, शब्दादिमानेव

हेतुमाह—ज्योतिराकारकत्वादिति। स्वप्रकाशज्ञानरूपत्वेनाप्रमेयत्वात्प्रमेयत्वे घटादिवज्जडत्वापत्तेः। 'एतदप्रमेयं ध्रुव'मित्यादिश्रुतेरित्यर्थः॥ ६॥

ननु कस्य ब्रह्मभाव उपदिश्यते। ब्रह्मणः अब्रह्मणो वा? नान्त्यः। तस्य जडत्वादसत्वाच्च। न प्रथमः।

नारायणी।

व्येति ब्रह्म च शब्दादिरहितत्वान्न तथेतीत्याह—अव्ययमिति। न व्येति न क्षीयत इत्यर्थः। अत एव नित्यं यद्व्येति तदेवानित्यं नायं तथेति भावः। इतश्च नित्यम्—अनाद्यनन्तं न विद्यते आदिः कारणं यस्य तदनादि न विद्यन्तेऽन्तः कार्यं यस्य तदनन्तं कार्यकारणभावरहितं तस्मान्नित्यमिति भावः। महतः बुद्धेः परं विलक्षणं नित्यविज्ञानस्वरूपं ध्रुवं कूटस्थनित्यं नाकाशादिवदापेक्षिकं नित्यं तमेवम्भूतं ब्रह्मात्मानं निचाय्य दृष्ट्वा मृत्युमुखात् अविद्याकामकर्मलक्षणात् प्रमुच्यते वियुज्यते। सर्वानर्थशून्यं—सर्वप्रपञ्चतत्कृतगुणदोषरहितम्। स्वप्रकाशेति। स्वं स्वरूपं प्रकाशो यस्येति स्वपरसाधारणव्यवहारसाधनज्ञानरूपत्वेनेत्यर्थः। षष्ठ्यर्थ उपकारकत्वम्। उपकारश्च प्रमातृभावापन्नस्य स्वस्य सर्वव्यवहारः प्रमातृभावेनोपकार्यस्य साक्षिरूपेणोपकारकत्वं स्वप्रकाशत्वमिति निष्कर्षः। तथापि स्वव्यवहारसिद्धिः कथं? स्वस्य स्वविषयत्वाभावादिति चेत्? शृणु। यथा परेषामालोके आलोकान्तरसंयोगाभावेपि प्रतियोगितानुयोगितान्यतरसम्बन्धेनालोकसंयोगवत्त्वादेवालोकघटादेः प्रत्यक्षम्, तथा यावद्विदेहकैवल्यं प्रतियोगितानुयोगितान्यतरसम्बन्धेन साक्षितादात्म्यरूपविषयतासम्बन्धवत्त्वात्साक्षिदृश्योभयव्यवहारोपपत्तिरिति। अधिकं त्वस्मत्कृतमहद्व्याख्याने द्रष्टव्यम्। अप्रमेयत्वात्—चिद्विषयतावत्त्वाभावात्, प्रमेयत्वे—साक्षिविषयतावत्त्वे, जडत्वापत्तेः—भासकच्चिद्भेदापत्तेः। तथात्वे जगदान्ध्यं प्रसज्येतेति भावः। अप्रमेयत्वं श्रुतिसिद्धमप्याह—एतदिति। चकारो विदिताविदितापरः 'इतिहोचुरि'त्यादिश्रुतिसमुच्चायकः॥ ६॥

सप्तमं पद्यमवतारयति—नन्वित्यादिना। ब्रह्मभावः—अभेदः, उपदिश्यते—तत्त्वमसीत्यादिना ज्ञाप्यते। ब्रह्मणः—सच्चिदानन्दस्य साक्षिणः, अब्रह्मणः—कार्यकारणभावापन्नस्य मायातत्कार्यस्य। जडत्वात्—सच्चिद्भिन्नत्वात्, तथाचातद्रूपस्य तद्रूपत्वप्रतिपादनं बाधितार्थकत्वात् भ्रान्तप्रलाप

उपदेशानर्थक्यात्। ब्रह्मभावस्य स्वत एव सिद्धत्वात्। जीवस्य स्वतो ब्रह्मभावेऽप्यविद्याव्यवधानं ज्ञानेन निवर्त्यत इति चेन्न। अविद्यानिवृत्तेरात्मरूपत्वे द्वैतापत्तेर्ब्रह्मणोऽसिद्धिप्रसङ्गात्। तदुक्तं वार्तिके—

अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यते।
ब्रह्मार्थो दुर्लभोऽत्र स्याद्द्वितीये सति वस्तुनि॥

इति। अभिन्नत्वे चोपदेशानर्थक्यमित्युक्तम्। अत्र किं परमार्थतः फलाभावमभिप्रैषि, किं वा प्रतीतितो-

न्यायरत्नावली।

अविद्याव्यवधानम्-अविद्यारूपं व्यवधायकम्। द्वैतापत्तेः-सत्यात्मभिन्नस्यापत्तेः। अव्यावृत्तम्-अननुगतम्, अनुगतधर्मिशून्यम् अनुगतधर्मशून्यं च। द्वितीये-ब्रह्मभिन्ने। सति—सत्ये। परमार्थतः फलाभावं—पारमार्थिकस्वरूपेण फलस्याभावम्। प्र-

नारायणी।

एव स्यादिति भावः। असत्त्वाच्चेति—मिथ्यात्वादित्यर्थः। उपदेशानर्थक्यात्—परमपुरुषार्थप्रयोजकापूर्वार्थकवाक्यप्रयोगवैयर्थ्यात्। तदेवोपपादयति—ब्रह्मभावस्येति। स्वतः—उपदेशं विनैव, विद्यमानत्वात् साधनीयांशाभावेन साधनप्रयासो निरर्थक इति भावः। नन्वज्ञाननिवृत्त्युपलक्षितात्मा पुमर्थः अज्ञाननिवृत्तिश्च ज्ञानेनेति तदर्थमुपदेशः सार्थक एवेत्याशङ्कते—जीवस्येति। स्वतः—उपदेशादिकं विना। अविद्येति-अविद्यारूपं व्यवधायकम्। अविद्यानिवृत्तिरात्मनो भिन्नाऽभिन्ना वा? भिन्नापि सती असती वा? इत्यत्राद्यान्त्यपक्षस्य पुनः संसारोन्मज्जनप्रसञ्जकस्यातितुच्छत्वं मत्वा शेषपक्षौ दूषयति—अविद्यानिवृत्तेरिति। द्वैतापत्तेः-सत्यस्यात्मभिन्नस्यापत्तेः। नन्विष्टापत्तिः, न च श्रुतिविरोधः श्रुतेर्भावाद्वैतपरत्वेन विरोधाभावादित्यत आह—ब्रह्मण इति। असिद्धिप्रसङ्गात्—'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुत्युक्तस्वरूपहानिप्रसङ्गात्। वस्तुपरिच्छेदाङ्गीकारादिति भावः। अत्र वार्तिकवाक्यं प्रमाणयति—तदुक्तमिति। अव्यावृत्तेति—अननुगतानुगतधर्मशून्यम्। द्वितीये-ब्रह्मभिन्ने, सति-सत्ये, परमार्थतः-वस्तुतः, प्रतीतितः फलाभावमित्यस्य फलमलीकमित्यर्थः। तथाच किं वास्तवं फलमलीकं किं

ऽपि ? तत्राद्यमिष्टापत्त्या परिहरति—

न शास्ता न शास्त्रं न शिष्यो न शिक्षा
न च त्वं न चाहं न चायं प्रपञ्चः।
स्वरूपावबोधो विकल्पासहिष्णु-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम्॥ ७॥

शास्ता उपदेशकर्ता गुरुः। शास्त्रमुपदेशकरणम्। शिष्य उपदेशकर्म। शिक्षा उपदेशक्रिया। त्वं श्रोता, अहं वक्ता, अयं सर्वप्रमाणसन्निधापितः प्रपञ्चो देहेन्द्रियादिरर्थः परमार्थतो नास्तीत्यर्थः। द्वितीयं नि-

---

न्यायरत्नावली।

तीतितः—प्रातीतिकत्वेन रूपेण। फलाभावमित्यनुषज्यते। अत्र च फलाभावमित्यस्य फलरूपमलीकमित्यर्थः। तथा च ज्ञायमानं फलमलीकमिति भावः। एतेन प्रातीतिकफलस्य प्रातीतिकत्वरूपेणाभावस्यापि सिद्धान्तेऽपि स्वीकारात् पश्चात्तद्दूषणानुपपत्तिरित्यपास्तम्। परमार्थतो नास्तीति। तथा च शास्त्रादिसर्वप्रपञ्चस्य निषेधात् परमार्थत्वरूपेण ज्ञानफलस्यापि निषेधलाभ इति भावः। द्वितीयं—प्रातीतिकत्वविशिष्टं फलमलीकमित्यभिप्रा-

नारायणी।

प्रातीतिकं फलमलीकमिति प्रश्ननिष्कृष्टार्थः। परमार्थतो नास्ति परमार्थत्वविशिष्टमलीकमित्यर्थः। द्वितीयं प्रातीतिकत्वविशिष्टं फलमलीकमित्यभिप्रायः। आत्मैवाविद्यानिवृत्तिः, नचोपदेशवैयर्थ्यम्; ब्रह्मानुभवप्रतिबन्धकाज्ञानविघटकत्वेन सार्थकत्वादिति वाचस्पतिमिश्राः। तन्न सम्यक्। तन्निवर्त्तकत्वादिरूपतद्विघटकत्वस्य दुर्वचत्वात्। अतो नात्मस्वरूपा किन्तु पञ्चमप्रकारा निरुक्तप्रकारेण सत्त्वस्यासत्त्वस्य च विरोधेन सत्त्वासत्त्वयोश्चासमावेशात्। नाप्यनिर्वाच्या जन्यस्याज्ञानोपादानकत्वेन मुक्तावन्वयित्वासम्भवादिति केचित्। तदपि न सम्यक्। ज्ञानसाध्यायास्तस्या अज्ञानोपादानकत्वेनानिर्वाच्यत्वात्पञ्चमप्रकारान्तर्भावे मानाभावाद् ब्रह्मणोऽसिद्धिप्रसङ्गाच्च। तस्मान्न पञ्चमप्रकाराऽवि-

राकरोति—स्वरूपावबोधो विकल्पासहिष्णुरिति । अयमर्थः—यद्यप्यविद्यानिवृत्तिरात्माऽनात्मा वेत्यादिविकल्पने किमपि फलं निरूपयितुं न शक्यते, तथापि स्वरूपावबोधो विज्ञानफलमनुभूयते । न

न्यायरत्नावली ।

यम् । स्वरूपावबोधः—प्रकाशमानपूर्णानन्दरूपः । विज्ञानफलं-

नारायणी ।

द्यानिवृत्तिः किन्त्वनिर्वाच्यैव, तदुपलक्षितश्चात्मा पुमर्थ इत्यज्ञाननाशस्य मिथ्यात्वेन मुक्तावनन्वयित्वेपि न हानिः । उपलक्षितस्यानुवृत्तेरित्यपरे । तदपि न सम्यक् । अविद्यानाशस्य सुखदुःखाभावेतरत्वेन स्वतोऽपुरुषार्थत्वात् , अतोऽनवच्छिन्नानन्द एव पुरुषार्थः । स च यद्यपि नित्यसिद्धस्तथापि विस्मृतग्रैवेयकादिरिव ज्ञातत्वेन प्राप्यत्वात्फलमिति चित्सुखाचार्याः । एतदपि न सम्यक् । अनिर्वचनीयख्यातिवादिमते जाग्रद्बोधादिना प्रातीतिकस्वप्नपदार्थनाशस्येव ब्रह्मसाक्षात्कारेण 'ब्रह्म नास्ति न भासत' इति भ्रमसिद्धानन्दावरणनिवृत्तेर्मुख्यफलस्यैव सम्भवात् । ब्रह्मण औपचारिकफलवत्त्वकल्पनं न युक्तमित्यन्ये । इदमपि न युक्तिसहम् । निवृत्तेरनिरूपणस्योक्तेः । अपि च निवृत्तिः प्रागभावो वा नाशो वा अत्यन्ताभावो वा ? नाद्यः । अनाद्यज्ञानस्य प्रागभावायोगात् । प्रागभावस्यानादित्वेन ज्ञानसाध्यत्वायोगाच्च । नापि द्वितीयः । तस्य पारमार्थिकत्वे ज्ञानसाध्यत्वानुपपत्तिः, व्यावहारिकत्वे प्रपञ्चवज्ज्ञानबाध्यत्वावश्यकतया प्रतियोग्युन्मज्जनापत्तिः, प्रातिभासिकत्वे तु प्रतियोगिनोऽज्ञानादेः सत्यत्वापत्तिः, प्रातिभासिकाभावप्रतियोगिनः साक्षिणः सत्यत्वदर्शनात् । अत एव न तृतीयः । त्रिविधसत्ताकातिरिक्तस्याऽप्रसिद्धेः । नापि चतुर्थः । तस्य प्रतियोगिसमानाधिकरणत्वेनाकिञ्चित्करत्वादिति । तस्मान्न किञ्चिदेतत् , किन्तु निरतिशयसुखापरोक्ष्यमेव पुरुषार्थः । निरतिशयत्वं तु स्वं प्रत्यनावृतभासकचैतन्याभेदरूपापरोक्षत्वम् । अनावृतत्वं च स्वं प्रति ज्ञानेनेति केचित् । तदपि न सम्यक् । अनावृतत्वस्यावरणाभावघटितार्थत्वेन तद्दोषतादवस्थ्यात् , अतः सर्वस्याप्यज्ञाननाशद्वारकफलत्वाद अनिर्वाच्यत्वमेवेत्याशयेनाह—यद्यपीति । (१)*स्वरूपेति । परिपूर्णानन्दरूप-

(१) *अयमर्थः यद्यपि अविद्यानिवृत्तिरात्मानात्मा वेति विकल्पे न किमपि फलं

चैतत्कथमिति विकल्पनीयम् । सर्वद्वैतोपमर्दनेन विकल्पासहिष्णुत्वात् । न हि दृष्टेऽनुपपन्नं नाम । तथा

न्यायरत्नावली ।

चरममनोवृत्तिफलत्वेन प्रातीतिकेन विशिष्टम् । तथा च प्रातीतिकमज्ञाननिवृत्तित्वं पूर्णानन्दे प्रकाशमाने जीवन्मुक्तेन कल्पितम् । तद्विशिष्टस्य जन्यतारूपं फलत्वमपि प्रातीतिकम् । तदुक्तं वार्तिके—

निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।

इति भावः । न चैतत्कथमिति । वियदादिसर्वद्वैतोपमर्दरूपे कैवल्ये कल्पितस्य निवृत्तित्वस्यासम्भवात्सत्यमेव तद्वाच्यम्, अन्यथा ह्यविद्यैव स्यादिति भावः । विकल्पासहिष्णुत्वात्—आत्मनो विकल्पविषयवैशिष्ट्यस्यासहत्वात् । तथाचोक्तं निवृत्तित्वं जीवन्मुक्तिकाल एवास्ति न तु विदेहकैवल्य इति नोक्तदोष इति भावः । ननु तत्रापि किं मानम्? तत्राह—न हीत्यादि । 'या या प्रमा सा सा समानविषयकाज्ञानतत्प्रयुक्तवत्कालपूर्वत्वशून्यक्षणवृत्तिर्भवति, यथा शुक्त्यादिप्रमे'ति नियमे दृष्टे प्रत्यक्षादि-

नारायणी ।

स्वरूपावाप्तिः* विज्ञानफलं शास्त्राचार्यप्रसादजचरममनोवृत्तिफलम् तस्य च तत्त्वज्ञानात्पूर्वं स्वरूपस्य बद्धत्वमिव तत्त्वज्ञानादूर्ध्वं फलत्वमपि जीवन्मुक्तिदशायां प्रातीतिकमेवेति भावः । तत्त्वज्ञानादूर्ध्वम् अज्ञानदृष्टिशून्यो जीवन्मुक्तः स्वरूपेऽज्ञाननिवृत्तित्वं परिकल्प्य तद्विशिष्टस्य ज्ञानजन्यत्वरूपं फलत्वमपि कल्पयन् कृतकृत्यो भवति स्वकल्पिताज्ञानतत्प्रयुक्तवत्कालपूर्वत्वशून्यक्षणवृत्तिर्भवतीति यावत् । फलत्वकल्पनैव कथमिति नाशङ्कनीयमित्याह—नचैतदिति । विकल्पेति । विकल्पविषयत्वायोगात् जीवन्मुक्तिकाले स्वानुभवसिद्धस्य सकलविकल्पातीतस्य फलस्य विकल्पवैशिष्ट्यबाधादिति भावः । विकल्पातीतत्वमेव कथं तत्राह—नहीति । दृष्टे प्रत्यक्षंसिद्धे अनुपपन्नं नाम युक्तिविरुद्धं किञ्चित् अनुभवविरुद्धस्तर्को नोपादेय इति भावः । प्रातीतिकफलत्व-

निरूपयितुं शक्यते तथापि स्वरूपाववोधो विज्ञानफलमनुभूयते* विज्ञानफलमित्यादिसममग्रे ।

अयं चिह्नितः पाठो भिन्नः खपुस्तके ।

च श्रुतिः—

न निरोधो न चोत्पत्तिर्न बुद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥

न्यायरत्नावली ।

सिद्धे हि यस्माद्वैशिष्ट्यासहत्वमात्मनो बोधयन्ती सती नानुपपन्ना । ननु नानाज्ञानपक्षे दृष्टान्तसम्भवात्तादृशनियमः प्रत्यक्षादिसिद्धः ! एकाज्ञानपक्षे तु का गतिः ? तत्राह—तथा च श्रुतिरिति । तथा विकल्पासहत्वमात्मनो बोधयन्ती सती ज्ञानात् ब्रह्मभावं दर्शयति द्वैतजातं च वारयतीत्यग्रेऽन्वयः । निरोधः नाशः, उत्पत्तिः जन्म, प्रपञ्चस्येति शेषः । बुद्धस्तत्त्वदर्शी । साधकः श्रवणादिमान् । मुक्तः अज्ञाननिवृत्तिमान् । परमार्थतेति भावार्थो विवक्षितः । निरोधादिशून्यं परमार्थ इत्युक्ते तच्छून्यत्वं विकल्पासहत्वं न लभ्येत, ततस्तथानुक्त्वा इत्येषा परमार्थतेत्युक्तम् । इतिशब्देन तु सर्ववैशिष्ट्यासहं शुद्धं चिद्रूपमुक्तम् । (१)तत्

नारायणी ।

कल्पना श्रुतिसिद्धापीत्याह—तथेति । निरोधः नाशः उत्पत्तिः जन्म, प्रपञ्चस्येति शेषः। बद्धः अनाद्यज्ञानवान् , साधकः तन्निवृत्त्यनुकूलश्रवणादिमान्, मुमुक्षुः मुक्तः स्यामितीच्छावान् , मुक्तः अज्ञाननिवृत्तिमान्। परमार्थतेति । भावार्थोऽविवक्षितः निरोधादिशून्यं परमार्थ

(१) तत्सर्वमभवदिति । एवकारानुषङ्गेण सर्वं दृश्यजातं ब्रह्मैव । न तु ज्ञातं ब्रह्म दृश्यतत्कालपूर्वकालवृत्तीत्यर्थः । 'सविशेषणे ही'ति न्यायात् । ब्रह्मज्ञाने तादृशपूर्वकालवृत्तित्वाभावलाभः । यथा हि 'अयं पाण्डित एव न त्वस्य पाण्डित्यं चारु' इत्यादौ न त्वित्यादिनैवकारार्थस्यानुवादबलादेवकारस्य तादृशानुवादसमानार्थकत्वम् ,तथा 'यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यत' इत्यादौ क इत्यादिनैवकारार्थानुवादबलात् ब्रह्मज्ञाने मोहादिपूर्वकालवृत्तित्वाभावः एवकारेण बोध्यत इति निर्णीयते । तथा च हेत्वर्थकशतृप्रत्ययेन पूर्वकालवृत्तिताघटितहेतुत्वोपस्थापनात् पूर्वकालवृत्तितासम्बन्धेन मोहाद्यभावधीसम्भवेन मोहादिकारणद्वैतसत्त्वे मोहादेरुक्ताभावानुपपत्त्या च द्वैतकालपूर्वकालवृत्तित्वाभावस्य ब्रह्मज्ञाने धीसम्भव इति ध्येयम् । इति पाठान्तरं छपुस्तके ।

'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदि'त्याद्याः । पूर्वमपि ब्रह्म-

न्यायरत्नावली ।

सर्वमभवदिति । सर्वं दृश्यजातं ब्रह्माभवदित्यर्थः। सर्वदृश्यानां ज्ञातब्रह्मभवनं स्वकालपूर्वकालवृत्तिभिन्नतया ज्ञातं यद् ब्रह्मतादात्म्यम् । शुक्तौ ज्ञातायां सत्तामारोपितं रजतादिकं नाभवदित्यादौ तादृशरजतादावुक्तभिन्नाया ज्ञातशुक्तेस्तादात्म्यं बुध्यते । अत एव 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् तत् केन कं जिघ्रेदि'त्यादौ सर्वदृश्यानामात्मभवनमुक्त्वा अर्थात् प्राप्तं तत्त्वज्ञात्मनि स्वकालपूर्ववृत्तितासम्बन्धेन दृश्यादेरत्यन्ताभावमाक्षेपार्थककिंशब्देन श्रुतिरनुवदति । अस्येतिपदस्य तत्त्वसाक्षात्कारवदर्थकस्यानुषङ्गात्, किमित्यस्यापि विभक्तिव्यत्ययेन लिङ्गव्यत्ययेन चानुषङ्गात् , को ज्ञाता, किं यथा स्यात् तथा पश्येदित्यर्थलाभेन तत्त्वसाक्षात्कारवदात्मस्वरूपे द्रष्टृदृश्यदर्शनतत्साधनानामुक्तसम्बन्धेनात्यन्ताभावबोधः । एवं तत् केन कं जिघ्रेदित्यादावपि । किञ्च 'यत् फलं श्याममासीत् , तदिदानीं रक्तमेवाभवत् , न तु स्वनिष्ठश्यामतया समकालम् , नापि पूर्वकालम्' इत्यादौ नत्वित्यादिना तदिदानीमित्यादेरर्थानुवादात् तयोस्तुल्यार्थकत्वम् । रक्तादिपदस्य उक्तकालादिभिन्ने लक्षणा-

नारायणी ।

इत्युक्ते तच्छून्यत्वविकल्पासहत्वादिकं न लभ्येत ततस्तथाऽनुक्त्वा परमार्थतेत्युक्तम् , एतच्छब्देन सर्वनाम्ना सर्ववैशिष्ट्यासहं शुद्धचिद्रूपमुक्तम् । श्रुत्यन्तरमाह— ब्रह्म वेति । अग्रे-प्राग्बोधात्-वा अपि, इदं-शरीरस्थं प्रमात्रादि साक्षिभूतं त्वंपदलक्ष्यं ब्रह्मैवासीन्न सांसारिकधर्मान्विततया, तथाच शुद्धचिदानन्दैकरसमेव त्वमासीरिति गुरुणा बोधितमात्मानं तदेवास्थूलादिलक्षणलक्षितं ब्रह्मैव अवेत् ज्ञातवान् । एवकारोऽत्राविनाभावरूपाभेदं वारयति ब्रह्मभिन्नं नावेदित्यर्थः । ज्ञानाकारमाह— अहमिति । ज्ञानफलमाह—तस्मादिति । तस्माद्विज्ञानात् सर्वं भो-

न्यायरत्नावली ।

स्वीकारेण तदन्ययोगव्यवच्छेदार्थकस्यैवकारस्य तादृशसमकालादितादात्म्यव्यवच्छेदबोधकत्वेन च तत्सम्भवः । तथा 'तत्केने'त्याद्यनुवादतुल्यार्थकत्वात् 'यत्र त्वस्ये'त्यादेरुक्तार्थकत्वं स्वीक्रियते । लक्षणया आत्मपदोपस्थापितस्यापि तस्य दृश्यकालपूर्ववृत्तिभिन्नस्यात्मनो भिन्नस्यास्य दृश्यकालपूर्ववृत्तितादात्म्यव्यवच्छेदरूपस्य अन्ययोगव्यवच्छेदस्य एवकारेण बोधसम्भवात्। विशेषणगतैवकारस्यापि शिरोमण्यादिभिरप्यन्ययोगव्यवच्छेदबोधकत्वस्वीकारात् । तस्य अयोगव्यवच्छेदबोधकत्वस्वीकारेऽपि दृश्यकालपूर्ववृत्तिभिन्नतादात्म्यायोगव्यवच्छेदबोधकत्वसम्भवात् यत्रेत्यनेनोक्ते तत्त्वसाक्षात्कारकाले दृश्येषु तादृशव्यवच्छेदयोस्सत्त्वात्। यदि त्वात्मैव विशेष्योऽत्र स्वीक्रियते, अत एव 'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानत' इत्यत्राभूदित्येकवचनान्तामित्यालोच्यते, तदा तादृशभिन्ने भूतपदमेव लाक्षणिकम् । तत्सर्वमभवदित्यत्रानुवादाभावेऽप्युक्तवाक्यसमानार्थत्वाय तादृशार्थकत्वम् । 'सविशेषणे ही'तिन्यायात् ब्रह्मज्ञाने तादृशपूर्ववृत्तित्वलाभः । एवं 'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कश्शोक एकत्वमनुपश्यत' इत्यादौ क इत्यादिना एवकारार्थवादबलात् ब्रह्मज्ञाने मोहादिपूर्वकालवृत्तित्वं एवकारेण बोध्यत इति निर्णीयते । हेत्वर्थकशतृप्रत्ययेन पूर्वकालवृत्तिताघटितहेतुत्वोपस्थापनात् पूर्वकालवृत्तितासम्बन्धेन मोहाद्यभावधीसम्भवेन मोहादिकारणद्वैतसत्त्वे मोहादेरुक्ताभावानुपपत्त्या द्वैतवत्कालपूर्वकालावृत्तित्वस्य ब्रह्मज्ञाने धीसम्भवः । यथाश्रुते साक्षात्सम्बन्धेन मोहादेरभावस्यात्मनि बोधे जीवन्मुक्तेः बाधात् । विवक्षितार्थे तु चरमज्ञाने पूर्वज्ञानहेतुकस्य उक्तकालावृत्तित्वस्य धीसम्भव इति ध्येयम् । इत्याद्येत्याद्यपदेन 'ब्रह्मवेद ब्रह्मैव भवती'त्यादिश्रुतिसङ्ग्रहः ।

स्वरूपस्यैव सतो जीवस्य ज्ञानाद्ब्रह्मभावं दर्शयति। सर्वं च द्वैतं वारयति ॥ ७ ॥

नन्वात्मनः स्वप्रकाशचैतन्यरूपत्वे सर्वदा भासमानत्वेन जाग्रत्स्वप्नसुषुप्त्यादिव्यवस्था कथम्? न च भ्रान्त्येव व्यवस्थेति वाच्यम्। तथा सति सर्वस्यैव स्वा-

न्यायरत्नावली।

ज्ञानादित्यादि। ज्ञानात् ब्रह्मभावो नाम ज्ञायमानजीवस्वरूपस्य ब्रह्माज्ञानकालपूर्वत्वशून्यक्षणवृत्तित्वम्। वारयतीत्यत्रापि ज्ञानादित्यनुषज्यते। तथा च ज्ञानस्वरूपं द्वैतवत्कालपूर्वत्वशून्यक्षणवृत्तितया बोधयतीत्यर्थः। अथवा ननु प्रातीतिकफलत्वाविशिष्टोद्देशेन मुमुक्षूणां सर्वत्यागपूर्वकं श्रवणादौ प्रवृत्त्यनुपपत्तिः। प्रवृत्तिकाल एव 'आत्मसुखमनादि तस्य फलत्वं प्रातीतिकमि'ति ज्ञानसम्भवेन सिद्धत्वेन ज्ञाते आत्मसुखे इच्छानुदयात् तत्राह—न हीत्यादि। दृष्टे अज्ञानतत्प्रयुक्तविरोधिमनोवृत्तिविषयत्वाविशिष्टात्मसुखे परमपुरुषार्थ उद्देश्ये सम्भवति सति श्रवणादौ प्रवृत्त्यादिकं न ह्यनुपपन्नमित्यर्थः। आत्मभिन्नस्य सर्वस्यापरमार्थत्वेन तद्विरोधित्वमात्माकारवृत्तेर्युक्तमित्याशयेन न निरोध इत्याद्युक्तम्। तस्यामुक्तविरोधित्वबोधकं 'ब्रह्म वा' इत्यादिकमित्याशयेन तदुक्तम्। तदेतत् अस्माभिरेतद्ग्रन्थादावेवोक्तम् ॥ ७ ॥

भ्रान्त्यैवेति। यथा स्वप्नमध्ये जाग्रदादिकं भिन्नतया भ्रा-

नारायणी।

कृजातं तद् ब्रह्म अविद्यातत्कार्याभिमाननिवृत्त्याऽनुगतसच्चिदानन्दात्मकम् अभवत् भवति। अधिकं महद्व्याख्यानेनुसन्धेयम् ॥ ७ ॥

अष्टमं पद्यमवतारयति—नन्विति। आत्मनः 'योयं विज्ञानमय' इति श्रुतिबोधितस्य मनआद्यतिरिक्तस्य। स्वप्रकाशेति। संविदन्तरानपेक्षत्वे सत्यपरोक्षव्यवहारचिदात्मत्वे(१)। सर्वदेति। 'अहं न प्रकाश'इत्यज्ञानभासकत्वेन व्यवहारविषयत्वे, सुषुप्त्यादीत्यादिना तत्तदवस्थाकृतभोगपरिग्रहः। व्यवस्था—असाङ्कर्यम्। भ्रान्त्यवेति। यथा स्वप्ने जाग्रदादि-

(१) अपरोक्षव्यवहार विषयत्वे, विषयत्वयोग्यत्वे इत्यन्यतरपाठस्यावश्यकतात्र।

न्तत्वापत्तिरिति चेन्न । लक्षणतस्त्रयाणामपि स्वप्नत्वेऽपि प्रतिभासतोऽविद्याकृतविशेषसम्भवात् सदसद्विलक्षणत्वेन च सविशेषत्वाद्व्यवस्थोपपत्तेः। परमार्थतस्तु न कापि व्यवस्थेत्याह—

न जाग्रन्न मे स्वप्नको वा सुषुप्ति-
र्न विश्वो न वा तैजसः प्राज्ञको वा ।
अविद्यात्मकत्वात्त्रयाणां तुरीय-
स्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥ ८ ॥

अत्र लयक्रमेण पौर्वापर्यव्यपदेशः । तथा हि—ज्ञा-

न्यायरत्नावली ।

न्त्या कल्पितं तथेत्यर्थः । लक्षणतः—आविद्यकत्वादिरूपेण । त्रयाणामपीति । 'त्रयमप्येतत् स्वप्नं सुषुप्तं मायामात्रं त्रयस्स्वप्नाः' इत्यादिश्रुतिभिरपि तथोक्तम् । त्रयं जाग्रत्स्वप्नसुषुप्तिरूपम् । एवं त्रय इत्यपि । प्रतिभासतः व्यवहारतः । ननु मिथ्याभूतस्य सदन्यत्वेऽपि सविशेषत्वस्वीकारे तच्छब्दस्यापि स स्यात् तत्राह-सदित्यादि । लयक्रमेणेति । जाग्रद्विश्वयोः स्वप्नतैजसयोः

नारायणी ।

क्रमसाङ्कर्येणैव कल्पितं तथेत्यर्थः । सर्वस्यैव अवस्थात्रयस्यापि। लक्षणतः आविद्यकत्वादिरूपेण, त्रयाणां—जाग्रत्स्वप्नसुषुप्तीनां स्वप्नत्वेपि, 'त्रयमप्येतत्स्वप्नं सुषुप्तं मायामात्रमि'ति श्रुतिसिद्धस्वप्नत्वेपि । प्रतिभासतः-व्यवहारतः । अविद्याकृतेति । अविद्याकृतो यो विशेषोऽविद्यातिरिक्तदोषजन्यत्वरूपस्तस्मात् । सविशेषत्वात्—आत्मज्ञानातिरिक्तज्ञाननाश्यत्वे सति सत्त्वात् आत्मज्ञानातिरिक्तज्ञानाबाध्यत्वे सति सत्त्वाच्च । व्यवस्थोपपत्तेः-असाङ्कर्योपपत्तेः । तत्राद्यस्य स्वप्ने द्वितीयस्य जागरणे सत्त्वादिति भावः । ननु परमार्थसदन्यत्वेपि यदि मिथ्याभूतसत्ताविशेषरूपं सविशेषत्वं तदाऽसन्नृशृंगस्य विकल्पोल्लिखिता सत्तापि स्यात्तत्राह—असद्विलक्षणेनेति । अपरोक्षतया प्रतीयमानत्वादिति भावः । लयक्रमेणेति । जाग्रद्विश्वयोः स्वप्नतैजसयोः सुषुप्तिप्राज्ञयोर्लय इति क्रमसदृशक्रमेणेत्यर्थः।

स्मिन्मते पदार्थो द्विविधः, दृक् दृश्यं च। अन्येषां वादिपरिकल्पितानां पदार्थानामत्रैवान्तर्भावात्। तत्र दृक्पदार्थः आत्मा पारमार्थिक एकः सर्वदैकरूपोऽप्यौपाधिकभेदेन त्रिविधः, ईश्वरो जीवस्साक्षी चेति। तत्र कारणीभूताज्ञानोपाधिरीश्वरः। अन्तःकरणतत्संस्काराव च्छिन्नाज्ञानोपहितो जीवः। प्रपञ्चितं चैतदधस्तात्। अविद्याप्रतिबिम्बेश्वरपक्षे बिम्बचैतन्यं साक्षी, बिम्बेश्वरपक्षे तु बिम्बप्रतिबिम्बमुखानुगतमुखस्वरूपवज्जीवेश्वरानुगत

न्यायरत्नावली।

तयोस्सुषुप्तिप्राज्ञयोर्लय इतिक्रमसदृशक्रमेणेत्यर्थः। बिम्बेश्वरेत्यादि। यथा बिम्बत्वप्रतिबिम्बत्वोपहितरूपाभ्यां मुखं द्वेधा

नारायणी।

पूर्वं चापरं चेति पूर्वापरे तयोर्भावः पौर्वापर्यं प्रथमपश्चाद्भावस्तेन निर्देशः प्रथमतः कार्यस्य जाग्रदादेः पश्चात्कारणस्य सुषुप्त्यादेः कथनम्। अत्रोक्तिलाघवात् लयक्रम एव प्रागुक्तः कार्यस्य कारणे लयप्रदर्शनेनैव कार्यकारणभावलाभात्, सृष्टिक्रमनिर्देशे तु लयक्रमस्य नैयायिकादिमतवारणाय पृथगुक्तिरवश्यं वाच्या तथाच गौरवं स्यादिति भावः। शिष्यबुद्धिवैशद्याय सकलवेदान्तरहस्यं प्रदर्शयितुं टीकाकारो भूमिकामारचयति—तथाहीति। अस्मन्मते—वेदान्तमते, पदार्थः—पदस्यार्थः पदाभिधेय इति यावत्। द्विविधः—द्विप्रकारः। दृगिति। निरुक्तस्वप्रकाशत्वेन दृशः साक्षिभास्यत्वाभावात् पृथङ्निर्देशः। पदार्थत्वं दृग्दृश्योभयान्यतरत्वव्याप्यम्, दृक्त्वं दृश्यत्वं चोभयं पदार्थविभाजकमिति यावत्। ननु वैशेषिकादिभिर्द्रव्याद्यन्यतमत्वादिना पदार्थत्वव्यापकत्वाङ्गीकारात्कथमेतदित्याशङ्क्याह—अन्येति। अत्रैव दृग्दृश्ययोरेव अन्तर्भावं दर्शयिष्यन्नाह—तत्रेति। तत्र दृग्दृश्ययोर्मध्ये, आत्मा—अनात्मनामधिष्ठानम्, पारमार्थिकः—स्वान्यूनसत्ताकपरिच्छेदवद्भिन्नः, एकः—अद्वीतीयः, सर्वदैकरूपोपि—कूटस्थनित्योपि ( औपाधिकभेदेन—उपाधिकृतभेदेन, ) त्रिविधः—त्रिप्रकारः। तदेवाह—ईश्वर इति। तत्रेशादिपदप्रवृत्तिनिमित्तं प्रसङ्गादाह—तत्रेत्यादि। तत्र—ईश्वरादिषु, अधस्तात्प्रथमश्लोकव्याख्याने। तत्र यो विशेषस्तत्राह—बिम्बेश्वरपक्षेति। दर्पणस्य ग्रीवास्थमुखयोर-

सर्वानुसन्धातृ चैतन्यं साक्षीत्युच्यते। (१)वार्तिककारमते त्वीश्वर एव साक्षीति द्वैविध्यमेव जीवेश्वरभेदेन दृशः। तत्रेश्वरोऽपि त्रिविधः। स्वोपाधिभूताविद्या-गुणत्रयभेदेन विष्णुब्रह्मरुद्रभेदात्। कारणीभूतसत्त्व-गुणावच्छिन्नो विष्णुः पालयिता। कारणीभूतरजउप-हितो ब्रह्मा स्रष्टा। हिरण्यगर्भस्तु महाभूतकारणत्वा-

न्यायरत्नावली।

भिद्यते। दर्पणाद्युपाध्यन्तर्गतत्वे सत्यौपाधिकपरिच्छेदशून्यत्वे च सति बहिःस्थितस्वरूपकत्वं प्रतिबिम्बत्वम्। बिम्बस्य वारणा-याद्यम्। घटाकाशादिवारणाय द्वितीयम्। दर्पणाद्य-न्तर्गततदवयववारणाय तृतीयम्। उपाध्यनन्तर्गतत्वे सति उपा-ध्यन्तर्गतरूपाभिन्नबहिःस्थितत्वं बिम्बत्वमिति विवेकात्। तथोक्तो-पहितमुखद्वयात् शुद्धरूपं मुखं भिद्यते। शुद्धस्योपहितकल्पना-धिष्ठानत्वेन ततो भेदस्यावश्यकत्वात्। तथा च बिम्बत्वप्रतिबि-म्बत्वोपहितजीवेश्वराभ्यां शुद्धचिदन्या। विशिष्टकेवलयोर्भेदा-भेदस्वीकारेण तस्यां तदुभयाभेदस्यापि स्वीकारात् तदुभयानुस्यू-तापि सेति भावः। जीवस्यापि कार्यभूतमनोगतसत्त्वादिगुणाव-च्छिन्नत्वेन तत्रातिव्याप्तिवारणायाह—कारणीभूतेति। अक्षा-

नारायणी।

नुगतं यन्मुखं स्वं स्वरूपं मुखाकृतिः तद्वज्जीवेश्वरयोरन्तःकरणाव-च्छिन्नयोरनुगतं यत्सर्वानुसन्धातृ चैतन्यम् उभयोपाध्युपलक्षितं सर्वाधिष्ठानचिन्मात्रं साक्षीत्यर्थः। तत्र विशिष्टकेवलयोर्भेदाभेदाङ्गी-कारात् बिम्बप्रतिबिम्बाभ्यां शुद्धस्य भिन्नत्वं तदनुस्यूतत्वं च द्वयमप्यवि-रुद्धमिति भावः। वाचस्पतिमते विशेषमाह—वाचस्पतीति। स्वोपाधीति। ईश्वरोपाधिभूतायाः मायायाः सत्त्वरजस्तमोगुणानां भेदेन जीवस्यापि का-र्यभूतमनोगतसत्त्वगुणावच्छिन्नत्वात्तत्रातिव्याप्तिवारणाय। कारणीभूतेति-

(१) वाचस्पतिमते इति कखपुस्तकयोः।

भावात् न ब्रह्मा, तथापि स्थूलभूतस्रष्टृत्वात् (१)क्वचिद्
ब्रह्मेत्युपचर्यते । कारणीभूततमउपहितो रुद्रः संहर्ता ।
एवं चैकस्यैव चतुर्भुजचतुर्मुखपञ्चमुखाद्या पुमाकाराः

न्यायरत्नावली ।

र्यभूतेत्यर्थः । क्वचिदिति ।

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्त्तत ।
तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते ।

इत्यादिश्रुतौ,

ब्रह्मतत्त्वं तपो वेदाः ब्रह्मा विप्रः प्रजापतिः ।

इत्यादिकोशे चेत्यर्थः । एवं चेति । चतुर्भुजादिशरीरकार्यपरिपालनादेर्विष्ण्वादिकर्तृकत्वे चेत्यर्थः । एकस्यैवेति । ननु चतुर्भुजाकारो विष्णोरवतारः, चतुर्मुखाकारो ब्रह्मणः, पञ्चमुखाकारो रुद्रस्य, लक्ष्म्याकारो विष्णोः, भारत्याकारो ब्रह्मणः भवान्याकारो रुद्रस्येति विशिष्य वक्तव्यम्, किमित्येकस्येत्युक्तम् ? उच्यते । चतुर्भुजशरीरस्य पालनमेव कार्यमिति वक्तुमशक्यम्, दैत्यसंहारादिकार्यस्य दर्शनात् । तस्य देवरक्षणफलकत्वेऽपि तमःकार्यत्वेन

नारायणी ।

मकार्यीभूतेत्यर्थः । क्वचिदिति ।

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥
तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते ।

इत्यादिश्रुतौ । एवं चेति । चतुर्भुजादिशरीरकार्यपालनादेर्विष्ण्वादिकर्तृकत्वे चेत्यर्थः । एकस्यैवेति । मुख्यस्यैव कारणोपाधिकस्येत्यर्थः । ननु चतुर्भुजाकारो विष्णोरवतारः, चतुर्मुखाकारो ब्रह्मणः, पञ्चमुखाकारो रुद्रस्य, लक्ष्म्याकारो विष्णोः, भारत्याकारो ब्रह्मणः, भवान्याकारो रुद्रस्येति विशिष्यवक्तव्यं कथमेकस्योक्तम्? उच्यते ।

(१) ब्रह्म तत्त्वं तपो वेदाः ब्रह्मा विप्रः प्रजापतिरिति कोशादित्यर्थः ।

न्यायरत्नावली ।

रुद्रकार्यत्वात् । एवं पञ्चमुखशरीरे त्रिपुरसंहारादितमःकार्यस्य जगत्पालनफलकत्वेन विष्णुकार्यत्वदर्शनात् न रुद्रकार्यनिर्णयसम्भवः । एवं भवान्यादेः दैत्यादिसंहर्त्रीत्वेऽपि पालनरूपविष्णुकार्यदर्शनात् हरिवंशादौ विष्ण्वादिरूपत्वस्य स्पष्टमुक्तत्वाच्च न रुद्रादिरूपत्वनिर्णयः । अत एव सरस्वत्यादेरपि पालनादिकार्यं पुराणादौ तत्र तत्रोक्तमिति न ब्रह्मादिरूपत्वनिर्णयः । तस्मात् चतुर्भुजादिशरीरं रुद्रादेरपि । एतदभिप्रायेणैव—

हरिरूपी महादेवो लिङ्गरूपी जनार्दनः ।
ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेत् ।

इत्यादि ब्रह्मनारदीयस्थानि,

नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम'इत्यादिमहस्रनामभाष्योदाहृतानि च वचनानि समञ्जसानि । अन्यथा गुणभेदेन भेदसत्त्वात् विष्णुशिवादिपदानां शिवविष्ण्वादिनामत्वासम्भवाच्चासङ्गतेः। उक्ताभिप्रायादरे तु सत्त्वगुणावच्छिन्नचित इव चतुर्भुजशरीरवच्छि-

नारायणी ।

चतुर्भुजशरीरिणः पालनकर्तृताप्रयोजकं विष्णुत्वमेवेति वक्तुमशक्यम्। दैत्यसंहारादिरूपरुद्रकार्यदर्शनात् । तस्य देवरक्षणफलकत्वेऽपि तमःकार्यत्वेन रुद्रकार्य्यत्वात् । एवं पञ्चमुखशरीरावच्छिन्नस्य त्रिपुरादिसंहर्तृत्वेऽपि न रुद्ररूपत्वनिर्णयः । 'प्रज्ञा च तस्मात्प्रसृता पुराणी'ति श्रुत्या विज्ञानमुक्तिदानादिरूपविष्णुकार्यप्रतीतेः । ज्ञानादीनां सत्त्वकार्यत्त्वेन विष्णुकार्यत्वात् । एवं भवान्यादेर्दैत्यादिसंहर्तृत्वेऽपि पालनरूपविष्णुकार्यप्रतीतेर्न रुद्ररूपत्वनिर्णयः । एवं सरस्वत्या अपि ज्ञानपालनादिरूपविष्णुकार्यप्रतीतेर्न ब्रह्मरूपतानिर्णयः । तस्मात्सर्वाणि शरीराणि सर्वेषामपि । पालनादिरूपस्य चतुर्भुजादिशरीरावच्छिन्ने कलृप्तकार्यस्य रुद्रादावपि प्रतीतेः । एतदभिप्रायेणैव—

हरिरूपी महादेवो लिङ्गरूपी जनार्दनः ।
ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेत् ।

न्यायरत्नावली ।

जातिविशेषविशिष्टस्यापि हरिशब्दार्थत्वात् । अन्यथा श्रुतिपुराणादौ तत्तच्छब्देन तन्मात्रव्यवहारानुपपत्तेः । महादेवशब्दितस्य तमोऽवच्छिन्नचैतन्यस्य चतुर्भुजशरीराभिमानित्वात् महादेवाभिमानाविषयस्य लिङ्गस्य पालनरूपसत्त्वगुणकार्याय जनार्दनशब्दितसत्त्वावच्छिन्नचिद्रूपविष्णवभिमानविषयत्वाच्च हरीत्यादेराज्ञस्यम् । चतुर्भुजशरीरस्यैव तदभिमानिनोस्सत्त्वतमोऽवच्छिन्नचिद्रूपहरिहरयोरपि हरिनारायणादिशब्दार्थत्वान्नामानीत्यादेरप्याज्ञस्यम् । कारणीभूतसत्त्वाद्यवच्छिन्नचितां विष्णवादिरूपत्वं मैत्रायणीयशाखायां श्रूयते—'अथ यो ह खलु वा वास्य तामसोंऽशोऽसौ (१)स ब्रह्मचारिणो योऽयं रुद्रोऽथ यो ह खलु वा वास्य राजसोंऽशोऽसौ स ब्रह्मचारिणो योऽयं ब्रह्माऽथ यो ह खलु वा वास्य सात्त्विकोंऽशोऽसौ स ब्रह्मचारिणो यो यं विष्णुस्स वा एष पुरुषः एकस्त्रिधाभूत' इत्यादि । तत्र दीपिका व्याख्या । तामसः तमः प्रधानोंशः तमउपाधिको विशेषः, हे ब्रह्मचारिणः। एवमग्रेपीति । तथा भवान्यादीनामपीश्वरत्वमाश्वलायनैराम्नायते 'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधामहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे

नारायणी ।

इत्यादिबृहन्नारदीयवाक्यानि । तस्मादेकस्यैवेश्वरस्य सत्त्वगुणावच्छिन्नत्वादिनेव चतुर्भुजादिशरीरावच्छिन्नत्वादिना हरित्वादिकमिति संक्षेपः । एतच्च स्पष्टं मैत्रायणीयशाखादौ । 'अथ यो ह खलु वा वास्य तामसोंशोऽसौ स ब्रह्मचारिणो योऽयं रुद्रो अथ यो ह खलु वा वास्य राजसोंशोऽसौ स ब्रह्मचारिणो योऽयं ब्रह्माथ यो ह खलुवा वास्य सात्विकोंशोऽसौ स ब्रह्मचारिणो योऽयं विष्णुः स वा एष एकस्त्रिधाभूत'इत्यादि । अत्र च ब्रह्मचारिण इत्यादि

(१) अत्र स ब्रह्मचारिण इत्यादि सर्वत्र सपदरहितः पाठो गपुस्तके, परन्तु मन्त्रगतं पदं दृष्ट्वा प्रपूरितं सर्वत्राऽस्माभिः ।

न्यायरत्नावली ।

हन्त वा उ अहं जनाय समरं कृणोम्यहं द्यावापृथिवी आविवेश। अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तस्समुद्रे ततोऽवतिष्ठे भुवनानि विश्वोतामूं द्यां वर्ष्मणोपस्पृशामि। अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा। परो दिवा पर एना पृथिव्यै तावती महिना सञ्च बभूवे'ति भवान्याः (१)अहमित्यादि। *(२)अम्भृणस्य ऋषेः दुहिता वाक् 'सैव भवान्या अवतारो वैदिकेषु प्रसिद्धः। सा जगत्कारणतया आत्मानमुक्तवती—अहमेवेदं वदामि किं देवैर्मानुषैश्च सेवितं ब्रह्म यं पुरुषमनुकाम्पितं कामये इच्छामि तमुग्रं सर्वोत्कृष्टं कृणोमि करोमि, ब्रह्माणं स्रष्टारम् ऋषिमतीन्द्रियार्थदर्शिनं सुमेधां सुप्रज्ञं रुद्राय रुद्रस्य आतनोमि ज्यायुक्तं करोमि, ब्रह्मद्विषो ब्राह्मणद्वेष्टारं शरवे शरुं हिंसकं हन्त वा उ हन्त वै हन्तुम्, उः पादपूरणार्थः, समरं सङ्ग्रामं कृणोमि करोमि, किमर्थं जनाय मदीयस्तवादियुक्तजनाय तच्छरीरमाविश्य तदीयजयाय करोमि, "यथा कुरुपाण्डवयुद्धे श्रीकृष्णप्रेरितेनार्जुनेन स्तुता तदीयजयार्थं सङ्ग्रामं कृतवती" द्यावापृथिवी दृश्यमात्रम् आविवेश अन्तर्यामिरूपेण प्रविष्टा, पितरं द्युलोकं सुवे प्रसुवे जनयामि, 'द्यौः पिते'तिश्रुतेः, अस्य भूलोकस्य मूर्धन् मूर्ध्नि

नारायणी ।

सम्बोधनम् अन्यत्स्पष्टम्। एवं भवान्यादीनामीश्वरत्वं केनोपनिषदि

---

(१) ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियमित्यादि लक्ष्म्याः तस्यास्समुद्रा अधिविक्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः। ततः क्षरत्यक्षरन्तद्विश्वमुपजीवति। प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती। धीनामवित्र्यवत्वित्यादि सरस्वत्याः। अनुक्रमणिकाव्याख्याने तस्या इति वाचस्समुद्रा आप इत्युक्तम्। एवं भारतपुराणवचनान्यनन्तान्युक्तार्थानि सन्ति। विस्तरभयान्न लिख्यन्ते। इति पाठान्तरं छपुस्तके। अयं पाठ एतस्मिन्नपि पुस्तके अग्रे ३५७ पृष्ठे वर्तत एव।

(२) अमरणस्येति गपुस्तके। अत ऊर्द्ध्वं सर्वत्र गपुस्तके त्रुटितपाठस्यावश्यकस्य सन्धानं शोधनञ्च कृतम् *......* एतच्चिह्नद्वयान्तर्गतपाठे क्वचित्क्वचित्।

न्यायरत्नावली।

समुद्रे ब्रह्माणि अप्सु भूतेषु अन्तर्यामिकारणरूपा मम योनिः य-स्यामीक्षणरूपं गर्भं करोमि।

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।

इति गीतोक्तेः, ततः हेतोः विश्वानि भुवनानि अनुतिष्ठे अनुप्रविश्य विविधं तिष्ठामि, उत अपि च वर्ष्मणा मायाशरी-रेण वात इव अन्याप्रेरिता सती प्रवामि वर्ते, विश्वानि भुवना-नि जनयन्ती दिवा द्युलोकस्य एनाः पृथिव्याः अस्याः भूमेः परः परस्तात् अहं (१)सम्बभूवेति*। एवं श्रुत्यन्तरमपि 'ब्रह्म ह

नारायणी।

श्रूयते (२)विस्तरभयान्न लिख्यते।

---

(१) सम्बभूव भवामि सर्वदृश्यविलक्षणसच्चिदानन्दरूपेत्यर्थः, महिना महिम्ना एता-वती अहम्। एवं केनोपनिषदि श्रूयते 'ब्रह्म हे'ति घपुस्तके।

(२) 'ब्रह्म ह देवेभ्यो विजिग्ये तस्य ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति। तद्धैषां विजिज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत किमिदं यक्ष'मित्यादि। अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति। तथेति तदभ्यद्रवत्तस्मात्ति-रोदधे। स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति। सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमि'त्यन्तेन वाक्येन। तत्रायमर्थः। ब्रह्म कर्तृ देवासुरसङ्ग्रामे देवेभ्यो देवानां रक्षणाय देवशरीरेषु प्रविश्य असुरान् विजिग्ये अजयत् ततो देवास्तेन जयेन अमहीयन्त महिमानं प्राप्तवन्तः जितमिति। ततस्ते ऐक्षन्त मि-थ्याभिमानं कृतवन्तः अस्माकमस्मत्कर्तृक एवायं विजयः जयप्रयुक्तमहिमा चेति। ततस्त-दीक्षणं ब्रह्म विजिज्ञौ ज्ञातवन्तः ततस्तेभ्यो देवेभ्यो पृथगत्यद्भुतरूपेण प्रादुर्बभूव तेषां मिथ्या-भिमाननाशाय। तद्रूपं देवा न व्यजानत न ज्ञातवन्तः इदं यक्षं पूज्यं किमिति। ततो देवा अज्ञात्वा इन्द्रमब्रुवन्विजानीहीति किमेतद्यक्षमिति। ततस्तथेति स्वीकृत्य तदभ्यद्रवत् आन्ति-के गतः ततस्तस्य स्वस्मिन्मनःप्रणिधानार्थं तिरोदधे अन्तर्ध्यानं कृतवत्। ततः सर्वान् देवान् अज्ञानेनाकुलान् दृष्ट्वा तद् ब्रह्म जगन्मातृरूपेण तस्मिन्नाकाशे प्रादुर्भूतम्। तां स्त्रियमुमानामिकां हैमवतीं हिमवतः दुहितरम् इन्द्र आजगाम किमेतदन्तर्हितं यक्षम् इति पृष्टवान्। ततः सा देवानां हितैषिणी तमुवाच ब्रह्मेति। ब्रह्मणो विजये ब्रह्मकर्तृकविजये महीयध्वं ब्रह्मणो-ऽस्मासु पक्षपातो नासुरेष्विति महिमानं कुरुथ न तु अस्माभिर्जितमिति जयाभिमान-मिति भावः। अत्रोमाया ईश्वरत्वं स्पष्टम्। अनीश्वरदेवाज्ञातपक्षतत्त्वप्रदर्शनोपदेशादिक-र्तृत्वोक्तेरिति संक्षेपः। अयं पाठोऽधिकः खपुस्तके।

न्यायरत्नावली ।

देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्त अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति । तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत किमिदं यक्षमिती'त्यादि 'अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति । तथेति तदभ्यद्रवत् तस्मात्तिरोदधे । स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति । सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार' इति। तत्रायमर्थः-देवासुरयुद्धे देवेभ्यः देवानां रक्षणाय देवशरीरेषु प्रविश्यासुरान्विजिग्ये ब्रह्माजयत् । ततो देवाः तेन जयेन अमहीयन्त तं महिमानं प्राप्तवन्तः अस्माकं अस्मत्कर्तृक एवायं जयः तत्प्रयुक्तमहिमा चेति ऐक्षन्त मिथ्याभिमानं कृतवन्तः । तदीक्षणं ब्रह्म विजज्ञौ ज्ञातवत् । तेभ्यः तेषां मिथ्याभिमाननाशायाद्भुतरूपेण ब्रह्म प्रादुर्बभूव । तद्रूपं देवास्सर्वे न व्यजानन्त किमिदं यक्षं पूज्यं वस्तु किमिति । ततो देवा अज्ञात्वा इदम्मघवन्निजानीहि किमेतद्यक्षमिति । ततः तथेति स्वीकृत्य इन्द्रः तदभ्यद्रवत् तदन्तिके गतः । तस्य स्वस्मिन् मनः प्रणिधानाय तद्यक्षमन्तर्धानं गतवत् । ततस्सर्वदेवानां परमाप्तेन जगन्मातृरूपेण निजरूपान्तरेण अन्तर्धानस्य तस्मिन् आकाशे अवकाशे यत्र ब्रह्म प्रादुर्भूतं तां स्त्रियमुमानामिकां हिमवतो दुहितरमिन्द्र आजगाम, किमेतद्यक्षमिति पृष्टवान् । ततः सा देवानां हितैषिणी तमुवाच ब्रह्मेति। ब्रह्मणो जगदीश्वरस्यैव एतत्, तत्कृत एव असुरविजयः न तु युष्मत्कर्तृकः, तत्रैव यूयम्महीयध्वम् । ब्रह्मणः युष्मासु पक्षपातः नत्वसुरेष्विति स्वीयं महिमानं स्वीकुरुथ जयाभिमानं तु न कुरुथेति । अत्र उमादेव्या ईश्वरत्वं स्पष्टम् । अन्यथा देवानामनीश्वराणां सर्वेषां यक्षाज्ञानस्य पूर्वमुक्तत्वात् ब्रह्मवि-

न्यायरत्नावली।

द्याधिष्ठातृत्वेन ईश्वरसहवासशीलसत्त्वेऽपि अनीश्वरत्वात् यक्षत-त्त्वोपदेशकर्तृत्वासम्भवात्। एवम्—

'ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्' इत्यादिलक्ष्म्याः।
तस्यास्समुद्रा अधिविक्षरन्ति। तेन जीवन्ति प्रदिशश्चतस्रः।
ततः क्षरत्यक्षरं तद्विश्वमुपजीवति।
प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती। धीनामवित्र्यवतु।
इत्यादि सरस्वत्याः।

तस्याः वाचः सकाशात् समुद्राः मेघाः नद्यश्च(१)=स-म्यक् द्रवति जलमस्मादिति व्युत्पत्तेः=अधि अधिकं प्रभूतम् उदकं विक्षरन्ति वाग्देवतारूपेशप्रेरिता मेघनद्यादयः जलक्षरणादि कुर्वन्तीत्यर्थः। 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यस्स्यन्दन्ते। श्वेतेभ्यः पर्वतेभ्यः, प्रतीच्याऽन्या' इति श्रुत्यन्त-रात्। ततः पश्चात् तदक्षरप्रेरितमेघादिसम्बन्धि जलं क्षरते। स-स्यादिकार्यं करोति। विश्वं प्राणि कुलं तदुपजीवति। सर-स्वती देवी वाजिनी अन्नादिस्वामिनी वाजेभिः अन्नैः नः अस्मान् अवति रक्षति प्रावतु। एवं धीनां मनोवृत्तीनां अवित्री असद्विष-येभ्यो वारयन्ती सद्विषय एव प्रावतु प्रेरयतु। तत्प्रेरकत्वेनान्तर्या-मितया ईश्वरत्वम्। एवं भारतवचनानि उक्तार्थान्यनन्तानि स-न्ति, विस्तरभयात् न लिख्यन्ते। ननु—

नवकोट्यस्तु चामुण्डाः भेदभिन्ना व्यवस्थिताः।
या रौद्री तामसी शक्तिः चामुण्डा सा प्रकीर्तिता।
अष्टादश तथा कोट्यः वैष्णव्या भेद उच्यते।
या सा तु राजसी शक्तिः पावनी सैव वैष्णवी।
या ब्रह्मशक्तिस्सत्त्वस्था साऽनन्ता वै प्रकीर्तिता॥

(१) 'तस्याः समुद्रा' इति टीकोक्तमन्त्रस्थसमुद्रपदस्य मेघाः नद्यश्च इत्यर्थः कथं कृत इत्याशङ्क्य समुद्रपदस्य व्युत्पत्तिमाह सम्यगिति।

न्यायरत्नावली ।

इत्यादिवाराहपुराणवचनैर्भवान्यादीनां शक्तिरूपता उक्ता। अत्र मूले तु चतुर्भुजाद्याः पुमाकारा श्रीभारतीभवान्याद्याः स्त्र्याकारा इति क्रमस्वारस्यात् विष्णुब्रह्मरुद्रभेदादित्यादिक्रमस्वारस्याच्च विष्णुब्रह्माशिवरूपत्वं श्रीभारतीभवानीनामुक्तम् । तदिदं मिथोविरुद्धमिति चेन्न । 'सेयम्माया चैतन्यदीप्ता ब्रह्मविष्णुशिवरूपिणी'त्यादिश्रुतेः 'साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्द' इत्यादिसंक्षेपशारीरकोक्तेः ।

प्रकृत्याः प्रथमो भाग उमा देवी यशस्विनी ।
व्यक्तस्सर्वमयो विष्णुः स्त्रीसंज्ञालोकभावनः ।

इति हरिवंशाद्युक्तेः । चिदाभासयुक्ताज्ञानस्यैव वार्तिकमते ईश्वरत्वस्वीकाराच्च विष्णुब्रह्मशिवानामपि साभाससत्त्वरजस्तमोरूपत्वेन शक्तिरूपत्वाविरोधात् सत्त्वादिगुणत्रयगताभासातिरिक्तचितोऽपि वार्तिकमते ईश्वरत्वस्वीकाराच्च कारणीभूतसत्त्वगुणावच्छिन्नचैतन्यं विष्णुरित्यादिमूलस्यापि सङ्गतेः । ननु तथापि राजसशक्तिः वैष्णवी कथम् । सात्त्विकया एव शक्तेः वैष्णवीत्वौचित्यादिति चेन्न ।

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

इत्यनेन विष्णोरतिशयितप्रवृत्तिमत्त्वेन तच्छक्तेरेव प्रवृत्त्यतिशयप्रधानत्वेन राजसीत्वौचित्यात् । ब्रह्मणस्तु महाभूतमात्रस्रष्टृत्वेन न तथात्वम् । अत एव 'कमण्डलुजलाक्षेपहतवीर्यानि'त्यादिब्रह्मशक्तिकर्मोक्तम्, न तु युद्धादिप्रवृत्तिरिति ध्येयम् ।

भक्तेनापि न कार्त्स्न्येन ज्ञेया भक्तिर्जगद्गुरोः ।
किन्तु तेनैव तद्भक्तिः परिपाकजुषापि च ।

न्यायरत्नावली।

उक्तं हि यमेन स्वभटान् प्रति--

स्वयंभूर्नारदश्शम्भुः कुमारः कपिलो मनुः।
प्रह्लादो जनको भीष्मो वलिर्वैयासकिर्वयम्॥
द्वादशैते विजानन्ति धर्मान् भागवतान् भटाः। इति।
तथापि तद्गुणाः केचित् श्रुता वाचालयन्ति माम्।
(१)अयोग्योपि ततः स्वस्य शुद्ध्यै तान् कथयाम्यहम्।

तत्र भक्तिर्भजनं कायेन मनसा वाचा वा निष्पाद्यो भजनीयस्य तुष्टिहेतुर्व्यापारः भजमानपुरुषनिष्ठः। तत्र विभागो भागवतादावुक्तः--

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्॥

भगवति सर्वात्मके परमप्रेमास्पदे अर्पिता पूर्वमपि विद्यमाना भक्तिः यदि शास्त्रेणाधीतेन तत्कालं नवलक्षणा क्रियेत, तदा तदधीतमुत्तमं मन्ये। तच्छब्दस्य उत्तरवाक्यस्थत्वात् न यच्छब्दापेक्षा। अयं भावः। विष्णोस्सर्वजीवात्मभूतत्वादात्मनि सर्वेषां जीवानां सदा भूयासमिति प्रेमसत्त्वात् स्वाभाविकतया अनुरागविशेषनियता भक्तिः विष्णावस्त्येव सार्वदिकी। सा तु शास्त्रेणाधीतेन नवविधा क्रियते श्रवणादिस्वरूपज्ञानस्य श्रोतव्यकीर्तनीयादिगुणग्रामज्ञानस्य श्रवणादीतिकर्तव्यताज्ञानस्य च शास्त्राधीनत्वात्। किञ्च पूर्वमपि स्वस्य वा पुत्रभार्यादेर्वा श्रवणादि कृतं तद्विष्णोरेव कृतम्, शास्त्रे अधीते तु अद्धा साक्षादेव विष्णौ क्रियते। 'सर्वं विष्णुरि'ति ज्ञानात् विष्णोरेव श्रवणादि सदा करोमीति

(१) अयोग्यत्वेपि सत्त्वस्य शुद्ध्यै इति गपुस्तके।

न्यायरत्नावली ।

ज्ञायते । 'सर्वं विष्णुरि'ति ज्ञानाभावेऽपि पुत्रादेः श्रवणादिकं नादरेण करोति किन्तु विष्णोरेव निखिलमङ्गलगुणवत्त्वेन ज्ञानात् साक्षात् श्रवणादि क्रियत इति। उत्तममिति ; श्रवणादेरुक्तज्ञानजननद्वारा श्रवणाद्यनुष्ठानमधीतशास्त्रस्य फलम्, तत्प्राप्तौ सत्याप्धीतमुत्तमं मन्ये, तदप्राप्तौ गुणमात्ररूपमपि तन्नोत्तमम । मुक्त्यपर्यवसानादित्यर्थः । अथ श्रवणादेः किं स्वरूपम् ? उच्यते । विष्णोस्सगुणस्य वा निर्गुणस्य वा शब्देन ज्ञानं तादृशविष्णुप्रतिपादकशब्दस्य श्रोत्रेण ग्रहणं च श्रवणम् । तच्च सर्वं सगुणस्य प्रीतिकरम् । साधारणोऽपि हि जनः तादृशे स्वीयश्रवणे प्रीणाति, उक्तं हि गीतायाम्—

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । इति ।

तादृशज्ञानरूपस्य श्रवणस्य कीर्तनहेतुत्वात्तदाह--कीर्तनमिति । सगुणस्य वा निर्गुणस्य वा बोधकस्य शब्दस्योच्चारणम् । तत्राद्यस्य तत्प्रीतिकरत्वं स्पष्टम् । द्वितीयमपि तथा । प्रणवाद्युच्चारणस्यातिप्रीतिकरत्वेन भाष्यादावुक्तत्वात्

अशक्नुवन् भावयितुं वाक्यमेव समभ्यसेत् ।

इत्याचार्योक्तेश्च । (१)तादृशविष्णोश्चानुभूतत्वात् स्मरणं जायते ।

अतस्तदुत्तरं स्मरणमुक्तम् । तच्च तादृशविष्णोः शब्दानुकरणं तज्ज्ञानं च श्रोत्रेण । तज्ज्ञानस्य श्रावणत्वात् तस्य प्रीतिकरत्वं स्पष्टम्। पादसेवनं परिचर्या विष्णुप्रतिमापादसम्मर्दन(२)गृहलेपनादिरूपा।

अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनूः ।

इति भगवदुक्तेः ब्राह्मणरूपस्य भगवद्देहस्य भगवद्भक्तस्य

(१) तदुत्तरं च तादृशशब्दस्य तादृशविष्णोरिति घपुस्तके ।
(२)—पादसम्बन्धीति सर्वपुस्तकेषु पाठः ।

न्यायरत्नावली।

वा पादसंवाहनादिरूपा च। अर्चनं श्रवणादिभिन्नो विष्णुप्रीतिहेतुव्यापारः। वन्दनं पूजाबहिर्भूतनमस्कारः प्रतिमादौ। दास्यं दासभावः सेवा(१) विष्णुप्रीतिफलकं सर्वकर्मानुष्ठानम्। 'यत्करोषि यदश्नासी'त्यादिना लौकिकसकलक्रियासमर्पणस्य भगवति कर्तव्यत्वेनोक्तत्वात्। क्रियाया भगवत्प्रीतिफलकतापर्यवसानमेव हि भगवति समर्पणं विष्णुप्रीतिमुद्दिश्य तदनुष्ठानमिति यावत्। तच्च त्रिविधम्। पापक्षयमुद्दिश्य भगवत्प्रीतिमुद्दिश्य किमप्यनुद्दिश्य वा। यदुक्तं भागवतादौ—

कर्मनिर्हारमुद्दिश्य परस्मै वा तदर्पणम्।
यजेद्यष्टव्यमिति वा पृथग्भावस्स सात्विकः।

इति। कर्मनिर्हारः पापनाशः। परस्मै विष्णवे। तदर्पणं यागादिकर्मार्पणम्। विष्णुप्रीतिमुद्दिश्य तदनुष्ठानमिति यावत्। यष्टव्यमिति यजेत्—भगवदाज्ञारूपेण वेदेन कर्तव्यतया बोधितमिति मत्वैव यजेत्, न तु किञ्चिदुद्दिश्येत्यर्थः। एवं त्रिविधभावयुक्तः स सात्त्विकः। उक्तक्रमेणापकृष्टमध्यमोत्तमसात्त्विका इत्यर्थः। ननु पापक्षयरूपस्वगतफलकामेन क्रियमाणस्य कर्मणः दास्यरूपत्वे स्वर्गादिकामेन क्रियमाणमपि तथा स्यादिति चेत्। न। पापस्य ईश्वरं प्रत्यपराधजन्यत्वेन तत्क्षयकामेन क्रियमाणस्यापि दास्यत्वौचित्यात्। अपराधिनो हि प्रभुं प्रति दास्यमाचरन्तोऽपराधान्मुच्यन्त इति लोके दृष्टम्। ननु प्रभोः कोपहेतुव्यापारः अपराध इति लोके व्यवहारः, पापजनकस्यापराधत्वे तथात्वं स्यादिति चेत्, स्यादेव। 'फलमत उपपत्ते' रित्यधिकरणे महर्षिणा बादरायणेन विहितनिषिद्धयोरीश्वरप्रसादकोपजनकत्वोक्तेः। न च तथापि पापनाशफलकक्रियायाः विष्णुप्रीतिफलत्व-

(१) सेवा दासस्येव विष्णुप्रीतीत्यादि घपुस्तके।

न्यायरत्नावली ।

मपीति वाच्यम् । विहितक्रियामात्रस्येश्वरप्रसादजनकत्वात् ईश्वरप्रसादस्यैव पुण्यरूपत्वस्य बादरायणसम्मतत्वात् । अथैवं स्वर्गादिफलकक्रियापि दास्यं स्यादिति चेन्न । कर्तृसुखाजनकेश्वरप्रीतिफलकक्रियाया एव दास्यभक्तित्वात् । अत एव—

यस्त आशिष आशास्ते न स भृत्यस्स वै वणिक् ।

इत्युक्तं भागवते । आशिषः स्वर्गादिसुखानि आशास्ते इच्छति भृत्यः दासः ते तव । एवं च कर्तृनिष्ठसुखफलकक्रियायाः राजसतामसभक्तित्वेन भागवतादावुक्ताया अर्चनमध्ये निवेशो बोध्यः । अत एव 'स्वकर्मणा तमभ्यर्च्ये'ति गीता । न चैवं पापनाशाद्युद्देशेन कृतश्रवणादिकमपि भगवद्दास्यं स्यादिति वाच्यम् । दास्यलक्षणे श्रवणाद्यन्यत्वस्यापि निवेशात् । मातापित्रादीनां विष्णुबुद्ध्या दासवत् शुश्रूषणमपि दास्यमिति बोध्यम् । सख्यं प्रेमविशेषादिरूपम् । यथा सख्यौ तथा विष्णौ । यथा च उपादेयं भक्ष्यादिकं प्राप्तं सख्ये निवेद्यते प्रेमविशेषपूर्वकं तथा विष्णवे । यथा सख्युः दूषणादिकं परेण क्रियमाणं सोढुं न शक्यते, तथा विष्णोस्तन्न सोढव्यम् । यथा तदीयकर्म स्वकीयकर्मवत् क्रियते, तथा विष्णुकर्म कार्यम् । अयमस्मदिष्टं साधयिष्यत्येवेति विश्वासेन सख्युरनुवृत्तिः क्रियते, तथा विष्णोरित्यादि । आत्मनिवेदनं स्वस्य निवेदनम् । यथा विक्रीतस्य गवादेः योगक्षेमचिन्तायामनभिनिवेशः, तथा स्वकीयायां योगक्षेमचिन्तायाम् ।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥

इति भगवदुक्तं प्रतिसन्धाय सदा विष्णुरेव चिन्त्य इत्यर्थः । विष्णुस्वरूपे सत्यज्ञानानन्दात्मके असङ्गसाक्षिरूपे स्वाभेदज्ञान-

न्यायरत्नावली ।

मपि आत्मनिवेदनं बोध्यम् । एतस्याः भक्तेः उक्तविश्वासादिरूपसख्याधीनत्वेन तदुत्तरं मुक्तिः । दास्यस्यापि 'विष्णुः सर्वोत्कृष्टः अहं तदपेक्षयापकृष्ट' इतिज्ञानाधीनत्वात् तादृशज्ञानपूर्वककराशिरस्संयोगरूपवन्दनसापेक्षत्वात् वन्दनोत्तरं मुक्तिः । पञ्चोपचारादिसाधनके अर्चने चिरमभिनिविशमानः भक्तः आलोचयति 'किमस्य सर्वलोकनाथस्य परमसात्त्विकगणैरर्च्यमानस्य मादृशेन वराकेणार्चनमिति' ततश्च अर्चनाभिनिवेशात् (१) वन्दनादिष्वेव कायिकादिष्वाभिनिविशते । अतोऽर्चनोत्तरं वन्दनमुक्तम् । गृहलेपनादिरूपपादसेवने कृते पाद्यादिसमर्पणरूपमर्चनमभिलषतीति पादसेवनोत्तरमर्चनमुक्तम् । पादसेवनमर्चनादिकं गुणग्रामस्मरणाधीनम् अतः स्मरणोत्तरं पादसेवनादिकमुक्तम् । स्मरणस्यापि श्रवणकीर्तनाधीनत्वात् कीर्तनस्यापि श्रवणाधीनत्वात् तयोरुत्तरयोः उक्तिः । उक्तश्रवणादिलक्षणानां क्वचिदेकत्र मेलनेऽपि न दोषः । एकस्यानेकविधभक्तित्वसम्भवात् । अत्रेदं विवेचनीयम् । श्रवणादीनां सगुणनिर्गुणविषयतया सङ्कीर्णानां साधनभक्तित्वमेव । सख्यस्य तु साधनसाध्योभयविधभक्तित्वम् । प्रेममात्रस्य साधनत्वेऽपि परमकाष्ठापन्नप्रेम्णः सगुणविषयश्रवणादिसाध्यत्वात् । तदुक्तं विष्णुपुराणे प्रह्लादविष्णुसंवादे—

या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतस्सा मे हृदयान्मापसर्पतु ॥

अनपायिनी अव्यभिचारिणी । त्वामनुस्मरतः त्वदीयश्रवणादिकुर्वतः । सा तादृशी । तादृशस्य सगुणविषयकप्रेम्णः निर्गुणश्रवणादिसहितस्य चरमाऽऽत्मनिवेदनरूपा ब्रह्मात्मैक्यसाक्षात्काररूपज्ञानलक्षणा भक्तिः फलम् ।

(१) अर्चनाभिनिवेशं त्यक्त्वा वन्दनेति पाठः युक्तश्च ।

न्यायरत्नावली।

यस्य देवे परा भक्तिः यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥

इति श्रुतेः।

मयि चानन्ययोगेन भक्तिरव्यभिचारिणि।

इति गीतोक्त्या तादृशप्रेमरूपस्य चरमभक्तेर्ज्ञानसाधनत्वोक्तेः। चकारात् पूर्वोक्तामानित्वमदम्भित्वमित्यादिसाधनसमूहस्य समुच्चयः। भागवतेऽपि उक्तम्—

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।
अहेतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे॥ इति।

श्रुतिमात्रेणोपस्थितिमात्रेण (१)कारणेन तत्कार्यस्योक्तप्रेम्णः ग्रहणम्, तस्यैव निर्गुणभक्तिचरमसाधनत्वात्। सर्वगुहाशये सर्वदृश्याधिष्ठानभूते। अविच्छिन्ना क्वचिदपि विषयेऽनवच्छिन्ना सर्वं विष्णुरेवेत्साकारेति यावत्। मनोगतिः मनोवृत्तिः। यथा गङ्गा पूर्वपश्चिमादिसमुद्रभागेषु धाराचतुष्टयेन गच्छन्ती समुद्रभागेषु सर्वेषु सम्बध्यते, तथा मनोवृत्तिरपि सकलदृश्यावच्छिन्नेषु मद्भानेषु सम्बध्यते। ब्रह्माण्डस्यान्तर्बहिश्च सर्वं विष्णुरेवेति सर्वानुस्यूततया सर्वदृश्यानां अधिष्ठानतया ज्ञायत इति यावत्। स्वरूपमुक्त्वा लक्षणमाह—लक्षणमित्यादि। अहेतुकी फलानुस-

नारायणी।

ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।

इत्यादिलक्ष्म्याः। एवं 'तस्याः समुद्रा अधिक्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः। ततः क्षरत्यक्षरं तद्विश्वमुपजीवति' इत्यादि सरस्वत्या ईश्वरत्वे मानम्। अयमर्थः। तस्या वाचः सकाशात् समुद्राः मेघा नद्यश्च,

(१) गुणोपस्थितिरूपकारणेन इति घपुस्तके।

श्रीभारतीभवान्याद्याश्च स्त्र्याकारा अन्ये च मत्स्य-

न्यायरत्नावली ।

न्धानशून्या । न हि ज्ञानस्य फलमस्ति । तस्य सकलदृश्यवि-
रोधितया मोक्षं प्रति व्यञ्जकत्वमात्रस्वीकारात् । अव्यवहिता अह-
मेव विष्णुरिति स्वाभेदेन क्रियमाणा । अत एव बृहन्नारदी-
यादावुक्तम्—

अहमेव परो विष्णुः मत्तस्सर्वमिदं जगत् ।
इति यस्सततं पश्येत्तं विद्यादुत्तमोत्तमम् ॥ इति ।

सा च ब्रह्मसाक्षात्कारहेतुपरमप्रेमा त्रिधा—

तस्यैवाहं ममैवासौ स एवाहमिति त्रिधा ।
भगवच्छरणत्वं स्यात्साधनाभ्यासपाकतः ॥ इति ।

स एवाहमिति फलावस्थापि साधनस्य समकक्षतया उक्तप्रे-
म्ण एव साध्यरूपापत्त्या । गीतादौ—

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।

इति सर्वेषु धर्मेषु शरणताबुद्धिं त्यक्त्वा मय्येव तां कुरु तादृश-
बुद्धिहेतुं उक्तप्रेमाणं कुर्विति यावत् । (१)वस्तुतस्तु प्रेमरूपसख्य-
भक्तेः फलमात्मनिवेदनम् । अत्र त्रिविधत्वेन उक्ते, आद्यं—तस्यै-
वाहमित्याद्याकारत्वात् स्वीयपालनादित्यागेन विष्णुचिन्तारूपम् ।

नारायणी ।

समुद्रवति जलमस्मादिति व्युत्पत्तेः । अधि अधिकम्, उदकं विक्षरन्ति-
वाग्देवतारूपेण प्रेरिता मेघादयो जलभरणादिकं कुर्वन्तीति दिक् । वि-
स्तरतस्तु भवानीस्वरूपं मद्व्याख्यानेऽनुसन्धेयम् । अधिकारिकावतार-
त्वाऽविद्यावद्विषयकर्मकर्तृत्वादिरूपजीवलिङ्गदर्शनात् महाभूतादिसर्जना-
श्रवणाच्च जीवत्वमेवावताराणामिति मन्दमतीनां भ्रमं निराकुर्वन्नाह—
अन्य इति । लीलयैव—स्वेच्छयैव, आविर्भवन्ति—प्रकटीभवन्ति न तु

(१) वस्तुतस्तु तादृशप्रेमरूपसख्यभक्तेः फलमात्मनिवेदनमेवोक्तत्रिविधत्वेनो-
क्तम् । तत्राद्यं तस्यैव पाल्योऽहमित्यादीति घपुस्तके ।

कूर्मादयोऽनन्तावतारा लीलयैवाविर्भवन्ति भक्तानुग्रहार्थमित्यवधेयम् ।

न्यायरत्नावली ।

द्वितीयं तु—प्रेमातिशयेनेतरजीवादिद्वैततिरोधानात्(१) *ममैवासौ सेव्य इत्याद्याकारम्, तृतीयं तु—सेव्यसेवकभावादिभेदस्यापि तिरोधानात्* सच्चिदानन्दविष्णुप्रेमरूपमिति विवेकः । तस्य च परमप्रेम्णः साधनरूपा श्रवणादिभक्तिः तत्साध्यात्मनिवेदनपर्यन्तापि

नारायणी ।

जायन्ते, सच्चिदानन्दात्मकानामुत्पत्त्ययोगात् । सच्चिदानन्दरूपता च तेषां 'सच्चिदानन्दविग्रहं पञ्चपदं वृन्दावनभूरुहजलासीन'मित्यादिश्रुतिसिद्धा । महाभारते द्रोणपर्वणि भगदत्तवधे—

चतुर्मूर्तिरहं शश्वल्लोकत्राणार्थमुद्यतः ।
आत्मानं प्रविभज्येहं लोकानां हितमादधे ॥
एका मूर्तिस्तपश्चर्यां कुरुते भुवि मे स्थिता ।
अपरा कुरुते कर्म मानुषं लोकमाश्रिता ॥
अपरा पश्यति जगत्कुर्वाणा साध्वसाधुनि ।
शेते चतुर्थी त्वपरा वरार्हेभ्यो वरार्थदा ॥

इत्यादिवदता भगवता आधिकारिकावताराणामेव लोकानुग्रहार्थमविद्यावद्विषयकर्मकर्तृत्वाक्षेरनावृतत्वेनेश्वरत्वमेव न जीवत्वमिति भावः । (२)=अत्रायं निष्कर्षः । गुणावताराणां ब्रह्मविष्ण्वादीनामखिलशक्त्याविर्भावकत्वाद्गुणावतारत्वव्यपदेशः, मत्स्याद्यवताराणां त्वल्पशक्त्याविर्भावकत्वाद्दशावतारत्वव्यपदेशः, गुणावतारांशावताराभ्यां भगवत एवानन्तशक्त्याविर्भावः सर्वदेति विवेकः । स च महाविष्णुरेवेति वैष्णवाः । परमशिव इति शैवाः । परदेवतेति शाक्ताः । परमेश्वर एवेति शुद्धस्मार्ता इति संक्षेपः= । ननु स्वेच्छामात्रेण जगद्रक्षणसमर्थोऽपि किमर्थमवतारादिभावेन क्लिश्यतीत्यत आह—भक्तेति । सङ्कल्पमात्रेण कर्तुं समर्थोऽपि स्वस्याष्टविधैश्वर्यसामर्थ्यमात्यन्तिकं प्रकटयन्भक्ता-

(१)—धानात् सच्चिदानन्दमात्ररूपविष्णुप्रेमरूपमिति विवेकः । इति गपुस्तके पाठः त्रुटितः प्रमादतः *......* चिह्नद्वयवर्ती ।

(२) =...= अयं चिह्नितः पाठो नास्ति खपुस्तके ।

(१)चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥

न्यायरत्नावली ।

उत्तमसात्त्विकोत्तमराजसोत्तमतामसमध्यमसात्त्विकादित्रयाधमसात्त्विकादित्रयभेदेन (२)एकाशीतिभेदा तत्र सात्त्विकत्रयं कर्मनिर्हारेत्यादिना उक्तम् ।

नारायणी ।

नामभिध्यानाय तानि तानि मनोहराणि चरितानि तत्तद्रूपेण विधत्त इत्यर्थः । तत्र—

स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ।
भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥

इत्यादिना साध्यसाधनभेदेन भक्तिद्वैविध्यस्योक्तेर्भक्ता अपि द्विविधाः सिद्धाः साधकाश्च । तत्र साध्यभक्तिभाजः सिद्धाः, साधनभक्तिभाजः साधकाः । तत्र भजनं भक्तिरिति व्युत्पत्त्या साध्यभक्तिः प्रेमभक्तिः । सा च—

प्राप्तेऽपि विषये यस्तु नैव पश्येत कर्हिचित् ।
ममेति वचनाक्रान्तो वर्द्धते च पुनः पुनः ॥

इतीच्छाविशेषः । यथा—

दृष्टेऽपि कृष्णे तृष्णेयं लोचने न विमुञ्चति ।
इत्यादि । सैव च शुद्धा पुमर्थरूपा—
अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।
न ह्यतोन्यः शिवः पन्था विशतः संसृताविह ॥
वासुदेवे भगवति भक्तियोगो यतो भवेत् ।
बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥

इत्यादिस्मृतेः । सुखदुःखभावान्यत्वेऽपि पुमर्थरूपता च मायाना-

(१) अयं श्लोको नास्ति कपुस्तके । (२) एका त्रिभेदेति गपुस्तके ।

नारायणी।

शस्यैवोपलक्षणविधयाऽऽनन्दावच्छेदकत्वेन। अवच्छेदकत्वं च विजातीयप्रेमत्वेनेति न कोऽपि दोष इत्यन्यत्र विस्तरः। (१)साधनभक्तिस्तु भज्यते सेव्यते भगवताकारमन्तःकरणं क्रियतेऽनयेति व्युत्पत्त्या-

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्॥

इति नवधा। तत्र श्रवणं भगवद्विषयकशब्दस्य श्रोत्रेण ग्रहणं तदर्थबोधश्च, कीर्तनं (२)भगवद्बोधकशब्दोच्चारणम्, स्मरणं भगवत्स्वरूपगुणस्मृतिः, पादसेवनं पित्राचार्यगुर्वादेः, अर्चनं चलाचलप्रतिमापूजनम्, वन्दनं पूजाबहिर्भूतनमस्कारो भगवद्भक्तप्रतिमादेः, दास्यं दासस्येव स्वामिप्रीतिकरकर्मानुष्ठानम्, सख्यं विश्वासो मित्रवृत्तिश्च, विश्वासस्तदुक्तेऽवश्यंभावधीः, मित्रवृत्तिः बन्धुसमवयस्कादिव्यवहाराख्या सेवा, आत्मनिवेदनम् आत्मनः शरीरस्य स्वीयत्वाभिमानत्यागपूर्वकं स्वामिस्वत्वफलकः सङ्कल्पः, तदभेदेनाखण्डैकरसानन्दात्मस्वरूपज्ञानं च। सेयं भक्तिस्त्रेधा (३)+कर्ममिश्रा कर्मज्ञानमिश्रा ज्ञानमिश्रा च। तत्र कर्ममिश्रा+तामसी राजसी सात्विकी च। तामस्यपि हिंसार्था दम्भार्था मात्सर्यार्था चेति त्रिधा।

अभिसन्धाय यद्धिंसां दम्भं मात्सर्यमेव च।
संरम्भी भिन्नदृग्भावं मयि कुर्यात्स तामसः॥

(१) *तच्च प्रेम द्वादशविधम्। तत्र गुणश्रवणादिना द्रवच्चित्तस्य दर्शनोत्सुकतादिरूपम् १ कपटप्रश्नाद्यक्तः स एवेच्छाविशेषायत्तम् २ मुहुरीक्षणे दार्ढ्यकण्डूत्याद्यारम्भोपलक्षितम् ३ किञ्चिद्विरहादिना धाष्ट्र्यादीनां स्थूलादालितम् ४ विरहादिना द्रुतस्य चेतसो मिलने पुनस्तदाकारता मिलितम् ५ कर्मेन्द्रियादिहेतुकोपभोगजन्यः चित्तद्रावो ललितम् ६ प्रियाविषयकरागनिन्दकविषयककोपाभिव्यञ्जयं छलितम् ७ पूर्वजन्मप्रेम्णैवानुवर्तमानं वलितम् ८ उद्योगं विना प्रारब्धाभिमानेनेच्छाविषयानुवर्तनं क्रान्तम् ९ तदेवानुक्षणपरितापसहकृतं संक्रान्तम् १० इदमेव भवान्तरे वासनापरिपक्वं विद्रुतम् ११ सर्वदा द्रवच्चित्तस्य मम स्यादितीच्छा गलितम् १२ इच्छाविषयाकारमखण्डानन्दाद्वयविषयं संतृप्तम् १२ इति। अयं पाठः कपुस्तकेऽधिकः।

(२) श्रवणं भगवाद्विद्वाद्विषयकशाब्दबोधः तद्बोधकशब्दस्य श्रोत्रेण ग्रहणम् इति खपुस्तके।

(३) +...+ चिह्नितः पाठः खपुस्तके नास्ति।

नारायणी ।

इति स्मृतेः । एवं राजस्यपि विषयार्था यशोर्था ऐश्वर्यार्था चेति त्रिधा ।

विषयानभिसन्धाय यश ऐश्वर्यमेव वा ।
अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ।

इति स्मृतेः । एवं सात्त्विक्यपि पापनाशार्था भगवत्प्रीत्यर्था विधिसिध्यर्था चेति त्रिधा ।

कर्मनिर्हारमुद्दिश्य परस्मै वा तदर्पणम् ।
यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥

इति स्मृतेः । एवं कर्मज्ञानमिश्रापि त्रेधा । उत्तमा मध्यमाऽपकृष्टा च सत्त्वतारतम्यात् । तत्रोत्तमा—

सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः । इति ।

मध्यमा—

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥ इति ।

अपकृष्टा—

अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥ इति ।

ज्ञानमिश्रा—

मद्गुणस्मृतिमात्रेण मयि सर्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोम्बुधौ ॥ इति ।

अविहिता चतुर्धा । कामजा १ द्वेषजा २ भयजा ३ स्नेहजा ४ च ।

कामाद् द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः ।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥
गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद् वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो ॥

इत्यत्र सम्बन्धात्स्नेहाद्वृष्णयो यूयं चेत्येवं भक्त्या विहितया वयमिति विभागः । तत्र कर्ममिश्रा नवधा गृहस्थानां कर्मज्ञानमिश्रास्तिस्रो वनस्थानां ज्ञानमिश्रैका भिक्षूणां शुद्धैका सर्वेषां निर्विण्णानां ज्ञानयोगे सन्यासिनाम् । इह कर्मसु—

जीवोऽपि त्रिविधः । स्वोपाध्यवान्तरभेदेन विश्व-तैजसप्राज्ञभेदात् । तत्र अविद्यान्तःकरणस्थूलशरीरा-

न्यायरत्नावली ।

विषयानभिसन्धाय ज्ञानमैश्वर्यमेव वा ॥
अर्चादावर्चयेद्यो मां पृथग्भावस्स राजसः ।

इति राजसत्रयम् ।

अभिसन्धाय चेद्धिंसां दम्भं मात्सर्यमेव वा ।
स्मरन्विभिन्नदृग्भावं मयि कुर्यात्स तामसः ॥

इति तामसत्रयम् । संरम्भी क्रोधी इति भक्तिविवेचनम् ॥ तत्रा-विद्येत्यादि । 'जागरितस्थानो वैश्वानरः, स्वप्नस्थानस्तैजसः, सुषुप्त-

नारायणी ।

तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ॥
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥

इत्यादिस्मृतेः । अत्रानिर्विण्णानां सन्यासिनां कर्मसु सत्सु ज्ञान-योगः कर्मज्ञानयोग इत्यर्थः । तत्राविहिताश्चतस्रो गोप्यादितुल्यानाम् ।

तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत् ।

इति स्मृतेः । (१)*भक्तिभूमयस्तु-

प्रथमं महतां सेवा तद्दयापात्रता ततः ।
श्रद्धा च तेषां धर्मेषु ततो हरिगुणश्रुतिः ॥
ततो रत्यङ्कुरोत्पत्तिः स्वरूपाधिगतिस्ततः ।
प्रेमवृद्धिः परानन्दे तस्याप्यस्फुरणं ततः ॥
भगवद्धर्मनिष्ठातः स्वस्मिंस्तद्गुणशालिता ।
प्रेम्णोथ परमा काष्ठेत्युदिता भक्तिभूमयः ॥

इति संक्षेप* । त्वंपदार्थं विविच्य दर्शयति—जीवोपीत्यादि । सोपा-धीति । जीवोपाधेरविद्याया योऽवान्तरभेदः कार्यकारणतया भेदस्तेने-त्यर्थः । तत्राविद्येति । 'जागरितस्थानो वैश्वानरः स्वप्नस्थानः तैजसः सुषुप्तस्थानः प्राज्ञः' इत्यादिमाण्डूक्यादिश्रुतिभिर्जाग्रदाद्यभिमा-नीनां विश्वादिसंज्ञा उक्ता अभिमानित्वं चोपाधित्रयद्वयैकावच्छिन्नानां

(१) *...* अयं पाठो नास्ति खपुस्तके ।

वच्छिन्नो जाग्रदवस्थाभिमानी विश्वः। स एव स्थूलशरीराभिमानरहीत उपाधिद्वयोपहितः स्वप्नाभिमानी तैजसः। शरीरान्तःकरणोपाधिद्वयरहितोऽन्तःकरणसंस्काराद्यवच्छिन्नाविद्यामात्रोपहितः सुषुप्त्यभिमानी प्राज्ञः। एतेषां च स्वतन्त्रोपाधिभेदाभावेन स्वतन्त्रभेदाभावेऽप्यवान्तरोपाधिभेदादेकत्वेऽप्यवान्तरभेदो व्यव-

न्यायरत्नावली।

स्थानः प्राज्ञ' इत्यादिमाण्डूक्यादिश्रुतिभिर्जागराद्यभिमानिनां विश्वादिसंज्ञा उक्ताः। अभिमानित्वं च उपाधित्रयद्वयैकावच्छिन्नानां क्रमेण योग्यत्वादित्याशयः। स्थूलशरीराभिमानेति। व्यावहारिकस्थूलशरीराभिमानेत्यर्थः। स्वतन्त्रोपाधीति। निरपेक्षत्रयोपाधीत्यर्थः। स्वतन्त्रभेदेति। अत्यन्तभेदेत्यर्थः। अवान्तरोपाधीति। संस्कारावच्छिन्नत्वादिरूपोपाधिविशेषणेत्यर्थः। एकत्वेऽपि—तादात्म्येऽपि। यथा घटपटयोरमिलितत्वेन निरपेक्षयोस्स्वोपहिताकाशभेदकत्वमत्यन्तभेदप्रयोजकत्वरूपम्। यथा वा बिम्बत्वप्रतिबिम्बत्वयोस्तादृशयोस्तथात्वं तथा संस्कारावच्छिन्नाविद्यादीनां प्राज्ञादिषु विश्वादितो नात्यन्तभेदकत्वम्। विश्वाद्युपाधिमध्येऽविद्यादीनां निवेशात्, य एव सुषुप्तावविद्योपाधिकः स्थितः, स एव जागरे इदानीमुपाधित्रयोपहित इति न हि मलिनतद्वस्त्रवतश्चैत्रस्य निर्मलतद्वस्त्रविशिष्टचैत्रादत्यन्तभेदो व्यवह्रियते। प्रत्युत य एव मलिनतद्वस्त्रः स्थितः, स एवेदानीं निर्मलतद्वस्त्र इति अभेद एव प्रतीयते। वस्तुतस्तु दृष्टान्ते मालि-

नारायणी।

क्रमेण योग्यत्वादिति भाव.। स्थूलेति। व्यावहारिकस्थूलशरीराभिमानीत्यर्थः। स्वतन्त्रोपाधीति। परस्परं कार्यकारणभावरहितोपाधीत्यर्थः। स्वतन्त्रभेदेति। अत्यन्तभेदेत्यर्थः। अवान्तरोपाधिभेदेन—कार्यरूपोपाधिभेदेन, अवान्तरभेदः—व्याप्यव्यापकभावनिबन्धनो भेदः। यथा मृद्घटा-

ह्रियते। साक्षी तु सर्वानुसन्धाता सर्वानुगतस्तुरीया-ख्य एकविध एव। तत्रोपाधिभेदेनापि न क्वचिद्भेदः। तदुपाधेरेकरूपत्वात्। अविद्यातद्व्याप्यतत्कार्यात्मकः प्रपञ्चो दृश्यपदार्थः। तस्यापारमार्थिकत्वेऽपि व्यावहा-रिकसत्त्वाभ्युपगमात् न स्वाप्निकपदार्थवन्निरूपणं व्य-र्थम्। उपासनादावुपयोगादिति। सोऽपि त्रिविधः। अव्याकृतमूर्तामूर्तभेदात्। तत्र साभासाविद्या मूर्ता-

न्यायरत्नावली।

न्योपलक्षिततद्वस्त्रोपहितस्यैव निर्मलवस्त्रोपहिततादात्म्यं प्रतीयते, न तु मालिन्योपाहिततद्वस्त्रोपहितस्येति दार्ष्टान्तिकेऽपि संस्कारो-पहिताविद्यादिमद्भेदस्य विश्वादिष्वस्वीकारे तात्पर्यमिति बोध्यम्। भेदेनापीति। विम्बत्वोपहितस्य साक्षित्वपक्ष इति शेषः। तद्व्याप्येति। अविद्याचितोस्सम्बन्धादिरर्थः। साभासेत्या-दि। साभासा अविद्या तद्व्याप्यैश्चैतन्यसम्बन्धादिभिः सहिता

नारायणी।

काशयोर्भेद इति दिक्। भेदवार्ता जीवेश्वरयोरेव न लक्ष्यस्य साक्षिण इत्याह—साक्षी त्विति। तुरीयाख्यः अकारोकारमकारार्थाद्भिन्नश्चतुर्थः। उपाधिभेदेनापीति। विम्बत्वोपहितस्य साक्षित्वपक्ष इति शेषः। त-द्व्याप्येति। तत्समनियतेत्यर्थः। चिदचित्सम्बन्धादीति यावत्। ननु दृग्भिन्नः पदार्थो यद्यस्ति तर्हि द्वैतापत्तिः, नास्तीति चेत्कथं निरूप्यते? स्वप्नवदङ्गीकारेऽपि स्वप्नस्येव निरूपणवैयर्थ्यं तदवस्थमेवेत्य आह—तस्येति। दृश्यपदार्थस्य अपारमार्थिकत्वेऽपि-मिथ्यात्वेऽपि। व्यावहारिक-सत्त्वेति। अर्थक्रियाकारिताप्रयोजकसत्त्वेत्यर्थः। न स्वाप्निकेति। यथा प्रातिभासिकस्वप्नादेरर्थक्रियाकारित्वायोगस्य करदन्तान्वेषणवन्निरू-पणं व्यर्थं तथा न व्यावहारिकपदार्थानां निरूपणं व्यर्थमित्यर्थः। तत्र हेतु-माह—उपासनदाविति। तथा च न दृग्भिन्नपदार्थाङ्गीकारमात्रेण निरूपणा-नर्हत्वं वस्तुतोऽसत्त्वेन द्वैताभावात्, व्यावहारिकत्वेन निरूपणार्हत्वा-दिति संक्षेपः। साभासेत्यादि। साभासाविद्यातद्व्याप्यैश्चैतन्यतत्सम्बन्धा-

मूर्तप्रपञ्चबीजशक्तिरूपा । तदजन्यत्वेऽपि तन्निवृत्तौ निवर्तमानत्वेन तद्व्याप्यैः चैतन्यतत्सम्बन्धजीवेश्वरविभागचिदाभासैः सहानादित्वादव्याकृतमित्युच्यते ।

न्यायरत्नावली ।

अव्याकृतमित्युच्यते इति योजना । बीजशक्तिरूपेति । प्रयोजकशक्तितादात्म्यापन्नेत्यर्थः । शक्तिश्च त्रिधा । अदृष्टप्रपञ्च(१)-संस्काररूपा सूक्ष्मावस्था अज्ञाननिष्ठावरणविक्षेपशक्ती च । एवं चादृष्टादीनां अव्याकृतमध्ये निवेशाभावेऽपि न क्षतिः । अत एव वक्ष्यति 'पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ते' ति । ननु चैतन्याविद्यासम्बन्धादेरविद्याकार्यत्वाभावात् कथं तद्व्याप्यता ? तत्राह– तदजन्यत्वेऽपीति । तन्निवृत्तौ निवर्तमानत्वेनेति । यद्यपि तन्नाविद्याकार्यं तथापि यदा यदा चैतन्यतत्सम्बन्धादि तदा तदाऽविद्येति कालिकव्याप्तिरस्त्येव । अविद्योच्छेदक्षण एवाविद्याचित्सम्बन्धादेरप्युच्छेदात् । शुक्त्याद्यवच्छिन्नचिदविद्यासम्बन्धादौ तथादर्शनात् । चैतन्यतत्सम्बन्धेति । चिदविद्यासम्बन्धेत्यर्थः । जीवेशविभागेति । जीवेशभेदेत्यर्थः । जीवेशयो-

नारायणी ।

दिभिः सहाव्याकृतमित्युच्यत इति योजना । बीजशक्तिरूपेति । प्रयोजकशक्तितादात्म्यापन्नेत्यर्थः । शक्तिश्च त्रेधा जीवादृष्टं प्रपञ्चसंस्काररूपा सूक्ष्मावस्था अज्ञाननिष्ठावरणविक्षेपशक्ती च । ननु चैतन्याविद्यासम्बन्धादेरविद्याकार्यत्वाभावात् कथं तद्व्याप्यता तत्राह—तदजन्यत्वेपीति । यद्यपि तन्नाविद्याकार्यं तथापि यदा यदा चैतन्यतत्सम्बन्धादि तदा तदाऽविद्येति कालिकी व्याप्तिरस्त्येव । अविद्योच्छेदक्षण एवाविद्याचित्सम्बन्धादेरुच्छेदात् शुक्त्याद्यवच्छिन्नचिदविद्यासम्बन्धादौ तथा दर्शनात् । चैतन्यसम्बन्धेति । चिदविद्यासम्बन्धेत्यर्थः । जीवेशविभागेति । जीवेशयोर्भेदेत्यर्थः । जीवेशयोस्तु दृक्पदार्थ एवान्तर्भावो नाव्याकृते दृश्ये । चिदाभासैः-वृत्तिप्रतिबिम्बादिरूपैरवान्तरैः । कार्यक्रमवैचित्र्ये

(१) अदृष्टं पूर्वसंस्कारेति गपुस्तके ।

(१)+अयं चाव्याकृतपदार्थ ईश्वरोपाधिः+। सा च स्वयं जडाप्यजडेन चिदाभासेनोज्ज्वलिता पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती शब्दस्पर्शरूपरसगन्धात्मकान्याकाशवायुतेजोजलपृथिव्याख्यानि पञ्च महाभूतानि जनयति। तत्र पूर्वपूर्वभूतभावापन्नाया अविद्याया उत्तरोत्तरं

न्यायरत्नावली।

स्तु दृश्यन्तर्भावः, नाव्याकृते दृश्ये। चिदाभासेति। चित्तादात्म्यापन्नाभासेत्यर्थः। साभासेत्यनेनैवाभासस्य लब्धत्वेऽपि तस्य तद्गतचित्तादात्म्यस्य चाविद्याव्याप्यतालाभाय चिदाभासेत्युक्तम्। तथा च अनादिपञ्चकमेव शक्तिद्वयसंस्कारादृष्टसहितमव्याकृतमित्युच्यते। व्याक्रियमाणाकाशादिकार्यान्यत्वादिति भावः। 'तद्धेदन्तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इत्यादिश्रुतिभिस्तु अव्याकृतपदार्थैकदेशस्यैवाज्ञानस्य उपादानत्वादिकमुच्यते। शक्तिद्वयोपहिताज्ञानस्य परिणामित्वात्तद्गतचिदाभासस्य वार्तिकमते उपादानत्वात्कर्तृत्वाच्च अज्ञानस्येव तुल्यन्यायेन अज्ञानसम्बन्धादेः कालविधया निमित्तत्वात् अदृष्टादेर्निमित्तत्वादित्याशयेनाह-सा चेति। चिदाभासेनोज्ज्वलिता-चिदाभासरूपेणेश्वरेणाधिष्ठिता। प्रयुक्ता—सहकृता। गन्धात्मकानीति। गुणगुणिनोस्तादात्म्यस्वीकारात्। युक्तमेतत्। अत एव श्रुतौ गुणानां पृथक्सृष्टिर्नोक्ता। भूतभावापन्नाया इति।

नारायणी।

उपपादयिष्यन् सहकारिभेदसहकृताविद्यातः सृष्टिमाह—सा चेति। चिदाभासेनोज्ज्वलिता-चिदासरूपेणेश्वरेणाधिष्ठिता चिदाभासाविवेकेनेश्वरेणाधिष्ठिता वा, प्रयुक्ता-सहकृता। गन्धात्मकानीति। गुणगुणिनोस्तादात्म्याङ्गीकारात्। युक्तं चैतत्, श्रुतौ गुणानां पृथगुत्पत्तेरश्रवणात्। अविद्यैव यदि साक्षात् सर्वेषां जनिका तदा भूतपरिणामविशेषगुणादिव्यवस्था कथं तत्राह-तत्रेति। तेषु तेषु भूतेषु मध्ये। पूर्वपूर्वेति। पूर्वपूर्वभूतरूपेण प-

(१) +......+ एतच्चिह्नमध्यस्थः पाठो नास्ति कपुस्तके।

प्रति कारणत्वात् पूर्वपूर्वभूतगुणानामुत्तरोत्तरभूतेष्व-नुप्रवेशः । एवमविद्यात एवान्धकारोऽपि भावरूप एवावरणात्मा चाक्षुषज्ञानविरोधी आलोकनाश्यश्च

न्यायरत्नावली ।

भूतविशिष्टाया इत्यर्थः । तथा च पूर्वपूर्वभूतानामप्युत्तरोत्तरभूते-षूपादानत्वम् । अत एवाकाशादीनां वाय्वाद्यपेक्षया महत्त्वं पुरा-णाद्युक्तं युज्यते । न ह्याकाशादीनां कार्त्स्न्येन वाय्वादिरूपेण परिणामः, तथासति उत्तरोत्पत्तिकाले पूर्वपूर्वोच्छेदप्रसङ्गः, कि-न्त्वेकदेशेन; तथा च सुतरां पूर्वपूर्वस्य महत्त्वम् । नन्वेवं 'प्रमा स्वनाश्यत्वादिविशिष्टवस्तुपूर्विका प्रकाशत्वादालोकवदि'त्यनुमा-नादालोकस्य स्वनाश्यतमःपूर्वकत्वं स्वीकृत्य विवरणादि-ग्रन्थोक्तेः कथं सङ्गतिः ? । तमस आलोकनाश्यभावरूपत्वे श्रुतिषु तत्सृष्ट्युक्त्यापत्तेः (१)आलोकरूपतेजोऽभावरूपत्वात्तत्राह— एवमित्यादि । आवरणात्मकत्वं प्रकटयति—चाक्षुषज्ञानवि-

नारायणी ।

रिणताया इत्यर्थः । आकाशरूपेण परिणताया वायुं प्रति, वायुरूपेण परिणतायास्तेजः प्रतीत्येवं कारणत्वादिति यावत् । तथाच पूर्वपूर्व-भूतानामप्युत्तरोत्तरेषु भूतेषूपादानत्वम् 'आकाशाद्वायुः वायोरग्निरि'-ति श्रुतेः । अत एवाकाशादीनां वाय्वाद्यपेक्षया महत्त्वं पुराणादिषूक्तं यु-ज्यते । नह्याकाशादीनां कार्त्स्न्येन वाय्वादिपरिणामः तथासत्युत्तरो-त्पत्तिकाले पूर्वरूपोच्छेदप्रसङ्गात्, किन्त्वेकदेशेन; तथा च सुतरां पूर्वपूर्वस्य महत्त्वमिति संक्षेपः । पूर्वपूर्वभूतगुणानामिति । आकाशादिगु-णानां शब्दादीनां वाय्वादावुत्पत्तिरित्यर्थः । कारणगुणा हि कार्य-गुणानारभन्त इति न्यायादिति भावः । आलोकनिरपेक्षचक्षुर्ग्राह्य-त्वात्तमो न भावरूपं किन्त्वालोकाभाव एवेति तार्किकमतं निराकरि-ष्यन्प्रसङ्गादन्धकारं निरूपयति—एवमिति । भावरूप एव-अभावभिन्न एव अबाधितनीलरूपवत्त्वादिप्रतीतेरिति भावः । लाघवतर्कं निरसिष्य-न्नाह—आवरणात्मेति । आवरणात्मत्वं स्फुटयति—चाक्षुषेति । चाक्षुषधीप्रति-

(१) आलोकाभावरूपत्वादिति घपुस्तके ।

झटिति महाविद्युदादिवदाविर्भवति तिरोभवति चेति सि-

न्यायरत्नावली ।

रोधीति । चाक्षुषधीप्रतिबन्धक इत्यर्थः । नन्वन्वयव्यतिरेकाभ्यामालोकस्य चाक्षुषहेतुत्वात् तमसस्तत्प्रतिवन्धकत्वे मानाभावस्तत्राह—आलोकनाश्य इति । आलोकस्य संयोगसम्बन्धेन चाक्षुषहेतुत्वे आलोकं तदभावेन चाक्षुषं नोत्पद्येत, तस्माद्विषयतासम्बन्धेन चाक्षुषं प्रति अवच्छेदकतासम्बन्धेन तमः प्रतिबन्धकम्, आलोकासम्बद्धद्रव्यावच्छिन्नचैतन्ये तमउत्पत्त्या तत्र न चाक्षुषोत्पत्तिः, आलोकावच्छिन्नचैतन्ये तमोऽनुत्पत्त्या तत्र चाक्षुषोत्पत्तिः । आलोकस्य तमोनाशकत्वेन चाक्षुषोपयोगितया तदन्वयव्यतिरेकावुपक्षीणाविति भावः । ननु तर्हि तमसः सृष्टिः

नारायणी ।

बन्धक इत्यर्थः । नन्वन्वयव्यतिरेकाभ्यामालोकस्य चाक्षुषहेतुत्वात्तमसस्तत्प्रतिबन्धकत्वे मानाभावस्तत्राह—आलोकनाश्य इति । संयोगेनालोकस्य समवायेनालोकसंयोगस्य वा चाक्षुषहेतुत्वे स्वर्णभिन्नत्वमहत्त्वावच्छिन्नत्वादिकमवश्यं निवेश्यम्, अन्यथा स्वर्णपरमाण्वादिसंयोगेनान्धकारादौ चाक्षुषापत्तेस्तथाच गौरवम् । अस्मन्मते तु विषयतासम्बन्धेन चाक्षुषं प्रत्यवच्छेदकतासम्बन्धेन तमः प्रतिबन्धकम्, आलोकासम्बद्धद्रव्यावच्छिन्नचैतन्ये तम उत्पत्त्या चाक्षुषानुत्पत्तिः, आलोकावच्छिन्नचैतन्ये तमोनुत्पत्त्या चाक्षुषोत्पत्तिरित्यालोकस्य तमोविघटकत्वेन चाक्षुषोपयोगितयान्वयव्यतिरेकावुपक्षीणाविति भावः । तर्हि तदङ्गीकारे तदुत्पत्तिविनाशकल्पनातो महागौरवं तत्राह—झटितीति । स्पष्टम् । एतेन गृहादावारोपितमञ्जनादिमालिन्यादिकमेव तम इत्यपि मतं न समीचीनमिति ज्ञापितम्, आलोकाजन्यचाक्षुषविषयत्वात् । न च गृहादावञ्जनादिमालिन्यस्यानुभूयमानारोपासम्भवेऽपि स्मर्यमाणारोपे बाधकाभाव इति वाच्यम् । तथा सति 'गृहे तम' इति तमोविशेष्यकचाक्षुषानुपपत्तेः बहिरिन्द्रियजन्यज्ञान उपनीतस्य विशेषणतया भाननियमात् । 'उपनीतं विशेषणतयैव भासते मानसे त्वनियम' इति सिद्धान्तात् । न चायंप्रत्ययो मानस एवेति वाच्यम् । चाक्षुषत्वानुभवविरोधात् । न च चाक्षुषत्वाऽनुभवोऽपि भ्रम

द्धान्तः। संसारहेतुदेहोपादानत्वाभावाच्च न श्रुतिषु सृष्टिप्रक्रियायामाम्नात इत्यविरोधः। दिक्कालौ त्वप्रामाणिकत्वान्नोक्तौ। आकाशस्यैव दिग्व्यवहारजनकत्वसम्भवात् 'दिशः श्रोत्र' मिति श्रुतेश्च। कालस्त्वविद्यैव।

न्यायरत्नावली।

कथं न श्रूयते ? तत्राह—संसारेति। देहमध्ये तमस्सत्त्वे मानाभावेन तमसो न देहोपादानत्वम्, आकाशं त्ववकाशदानाय देहान्तरस्त्येवेति भावः। दिक्कालाविति। क्लृप्तपदार्थान्याविति शेषः। श्रुतिषु सृष्टिप्रक्रियायामित्यनुषज्यते। आकाशस्यैवेति। पराभिमतादिश इव आकाशस्य सर्वगतत्वात् दिक्कृतविशेषणतासम्बन्धेन सर्वाधारत्वसम्भवात् उदयाचलसन्निकृष्टमूर्तविशेषोपहितत्वादिरूपेण प्राचीत्वादिसम्भवादिति भावः। ननु आकाशः अविद्यादिकं वा दिगित्यत्र विनिगमकाभावात अतिरिक्ता दिगास्ताम् तत्राह—दिश इति। दिग्जन्यमित्यर्थः। तथा च श्रुतिरेव आकाशस्य दिक्त्वे मानम्, नाभसत्वेन प्रमितस्य श्रोत्रस्य दिग्जन्यताबोधकत्वादिति भावः। अविद्यैवेति। ननु

नारायणी।

इति वाच्यम्। घटादेरपि अचाक्षुषत्वप्रसङ्गात्। ननु तर्हि तमसोऽपि श्रुतिषु सृष्टिः श्रूयते तत्राह—संसारेति। देहमध्ये तमसः सत्त्वे मानाभावेन तमसो न देहोपादानत्वम्, आकाशं त्ववकाशदानाय देहमध्येऽस्त्येवेति भावः। दिक्कालाविति। क्लृप्तपदार्थान्याविति शेषः। नोक्तौ—कालत्वदिक्त्वादिना पृथङ्नोक्तौ। श्रुतिषु सृष्टिप्रक्रियायामित्यनुषज्यते। यदि नातिरिक्तौ तर्हि 'इहेदानीमि'त्यादिप्रतीतेः का गतिस्तत्राह—आकाशस्यैवेति। पराभिमतदिश इवाकाशस्यापि सर्वगतत्वाद्दिक्कृतविशेषणतासम्बन्धेन सर्वाधारत्वसम्भवात् उदयाचलसन्निकृष्टमूर्तविशेषोपहितत्वादिरूपेण प्राचीत्वादिसम्भवादिति भावः। नन्वाकाशोऽविद्यादिकं वादिगित्यत्र विनिगमकाभावादतिरिक्ता दिगास्तां तत्राह—दिश इति। दिग्जन्यमित्यर्थः। तथाच श्रुतिरेवाकाशस्य दिक्त्वे मानं नाभसत्त्वेन प्रमितस्य श्रोत्रस्य दिग्जन्यताबोधकत्वादिति भावः। अविद्यै-

तस्या एव सर्वाधारत्वादिति । तानि च सूक्ष्माण्यपञ्चीकृतानि पञ्च महाभूतान्यमूर्ताख्यानि कारणैक्यात्सत्त्वरजस्तमोगुणात्मकानि सत्त्वांशप्राधान्येन ज्ञानक्रियाशक्त्यात्मकमेकं स्वच्छद्रव्यं चित्ररूपमिव मिलित्वा जन-

न्यायरत्नावली ।

नेदं युक्तम्, प्रतिविम्बत्वोपहितं जीवं प्रत्यविद्याया आधारत्वेऽपि ईशं प्रति तत्सत्त्वे मानाभावः, शुद्धं प्रति तु सुतराम्, तस्यैव सर्वाधारत्वात्; तत्राह-तस्या एवेति । सर्वाधारत्वात् कालिकसम्बन्धेन स्वेतरसर्वाधारत्वात् । ईशादिकमपि तत्सम्बन्धेन तद्वृत्ति, शुद्धचितस्तु तत्तद्वृत्तित्वाभावेऽपि न क्षतिः । 'ज्ञः कालकालो गुणी सर्वविद्य' इत्यादिश्रुतिषु (१)सर्वदृश्याधारकालाधारत्वात, 'चक्षुषश्चक्षुरि'त्यादिश्रुतिषु दृश्यभासकचक्षुरादिभासकत्ववत् । वस्तुतस्तु महाकाले मानाभावः, इदानीमिदमित्यादिबुद्धेर्जन्यमात्ररूपखण्डकालमात्रविषयकत्वमेव । अयं साभासाविद्यारूपः, अविद्यागताभासाविविक्ताचित एव ईश्वरत्वस्योक्तत्वात । साभासाविद्यायां ईश्वरोपाधित्वमिति भावः । स्वच्छत्वसम्पादनायाह—सत्त्वांशप्राधान्येनेति । ज्ञानक्रियाशक्त्यात्मकं ज्ञानक्रिययोर्जननानुकूले ये शक्ती, तद्विशिष्टम् । धर्मधर्मिणोस्ता-

नारायणी ।

वेति । लाघवादिति भावः । ननु तथाप्यविद्यात्मक एवेत्यत्र किं बीजं ? तत्राह—तस्या एवेति । अविद्याया एव कालिकसम्बन्धेन स्वेतरसर्वदृश्याधारत्वादित्यर्थः । अयं साभासाविद्यारूपः । अमूर्तमाह—तानि चेति । शब्दादितन्मात्रात्मकानीत्यर्थः । लिङ्गस्य स्वच्छत्वज्ञापनाय आह—सत्त्वप्राधान्येनेति । सत्त्वांशाधिक्ययुक्तानीत्यर्थः । ज्ञानेति । ज्ञानक्रिययोर्जननानुकूले ये शक्ती तद्विशिष्टम्, धर्मधर्मिणोस्तादात्म्यात्तदात्मकोक्तिः । एकमिति । (२)प्रतिजीवं स्थूलशरीरवदेकं चित्प्रतिबिम्बयो-

(१) सर्वदृश्याधारो यः कालः तस्याप्याधारत्वस्य अवगतत्वादित्यर्थः ।

(२) एकं स्वच्छं द्रव्यमिति प्रतिजीवमित्यादि खपुस्तके ।

यन्ति । तस्य च ज्ञानशक्तिप्रधानांशोऽन्तःकरणम् । तच्च बुद्धिर्मन इति द्विधोच्यते । क्रियाशक्तिप्रधानांशः प्राणः । स च पञ्चधा—प्राणोऽपानो व्यान उदानस्समान

न्यायरत्नावली ।

दात्म्यात् तदात्मकत्वोक्तिः । प्रधानः—उपहितः । बुद्धिर्मन इति द्विधेति । बुद्धेरप्यहमित्याकारकनिश्चयतदन्यनिश्चयरूपवृत्तिभेदेनाहङ्कारोऽनहङ्कारश्चेति द्वैविध्यम् । मनोऽपि द्विविधं संशयवृत्त्या चित्तम्, सङ्कल्पादिवृत्तिभिराचित्तम् । 'कामस्सङ्कल्पो विचिकित्से'त्यादि 'एतत्सर्वं मन एवे'त्यादिश्रुतेः । प्राण इत्यादि ।

'हृदि प्राणो गुदेऽपानस्समानो नाभिसंस्थितः ।

नारायणी ।

यं सकलवृत्त्याश्रयीभूतमित्यर्थः । एतेन वक्ष्यमाणसप्तदशराशिरूपमेव लिङ्गशरीरं नावयव्यन्तरं कल्पनागौरवादित्यर्वाचीनानामुक्तिर्निरा-कृता । 'तमुत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्तीति'श्रुतेः—

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥

इत्याचार्योक्तेश्च विरोधात् ।

कर्मात्मा पुरुषो योसौ बन्धमोक्षैस्स युज्यते ।
स सप्तदशकेनापि राशिना युज्यते त्वसौ ॥

इतिमोक्षधर्मे । राशिपदोक्तिस्तु तार्किकाभितावयवावयविभाव-निरासाय न धर्मिप्रतिषेधायेति न कोपि विरोध इत संक्षेपः । ननु विजातीयभूतानां कथमेकवस्त्वारम्भकत्वं तत्राह—चित्ररूपमिवेति । यथा नीलपीतादिगुणाः परस्परमेलने सति चित्ररूपं जनयन्ति तथा विजातीयभूतान्यपि परस्परं मेलने सति चित्रद्रव्यमुत्पादयन्तीत्यर्थः । एवं लिङ्गशरीरं व्युत्पाद्य तस्यावयवान् विभजते—तस्य चेति । लिङ्गस्य चेत्यर्थः । प्रधानः—उपहितः विशिष्ट इति यावत् । द्विविधेति । बुद्धेरप्यहमित्याकारनिश्चयतदान्यरूपवृत्तिभेदेनाहङ्कारोनहंकारश्चेति द्वैविध्यम् । मनोपि द्विविधं संशयवृत्त्यान्वितं सङ्कल्पादिवृत्तिभिरन्वितं 'कामः सङ्कल्पो विचिकित्सेति' श्रुतेः । प्राण इति ।

इति। एवमेकैकभूतेभ्यो ज्ञानक्रियाशक्तिभेदात् प्रत्येकमिन्द्रियद्वयं जायते। आकाशाच्छोत्रवाचौ, वायोस्त्वक्पाणी, तेजसश्चक्षुष्पादौ, अद्भ्यो रसनपायू, पृथिव्याः घ्राणोपस्थौ। अत्र 'तेजोमयी वागि'ति श्रुतेस्तैजसी वाक्। पादस्तु नाभस इति केचित्॥। शब्दव्यञ्जकेन्द्रियत्वेन श्रोत्रवद्वाचो नाभसत्वम्। पादचिकित्सया च चक्षुषः स्वास्थ्यदर्शनाच्चक्षुर्वत्पादस्यापि तैजसत्व-

न्यायरत्नावली।

उदानः कण्ठदेशस्थो व्यानस्सर्वशरीरगः॥

इति हृदयाद्यवच्छिन्नक्रियाजनकत्वमेव प्राणत्वादिकमिति भावः। शक्तिभेदादिति। द्वयं द्वयमिति योजना। तथा चैकैकभूतेभ्यो ज्ञानशक्तिमदेकैकं क्रियाशक्तिमदेकैकं चेत्यर्थः। शब्दव्यञ्जकेत्यादि। वागिन्द्रियस्य शब्दोत्पादनद्वारा शब्दव्यञ्जकत्वम्। पादचिकित्सयेत्यादि। तथा च संस्कृतस्य पाद-

नारायणी।

हृदि प्राणो गुदेऽपानः समानो नाभिदेशगः।
उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः।

इत्युक्तेर्हृदयाद्यवच्छिन्नक्रियाजनकत्वादिकमेव प्राणत्वादिकमित्यर्थः। श्रोत्रत्वगक्षिरसनघ्राणमनांस्येवेन्द्रियाणि, ज्ञानजनकत्वात्। 'मनःषष्ठानीन्द्रियाणी'ति भगवदुक्तेश्च, न वागादीनिति तार्किकाः। तन्न साधीयः। 'दशेमे पुरुषे प्राणा' इत्यादिश्रुतिविरोधात्। तत्र 'वाक् च वक्तव्यं च हस्तौ चादातव्यं च पादौ च गन्तव्यं च पायुश्च विसर्जयितव्यं च उपस्थश्चानन्दयितव्यं चे'त्यादिना वागादीनामपीन्द्रियत्वसूचनात्तथाच प्राणेतरत्वे सत्यपञ्चीकृतभूतोपादानकत्वमेवेन्द्रियत्वं न ज्ञानकरणत्वमात्रमित्यभिप्रेत्य ज्ञानकर्मप्रधानं फलभेदतोतिभिन्नमिन्द्रियं विशिष्य सकारणं दर्शयति–शक्तिभेदादिति। द्वयं द्वयमित्यत्र योजना। तथाचैकैकगुणप्रधानेभ्यो भूतेभ्यो ज्ञानशक्तिमदेकं क्रियाशक्तिमदेकं चेत्यर्थः। शब्दव्यञ्जकेति। वागिन्द्रियस्य शब्दोत्पादनद्वारा शब्दव्यञ्जकत्वम्। पादचिकित्सेति। तथाच संस्कृतस्य पादस्य चक्षुषः

मिति तु युक्तमुत्पश्यामः । तेजोमयत्वश्रुतिस्तु मनसः पञ्चभूतकार्यस्यापि अन्नमयत्वश्रुतिरिव तदुपका-

न्यायरत्नावली ।

स्य चक्षुस्स्वास्थ्योत्पादनद्वारा रूपव्यञ्जकत्वात्तैजसत्वमिति भावः। एवं त्वचस्स्पर्शव्यञ्जकत्वेन पाणेः क्रियाशक्त्याधिक्येन वायवीयत्वम् । स्पर्शो हि वायावेव प्रथममभिव्यक्तत्वाद्वायोरेव गुणः। वायूपादानकत्वात् भूतान्तरेऽनुगच्छति। एवं वायोरेव क्रियाशक्तिः, चलस्वभावत्वात्। तत्सम्बन्धादन्यत्रापि। अत एव शब्दस्याकाशमात्रगुणत्वात्तद्व्यञ्जकयोश्श्रोत्रवाचोर्नाभसत्वम्। रसनेन्द्रियस्य रसव्यञ्जकत्वेन जलीयत्वम्, पायोस्तु जलवन्मलशोधकत्वेन तत्। घ्राणस्य गन्धव्यञ्जकत्वेन पार्थिवत्वम्, उपस्थस्य तु दुर्गन्धातिशयव्यञ्जकत्वात् तत्। श्रुतिपुराणवाक्यादिनि सर्वत्र साधकानि सन्त्येव। तदुपकार्यतयेति।

नारायणी ।

स्वास्थ्योत्पादनद्वारा रूपव्यञ्जकत्वात्तैजसत्वमित्यर्थः । एवं त्वचः स्पर्शव्यञ्जकत्वेन, पाणेः क्रियाशक्त्याधिक्येन वायवीयत्वम् । स्पर्शो हि वायावेव प्रथममभिव्यक्तत्वाद्वायोरेव गुणः, वायूपादानत्वाद्भूतान्तरे तु गच्छति, एवं वायोरेव क्रियाशक्तिश्चलनत्वात्तत्सम्बन्धादन्यत्रापि। रसनेन्द्रियस्य रसव्यञ्जकत्वेन जलीयत्वम्, पायोस्तु जलवन्मलशोधकत्वेन (१)तत्। घ्राणस्य गन्धव्यञ्जकत्वेन पार्थिवत्वम्। उपस्थस्य च(२) शुक्राभिव्यञ्जकत्वेन तत्। उपकार्यतयेति। सुवर्णादिभक्षणोपकार्यतयेत्यर्थः(३)*वायुभुजामपि मोददर्शनेन 'अन्नमयं हि सोम्य मन'इ-

(१) मलशोधकत्वेन स्निग्धत्वेन च तदिति खपुस्तके ।

(२) उपस्थस्य च दुर्गन्धातिशयव्यञ्जकत्वेन कठिनत्वेन च तत् इति खपुस्तके ।

(३) अत्रायमधिको भिन्नश्च पाठः खपुस्तके । *तत्र दृष्टान्तमाह--मनस इति। अन्तःकरणाख्यलिङ्गशरीरभागस्य । पञ्चभूतकार्यस्यापीति--उक्तश्रुतिभिरपञ्चीकृतपञ्चभूतकार्यस्यापि । अन्नमयत्वश्रुतिवत्--'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषम्भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मन' इत्याद्युपक्रम्य 'अन्नमयं हि सोम्य मन'इति त्रिवृदन्नकार्यत्वबोधकश्रुतिवदित्यर्थः। वायुभुजामपि

र्यतया व्याख्येया । मनसश्च पञ्चभूतगुणग्राहकत्वेन

न्यायरत्नावली ।

तैजससुवर्णादिभक्षणोपकार्यतयेत्यर्थः । ननु मनसः पाञ्चभौतिकत्वे किं मानम्? तत्राह—मनसश्चेति । तद्वृत्त्वनिश्चयात्-पञ्चभूत-

मोददर्शनाल्लोकान्तरगतिसमर्थस्य स्थूलभूतकार्यत्वायोगात्पञ्चभूतगुणग्राहकस्य पृथिवीमात्रकार्यत्वायोगाच्च श्रुतिर्न यथाश्रुतार्थपरा किन्तु मनःस्थूलान्नोपकार्यमित्यर्थपरा । उपकार्यता च तत्कृतोपचयवत्त्वेन तत्कृतबलवत्त्वेन वेति अन्यदेतत् । एवमापोमयः प्राण इति श्रुतिः प्राणाख्यलिङ्गशरीरभागस्य न जलकार्यत्वबोधिका तस्यापि अपञ्चीकृतभूतकार्यत्वात् । तैः सर्वैः सहितैः प्राणो वृत्तिभेदात् स पञ्चधा । इत्यादिवाक्यैः सिद्धान्ते तथा प्रतिपादनात् । समानयुक्तित्वाच्च । तस्मात् 'अन्नमयं हि सोम्य मनः आपोमयः प्राण' इति श्रुतेः यथा श्रुतार्थबाधवत् 'तेजोमयी वाग्' इति श्रुतेः यथाश्रुतार्थबाधो इष्ट इति भावः । ननु कथं तर्हि मनसो भौतिकत्वसिद्धि? तत्राह—मनसश्चेति । अन्तःकरणाख्यलिङ्गशरीरभागस्य तु इत्यर्थः । पञ्चभूतगुणग्राहकत्वेन पञ्चभूतानां पृथिव्यप्तेजोवायुगगनानामसाधारणगुणाः पञ्चभूतगुणाः गन्धरसरूपस्पर्शशब्दास्तेषां ग्राहकं पञ्चभूतगुणग्राहकं पञ्चभूतगुणानापरोक्षप्रत्यक्षस्य जनकं तस्य भावः तत्त्वं तेन पञ्चभूतसाधारणगुणप्रत्यक्षजनकत्वेनेति यावत् । अत्र कालादृष्टादौ व्यभिचारवारणाय हेतौ इन्द्रियत्वं देयम् । तथा चायं प्रयोगः 'मनः पञ्चभूतगुणवत्पञ्चभूतारब्धं पञ्चभूतसाधारणगुणप्रत्यक्षजनकेन्द्रियत्वात् यदिन्द्रियं यद्भूतासाधारणगुणग्राहकं भवति तत्तद्भूतासाधारणगुणवत्तद्भूतोपादानकं भवति, यथा घ्राणादिकं पृथिव्यसाधारणगुणं गन्धादिग्राहकं गन्धादिमत् पार्थिवमिति । नच घ्राणादीनां गुणप्रत्यक्षं प्रति असाधारणकारणत्वात् मनसश्च ज्ञानसामान्यं प्रति कारणस्य गुणप्रत्यक्षं प्रति साधारणकारणत्वात् दृष्टान्तदार्ष्टान्तिकयोर्वैशम्यमिति वाच्यम् । विषयसाधारणरूपचाक्षुषं प्रति चक्षुष इव विषयसाधारणगुणप्रत्यक्षं प्रति विषयमनोयोगस्याहेतुत्वे मनसेपि असाधारणत्वे वैषम्याभावात् । एतत्सर्वमभिप्रत्योक्तं वार्तिककारपादैः—

स्वग्राह्यार्थसजातीयमिन्द्रियं स्यात्प्रदीपवत् ।
रूपस्यैवावभासित्वान्न चेत्स्याच्चित्ररूपवत् ॥
न चेदर्थसजातीयं सर्वार्थग्रहणं भवेत् ।
एकैकस्येन्द्रियस्येह मनोबुद्ध्योर्यथा तथा ॥
सर्वभूतात्मकत्वात्तु सर्वार्थग्रहणं तयोः ।

इत्यादि । न चाहङ्कारिकत्वादिबोधककपिलादिस्मृतिविरोधात्तर्कोऽप्रमाणं तत्राह—अन्यदिति* ।

तत्त्वनिश्चयात्पञ्चभूतात्मकत्वमित्यन्यदेतत् । एतेषाम-

न्यायरत्नावली।

गुणवत्त्वनिश्चयात्। अन्यदेतदिति। यथा 'चक्षुस्तेजोमात्रोपादानकम्, रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वात् प्रभादिवदि'त्याद्यनुमानैः चक्षुरादीनां तेजोमात्रोपादानकत्वादिकं सिध्यति, तथा 'मनः पञ्चभूतोपादानकम्,पञ्चभूतगुणानां ग्राहकत्वादि' त्यनुमानेन मनसः पाञ्चभौतिकत्वं सिध्यति। तार्किकादिमते तु तस्याणुत्वात् पञ्चभूतानारभ्यत्वेन न तथानुमानमिति भावः। एतषां–ज्ञानक्रियेन्द्रियाणाम्। ज्ञानक्रियाशक्तिप्रधानाः–ज्ञानक्रिययोर्जननानुकूलशक्तिमन्तः। ज्ञानशक्तिसमष्टिः–ज्ञानेन्द्रियाणां सहकारि,क्रियाशक्तिसमष्टिः क्रियेन्द्रियाणां सहकारी। ननु देवानामधिष्ठातृत्वे किं मानमिति चेत्, उच्यते। अचेतनस्य रथादेः चेतनाधिष्ठानेनैव क्रियादर्शनात् जीवस्यापरोक्षज्ञानरूपाधिष्ठानविषयत्वस्येन्द्रियादिष्वसम्भ-

नारायणी।

त्यादिश्रुतेर्यथाश्रुतार्थबोधेनोपष्टम्भकत्वरूपार्थमात्रपरत्वान्मनसो भौतिकत्वे मानत्वायोगादनुमानमेवोपन्यस्यति–मनस इत्यादि। पञ्चभूतासाधारणगुणधीकरणत्वेन तद्वत्त्वनिश्चयात्–पञ्चभूतासाधारणगुणवत्त्वनिश्चयात् पञ्चभूतात्मत्वमिति शेषः। तथाचायं प्रयोगः 'मनः पञ्चभूतगुणवत् पञ्चभूतारब्धं च, पञ्चभूतासाधारणगुणग्राहकत्वात् यद्यद्भूतासाधारणगुणग्राहकं भवति तत्तद्भूतासाधारणगुणवत् तद्भूतोपादानकं च, यथा घ्राणादिकं पृथिव्याद्यसाधारणगुणगन्धादिग्राहकं गन्धादिमत्पार्थिवमिति दिक्। ननु श्रुतिविरोधात्तर्कोऽप्रमाणं तत्राह—अन्यदिति*। अनुमानस्य स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामती'ति बृहदारण्यकश्रुत्याद्यनुकूलत्वान्नाप्रामाणिकत्वं तथाच मनसो भौतिकत्वमेव युक्तमिति भावः स–प्रमाता, तेजोमात्राः तेजःप्रधानभूतसूक्ष्मांशान् समभ्याददानः सम्यक् निःशेषमाभिमुख्येनोपसंहरमाणः हृदयमेव हृदयस्थां बुद्धिमेव अन्ववक्रामति अन्वागच्छतीत्यर्थः। अत्र भूतसूक्ष्मसंहारपूर्वकसंहारोक्तेरुपसंह्रियमाणस्यापञ्चीकृतभूतारब्धत्वं ज्ञापितम्। नच स्पर्शवत्त्वेन द्रव्यारम्भकत्वापत्तिः। चक्षुरादितुल्यत्वाभ्युपगमादित्यन्यत्र विस्तरः। एतेषां–ज्ञानकर्मेन्द्रियाणाम्, अधिष्ठातारः–प्रव-

धिष्ठातारो देवा अपि ज्ञानक्रियाशक्तिप्रधानाः-दिगग्नी, वातेन्द्रौ, आदित्यविष्णू, वरुणमित्रौ, अश्विप्रजापती । तत्र ज्ञानशक्तिसमष्टिरन्तःकरणम् । क्रियाशक्तिसमष्टिः प्राणः । शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि । त्वक्चक्षुषी स्वग्राह्यगुणाश्रयं द्रव्यमपि गृह्णीतः ।

न्यायरत्नावली ।

वात् इन्द्रियापरोक्षज्ञानवन्तो देवा एव अधिष्ठातारो न जीवः । अथ कर्मेन्द्रियेषु किं मानमिति चदुच्यते । 'श्रोत्रं च श्रोतव्यं च वाक्च वक्तव्यं चे' ति श्रुतौ (१)श्रोत्रादीनामिव वागादीनामपि सविषयकत्वेनोक्तिरेव । शब्देत्यादि । शब्दादिनामिव तद्वृत्तिजातीनामपि ग्राहकाणि बोध्यानि । गृह्णीत इति । द्रव्याविषययोः चाक्षुषस्पार्शनयोरनुपलम्भादिति शेषः । ननु श्रोत्रस्य केन सन्निकर्षेण शब्दग्राहकत्वम् ? स्वाश्रयाकाशसमवेतत्वेनेति चेत्, तर्हि श्रोत्रस्य श्रावणप्रत्यक्षहेतुत्वे मानाभावः । शब्दे विद्यमाने श्रोत्रसन्निकर्षस्य सदा सत्त्वेन तद्व्यतिरेकेण कार्यव्यतिरेकानु-

नारायणी ।

र्चकाः, देवाः-ज्ञानक्रियाशक्तिप्रधानाः । ज्ञानक्रिययोर्जनानुकूलशक्तिमन्तः । इन्द्रियगोचरापरोक्षज्ञानस्य जीवे बाधेन देवानामेव तादृशज्ञानवतामधिष्ठातृत्वमुचितमिति भावः । ज्ञानशक्तिसमष्टिः-ज्ञानजनकेन्द्रियाणां सहकारि, क्रियाशक्तिसमष्टिः-कर्मेन्द्रियाणां सहकारी शब्देत्यादि। शब्दादीनामिव तद्वृत्तिजातीनामपि ग्राहकाणि बोध्यानि। गृह्णीत इति। द्रव्याविषयकयोश्चाक्षुषस्पार्शनयोरनुपलम्भादिति शेषः । घ्राणजरासनश्रावणप्रत्यक्षं तु द्रव्याविषयकमेव, द्रव्यग्रहणे घ्राणादीनामसामर्थ्यात् । कर्णशष्कुल्यवच्छिन्नं नमः श्रोत्रं तच्च निरवयत्वान्न बहिर्गच्छति किन्तु वीचीतरङ्गन्यायेन प्राप्तशब्दस्यैव ग्राहकमिति तार्किकास्तन्न सम्यक् । 'आत्मन आकाशः संभूत' इतिश्रुत्या जन्यत्वोकेराकाशस्य निरवयवत्वायोगात्, वीचीतरङ्गन्यायेन शब्दानन्त्यकल्पने

(१) श्रोत्रादीनां समभिव्याहारविशेषेण वागादीनामुक्तिरेव इति घपुस्तके ।

श्रोत्रमपि चक्षुर्वत् गत्वा शब्दग्राहकम्(१) दूरे शब्द इति प्रत्ययात्। वचनादानगतिविसर्गानन्दजनकानि वाक्पा-

न्यायरत्नावली।

पलम्भात्। अथ स्पर्शादिषु श्रावणादिप्रत्यक्षवारणाय विषयतया श्रावणं प्रति शब्दत्वादिना हेतुत्वस्य वाच्यतया तद्बलात्सर्वेषु शब्देषु सर्वेषां पुरुषाणां प्रत्यक्षं कुतो न स्यादिति चेन्न। शब्दनिष्ठविषयतासम्बन्धेन तत्पुरुषीयश्रावणं प्रति तत्पुरुषीयकर्णगोलकस्यावच्छेदकतासम्बन्धेन हेतुत्वात्, तस्माच्छ्रोत्रस्येन्द्रियत्वे मानाभावः तत्राह—श्रोत्रमपीति। गत्वा—शब्दावच्छेदकदेशेन संयुज्य। ग्राहकं—शब्दस्य प्रत्यक्षजनकम्। 'दूरे शब्द' इति प्रत्ययात्—'अयं श्रुतं शब्दः दूरस्थः विलक्षणध्वनिविशिष्टत्वा' दित्यनुमितेः। तथा च स्वसंयुक्तावच्छिन्नत्वसम्बन्धेन श्रोत्रं शब्दस्य ग्राहकमिति तादृशसम्बन्धाभावकाले तत्पुरुषीयशब्दप्रत्यक्षानुपपत्त्या श्रोत्रस्य शब्दग्राहकत्वमावश्यकम्। शब्दस्य नाकाशसमवेतत्वं किन्तु (२)ककारादिसमवेतत्वमिति स्वीकारे तु स्वसंयुक्तसमवेतत्वमेव सम्बन्धः समवेतत्वं तादात्म्यम्। एवं च तत्पुरुषीयकर्णस्यावच्छे-

नारायणी।

गौरवाच्च चक्षुरादिवच्छ्रोत्रमपि बहिर्गत्वैव गृह्णातीत्याह—श्रोत्रमिति। गत्वा—शब्दाद्यवच्छेदकदेशेन संयुज्य, ग्राहकं—शब्दप्रत्यक्षजनकम्। दूरे शब्देति। श्रुतः शब्दो दूरस्थो विलक्षणध्वनिविशिष्टत्वादि'त्यनुमितेः। तथाच विषयतासम्बन्धेन शब्दप्रत्यक्षं प्रति स्वसंयुक्तत्वावच्छिन्नत्वसम्बन्धेन श्रोत्रं कारणमिति दिक्। भूतसूक्ष्माणि मनोबुद्धिदशेन्द्रियाणि लिङ्गं न, किन्तु—

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्।

इत्याचार्योक्तम्। प्राणस्यान्तःकरणेऽप्रवेशात्, भूतसूक्ष्माणि विहाय गमनायोगात्तेषामावश्यकत्वादिति। सांख्यमताभिमानिनां मतनिरा-

(१) दूरे शब्द इति प्रत्ययात् इति पाठो नास्ति गघपुस्तकयोः। आवश्यकश्चायं न्यायरत्नावल्यां नारायण्यां च व्याख्यातत्वादिति।

(२) किन्तु भेर्यादिसमवेतत्वमिति पाठेन भाव्यम्।

णिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि । एतच्च सर्वं मिलित्वा सप्तदशकं लिङ्गं ज्ञानशक्तिप्राधान्येन हिरण्यगर्भ

न्यायरत्नावली ।

दकतासम्बन्धेन न हेतुत्वम् । तत्पुरुषीयकर्णावच्छेदेनानुत्पद्यमानस्यापि दूरस्थस्य शब्दस्य तत्पुरुषीयश्रोत्रेण ग्रहणात् । तार्किकादिमते तु गगनरूपत्वेन श्रोत्रस्य देशान्तरे गत्यसम्भवादुक्तरीत्या शब्दाग्राहकत्वमिति भावः । सप्तदशकं 'पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वित' मिति सप्तदशसङ्ख्याकं लिङ्गं यावत्संसारकालमनपायितया आत्मोपाधित्वेनात्माभिव्यञ्जकम् । ज्ञानशक्तीति । ज्ञानशक्तिसमष्टीत्यर्थः । हिरण्यगर्भ इति । हिरण्यमिव प्रकाशजनको ज्ञान-

नारायणी ।

सायाह-एतच्चेति । एतदेव सर्वं पञ्चप्राणमनोबुद्धिदशेन्द्रियाणि तदा श्रयश्च मिलित्वा-धर्मधर्मीभावापन्नीभूय, सप्तदशावयवा विद्यन्ते यस्य तत्सप्तदशकं (सप्त) दशावयवकधर्मिरूपं लिङ्गं लिङ्गशरीरम् । अयं भावः । भूतसूक्ष्माणां न लिङ्गशरीरप्रवेश उचितः भोक्तृकरणभिन्नत्वेन साक्षाद्भोगोपधायकत्वाभावात् । नाऽपि प्राणस्यान्तःकरणे प्रवेश उचितः । सत्त्वप्रधानाऽपञ्चीकृतमहाभूतकार्यत्वे सति ज्ञानशक्तिसमष्टित्वमन्तःकरणत्वम् । रजःप्रधानाऽपञ्चीकृतमहाभूतकार्यत्वे सति क्रियाशक्तिसमष्टित्वं प्राणत्वमिति लक्षणभेदात् । 'एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च' इति श्रुत्यापि भेदोक्तेश्च । अत एव नेन्द्रियसामान्यवृत्तिरूपोऽपि । तस्य चैकत्वेपि पूर्वोक्तावान्तरभेदमादाय भोगवैचित्र्याधायकत्वादवान्तरभेदभिन्नस्यैव लिङ्गप्रवेशोक्तिः । नागकूर्मकृकलदेवदत्तधनञ्जयादीनां तु लिङ्गवृत्तिभोगोपधायकत्वाभावान्न लिङ्गशरीरप्रवेशसम्भावनापीति दिक् । एवं मनोबुद्ध्योः संशयत्वनिश्चयत्वरूपविरुद्धधर्माध्यासादत्यन्तभिन्नयोर्वै पृथगुक्त्या प्रवेशो न चित्ताहङ्कारयोस्तयोरन्तःकरणविभाजकत्वाभावात् । लिङ्गत्वं यावत्संसारकालमनपायितयात्माभिव्यञ्जकत्वम् अभिव्यञ्जकत्वं त्वहमिति व्यवहारविषताप्रयोजकत्वे सति भोगोपधायकत्वमित्यन्यत्र विस्तरः । ज्ञानशक्तीति । ज्ञानशक्तिसमष्टीत्यर्थः । हिरण्यगर्भेति । हिरण्यमिव प्रकाशजनको ज्ञप्तिशक्तिरूपो गर्भो यस्येति व्युत्पत्तेः

इति क्रियाशक्तिप्राधान्येन सूत्रमिति चोच्यते। अयममूर्तपदार्थः कार्यत्वाद्व्यष्टौ समष्टौ च जीवोपाधिरेव। तानि च तथाभूतानि भूतानि भोगायतनं शरीरं भोग्यं च विषयमन्तरेण भोगं जनयितुमशक्नुवन्ति जीवकर्मप्रयुक्तत्वात्स्थौल्याय पञ्चीकृतानि भवन्ति। तत्र च प्रत्येकं पञ्च भूतानि द्विधा विभज्यन्ते। तत्रैकैको भागश्चतुर्धा विभज्यते। तद्भागचतुष्टयं च स्वभागं विहायेतरभूतचतुष्टयार्धभागेषु प्रविशतीति स्वस्यार्धभागेनेतरेषामष्टमभागेन च पञ्चीकरणान्मेलनेऽप्याधि-

न्यायरत्नावली।

शक्तिरूपो गर्भो यस्येति व्युत्पत्तिः। क्रियाशक्तीति। क्रियाशक्तिसमष्टीत्यर्थः। सूत्रं सर्वशरीरावच्छिन्न(१)हस्तादिक्रियाजनकत्वेन सूत्रवदनुस्यूतम्। कार्यत्वादिति। सोपाधिकेश्वरस्य सर्वकार्यजनकत्वात् कार्यं नेशोपाधिरिति भावः। अशक्नुवन्तीति शतृप्रत्ययान्तम्। स्थौल्याय—शरीरादिनिष्ठस्थौल्यप्रयोजकं स्थौल्यं लब्धुम्। पञ्चीकरणस्वरूपमाह—तत्रेत्यादि। तत्र द्विधाकृतभागयोः। स्वभागं—द्विधाकृतभागयोश्चतुर्धात्वमनापन्नमविशिष्टमेकम्। इतरेषामष्टमभागेन चेति। आकाशादीना(२)म-

नारायणी।

क्रियाशक्तीति। क्रियाशक्तिसमष्टीत्यर्थः। सूत्रं-सर्वशरीरावच्छिन्नक्रियाजनकत्वेन सूत्रवदनस्यूतम्। कार्यत्वादिति। सोपाधिकस्येश्वरस्य सर्वकार्यजनकत्वात्कार्यं नेश्वरोपाधिरिति भावः। तानि अपञ्चीकृतानि च, तथाभूतानि—सूक्ष्माणि, शरीरं-स्थूलशरीरम्। अशक्नुवन्तीति शतृप्रत्ययान्तम्। स्थौल्याय-शरीरनिष्ठस्थौल्यप्रयोजकस्थौल्यं लब्धुम्। पञ्चीकरणस्वरूपमाह—तत्र चेत्यादि। तत्र—द्विधाकृतभागयोः, स्वभागं द्विधाकृतभागयोश्चतुर्धात्वानापन्नमवशिष्टमेकम्। इतरेषामिति। आ-

(१) प्रत्यक्षादिक्रिया—इति पाठान्तरम्। छपुस्तके।

(२)—दीनामर्धभागप्रविष्टो य इतरेषामेकैको भागः सोऽष्टमः। आकाशादेर्भागचतुष्टयात्मकोऽर्धभाग इतरेषां भागचतुष्टयं चेत्यादिः पाठो घपुस्तके।

क्यादाकाशादिशब्दप्रयोगः। अत्र च 'त्रिवृतं त्रिवृतमे-
कैकां करवाणी'ति श्रुतेः 'त्रिवृत्कुर्वत उपदेशा'दिति
सूत्राच्च त्रयाणामेव मेलनप्रतीतेश्च त्रिवृत्करणमेव केचि-

न्यायरत्नावली।

ष्टमभागं प्रविष्टः इतरेषामेकैको भागः सोऽष्टमः। आकाशादेर्भा-
गचतुष्टयात्मकोऽर्धभागचतुष्टयं चेत्यष्टभागात्मकमेकैकं भूतं जात-
मिति भावः। आधिक्यात्-आकाशादिभागचतुष्टयस्याकाशादि-
शब्दवाच्ये प्रविष्टवाय्वादिभागापेक्षयाऽऽधिक्यात्। तथा च यत्रा-
काशस्यार्धं तत्रैवाकाशत्वजातिः, एवं यत्र वाय्वादेरर्धं तत्र
वायुत्वादिजातिरिति स्वीकारात् तद्वाचकाकाशादिपदस्य प्रयो-
ग इति भावः। त्रिवृतं-त्रिभागम्। पूर्ववत् त्रयाणां भूतानां द्विश
द्विधा विभागं कृत्वा स्वीयमर्धमितरार्धीयभागद्वयस्यैकैकेन संयोज्य
तेजआदिभूतं तदीयार्धेन इतरीयार्धयोर्भागद्वयेन च त्रिभागं कर-
वाणीत्यर्थः। केचित्-वाचस्पतिमिश्रकल्पतरुकारादयः। तदुक्तं

नारायणी।

काशादीनामर्धभागे प्रविष्टो य इतरेषामेकैको भागः सोष्टमस्तेनेत्यर्थः।
पञ्चीकरणात्-आकाशादीनामचतुष्टयात्मकोर्धभाग इतरेषां भागच-
तुष्टयं चेत्येकैकस्य पञ्चात्मकत्वसंपादनात्। आधिक्यात्-आकाशादि-
भागचतुष्टयस्याकाशादिशब्दवाच्ये प्रविष्टवाय्वादिभागापेक्षयाऽधिक-
त्वात्। तथा च यत्राकाशादेरर्धं तत्राकाशत्वादीनामङ्गीकारात् तत्रैव
तद्वाचकवाशादीनां प्रयोग इति भावः। अत्र-भूतेषु, त्रिवृत्तं-त्रिभागम्।
करवाणि-करोमि। (त्रिवृदिति)-'संज्ञा मूर्त्ति क्लृप्तिस्त्विति'सूत्रप्रथमदलम्।
अस्यार्थः-संज्ञा आदित्यादिनाम्, मूर्त्तिः रूपं सितासितादि, तयोः क्लृप्तिः
कल्पनं प्रकटीकरणं तु न जीवात् किन्तु त्रिवृत्कुर्वतः तेजोबन्नानि त्रिभागं
कुर्वतः परमेश्वरात्, कुतः? उपदेशात्-व्याकरवाणीत्युत्तमपुरुषनिर्देशा-
दित्यर्थः। त्रयाणां-तेजोबन्नानाम्। मेलनप्रतीतेः-परस्परवैशिष्ट्यविष-
यकप्रत्यक्षात्। त्रिवृत्करणमेवम्-भूतत्रयं प्रत्येकं द्विधा विभज्यते तत्रैकैको
भागः (पुनः) द्विधा विभज्यते तद्भागद्वयं स्वभागं विहायेतरभूतद्वयार्धभागे
प्रविशतीति स्वस्याद्वयात्मकेऽर्द्धभागे इतरयोर्द्वयोर्मेलनेन त्रिवृत्करणम्।

न्मन्यन्ते। ते वियदधिकरणन्यायेनैव निराकृताः। तथा हि तैत्तिरीयके 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः आकाशाद्वायुरि'त्यादिश्रुतेः छान्दोग्ये च त्रयाणां तेजोबन्नानां सृष्टिश्रवणेऽपि द्वयोरुपसंहारः। तेजः प्राथम्यपदार्थधर्मापेक्षया आकाशवायुपदार्थयो-

न्यायरत्नावली।

कल्पतरौ—

सम्प्रदायाध्वना पञ्चीकरणं यद्यपि स्थितम्।
तथापि युक्तिरूढत्वाद्वाचस्पतिमतं शुभम्॥

मते त्रिवृत्करणमिति शेषः। इत्यादिश्रुतेरित्यादिपदेन छान्दोग्यीयसप्तमाध्यायस्थस्य 'आत्मन आकाशः आत्मनो वायु'रित्यादिवाक्यस्य सङ्ग्रहः। छान्दोग्ये 'तत्तेजोऽसृजते'त्यादिषष्ठाध्यायस्थवाक्यं। द्वयोः—आकाशवाय्वोः। तेजःप्राथम्येत्यादि।

नारायणी।

केचित्—वाचस्पतिमिश्राः। तदुक्तं कल्पतरुकारैः—

सम्प्रदायाद्ध्वना पञ्चीकरणं यद्यपि स्थितम्।
तथापि युक्तिदुष्टत्वाद्वाचस्पतिमतं शुभमिति॥

(१)+इतिमतं त्रिवृत्करणपक्षः+। वियदिति। द्वितीयाध्यायतृतीयपादे वियतोऽनित्यत्वसमर्थकया 'न वियदश्रुते'रित्यादिसूत्ररचिताधिकरणयुक्त्येत्यर्थः। निराकरणमेव स्फुटयति—तथाहीति। इत्यादिश्रुतेरित्यादिपदात् छान्दोग्यीयसप्तमप्रपाठकस्थस्य 'आत्मन आकाश आकाशाद्वायुरि'त्यादिवाक्यस्य संग्रहः। छान्दोग्ये 'तत्तेजोऽसृजदि'त्यादिषष्ठप्रपाठकस्थवाक्ये द्वयोः आकाशवाय्वोः। प्राथम्येति। प्राथम्यरूपो यः पदार्थधर्मस्तदपेक्षया। यथा 'वेदं कृत्वा वेदिं करोती'ति श्रौतक्रमस्य बाधेन वेदवेदिकरणयोर्मध्ये 'क्षुत आचामेदि'ति स्मार्तमाचमनं विधीयते पदार्थधर्मक्रमापेक्षया पदार्थस्य बलवत्त्वात्तथा प्रथमोक्त्या लब्धस्य तेजसि प्राथम्यस्य बाधेनाकाशवाय्वोः सृष्टिबोधकवाक्ये उपसंहारः कल्प्यत इति भावः। उपसंहारे हेत्वन्तरमाह—छान्दोग्ये चेति। सर्वेति।

(१) +…+ चिह्नितः पाठो नास्ति कपुस्तके।

बलीयस्त्वात् छान्दोग्ये चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानादाकाशवाय्वोरचेतनयोर्ब्रह्मकार्यत्वस्यावश्यवाच्यत्वात् । तत्र पञ्चानामेव मेलनेऽप्यवयुत्यानुवादेन

न्यायरत्नावली ।

यथा वेदवेदिकरणयोर्मध्ये क्षुते जाते 'वेदं कृत्वा वेदिं करोती'ति श्रुतिबोधितस्यापि क्रमस्य बाधेन 'क्षुत आचामे'दिति शास्त्रबोधितमाचनमनुष्ठीयते । पदार्थधर्मक्रमापेक्षया पदार्थस्य बलवत्त्वात्, तथा प्रथमोक्तत्वेन लब्धस्य तेजसि प्राथम्यस्य न्यायेनाकाशवाय्वोस्सृष्टिबोधकवाक्यरूपोपसंहारः कल्प्यते इति भावः। उपसंहारे हेत्वन्तरमाह—छान्दोग्ये चैकेत्यादि । ब्रह्मकार्यत्वस्येति । अचेतनत्वेन ब्रह्मस्वरूपत्वासम्भवेन ब्रह्मकार्यत्वेनाकाशवाय्वोः ब्रह्मतादात्म्यं स्वीकृत्यैव ब्रह्मज्ञानेनाकाशवायुज्ञानमुपपाद्यमिति भावः । नन्वविद्यादेरनादित्वेऽपि ब्रह्मणि तादात्म्येन कल्पितत्वात्तादृशप्रतिज्ञोपपादनं कर्तव्यम् । तथाचाकाशवाय्वोरनादित्वमपि कुतो नोच्यते ? नचाविद्यादेरावरणत्वाद्युपपादनाय ब्रह्मणि तादात्म्येन कल्पितत्वं युक्तम्, तादात्म्यस्य क्वचित् स्वीकृतत्वेन तदन्यसम्बन्धकल्पने गौरवात्, अनुपपन्नत्वेन चाविद्यादेः कल्पितत्वात् नाद्वैतविरोधित्वम्, वाय्वाकाशयोस्तु ब्रह्मतादात्म्ये न मानमिति वाच्यम् । दृश्यत्वाद्यन्यथानुपपत्त्या तयोरपि तथात्वस्यौचित्यात् । अत्रोच्यते—उक्तरीत्या तयो-

नारायणी ।

'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि'ति सर्वविज्ञाननिर्देशात् । ब्रह्मकार्यत्वस्येति । अचेतनत्वेन ब्रह्मस्वरूपत्वासम्भवात् ब्रह्मकार्यत्वेनाकाशवाय्वोर्ब्रह्मतादात्म्यं स्वीकृत्यैव ब्रह्मज्ञानेनाकाशवाय्वोर्ज्ञानमुपपाद्यमिति भावः । अवयुत्यनुवादेन—समुदायादेकदेशस्य पृथगुक्त्या, पञ्चीकरणस्य न्यायसिद्धस्य त्रिवृत्करणरूपैकदेशोक्त्येति यावत् । त्रिवृत्करणोपपत्तेः 'त्रिवृतं त्रिवृतमेकैकां करवाणीति' त्रिवृत्करणस्योक्तिसहत्वादित्यर्थः । नन्वब्भक्षो वायुभक्ष इत्यादिवत्सावधारणेयमुक्तिस्त-

त्रिवृत्करणोपपत्तिः। त्रिवृतमेवेति मतकल्पनायां वाक्यभेदप्रसङ्गः। 'त्रिवृत्कुर्वत उपदेशा'दिति सूत्रं त्वनुवादकत्वान्न पञ्चीकरणं न्यायासिद्धं बाधितुमुत्सहते। मेलनप्रतीतिश्च शरीरादौ पञ्चानामविशिष्टैव

न्यायरत्नावली।

मिथ्यात्वे सिद्धे तैत्तिरीयश्रुत्यबाधाय उत्पत्तिकल्पनं युक्तमेव। ब्रह्मणि कल्पितयोर्ब्रह्मज्ञाननाश्यत्वस्यावश्यकत्वेन तार्किकादिस्वीकृताविनाशित्वादेस्त्याज्यत्वादिति भावः। अवयुत्यानुवादेन–पञ्चीकरणस्य न्यायासिद्धस्यैकदेशोक्तित्वेन, उपपत्तिः–कथनोपपत्तिः। ननु 'अब्भक्षो वायुभक्ष' इत्यादिवत् सावधारणेयमुक्तिः, तथा च त्रिवृतमेव, न पञ्चीकृतमित्यर्थः तत्राह—त्रिवृतमेवेति। वाक्यभेदः 'त्रिवृतं करवाणि, पञ्चीकृतं न करवाणी'त्यर्थद्वयभेदेन तद्बोधकवाक्यभेदः स्यादित्यर्थः। न्यायमेवाह–मेलनप्रतीतिरिति। मेलनविषयिका धीः पृथिव्यादौ प्रत्यक्षरूपा यथास्ति, तथा वायोरपि शीतस्पर्शयुक्तजलविशिष्टतया उष्णस्पर्शविशिष्टतेजोविशिष्टतया सुरभिपार्थिवादिभागविशिष्टतया च धीरस्ति। तथाकाशस्यापि तेजःपार्थिवादिभागविशिष्टतया चाक्षुषादिरूपा साक्षिरूपा वा धीरस्ति। तथा च वाय्वाकाशयोरितरभूतसंसृष्टत्वस्यावर्जनीयतया पञ्चीकरणमेव भूतानां व्यवहार्यत्वे

नारायणी।

थाच त्रिवृत्करणमेव न पञ्चीकरणमित्यर्थः तत्राह—त्रिवृतमेवेति। सावधारणकल्पनायामित्यर्थः। वाक्यभेदप्रसङ्गः—'त्रिवृतं करवाणि, पञ्चीकृतं न करवाणीत्यर्थद्वयभेदेन तद्बोधकवाक्यभेदः स्यादित्यर्थः। अनुवादकत्वात्–श्रुत्युदितार्थनिर्देशरूपत्वात्। न्यायसिद्धं श्रुत्यनुकूलतर्कसिद्धम्। श्रुतिमानागोचरत्वशङ्कां परिहृत्य प्रत्यक्षागोचरत्वशङ्कां परिहरति—मेलनेति। मेलनविषयकप्रतीतिः साक्षिरूपा चाक्षुषादिरूपा वेत्यर्थः। अविशिष्टैव–तुल्यैव पृथीव्यां जलतेजसोरिव तयोः पृथिव्या इवान्वयधीवद्वाय्वाकाशयोरपि पृथिवीजलतेजोभिः सह परस्परमन्व-

'पञ्चीकृतपञ्चमहाभूतानी'ति च भाष्यकारवचनम्। तस्मादलमनेनानात्मचिन्तनेनेति दिक्। तानि च पञ्चीकृतानि पञ्च महाभूतानि मूर्ताख्यानि मिलित्वैकं कार्यमिन्द्रियाणामधिष्ठानं भोगायतनमुत्पादयन्ति । तदेव शरी-

न्यायरत्नावली।

प्रयोजकम्, नार्धजरतीयं त्रिवृत्करणम्। किञ्च 'यदग्ने रोहितं रूपमि'इत्यादिनाऽग्न्यादेस्तेजआदिभूतत्रयरूपत्वमुक्त्वा 'यदविज्ञातमिवाभूदित्येतासामेव देवतानां समास'इति श्रुत्या भूतमात्रस्यैव तेजआदिभूतत्रयरूपत्वमुक्तम्। यद्भूतत्रयवत्त्वेन पूर्वोक्तेन नोपलभ्यते वाय्वादिकं तदेतासां तेजआदिस्वरूपाणां देवतानां समासस्समुदाय एवेति तच्छ्रुतेरर्थः। तथा च यद्योगप्राथम्येन यद्यत् रूपत्रयवत्त्वेनाप्रत्यक्षं तत् सर्वं तेजआदित्रयसमुदाय एवेत्यर्थलाभात् श्रुत्यैवाकाशादेस्तेजआदिभागघटितत्वोक्तेः कथं पञ्चीकरणे विवादः। न चैवकारेण तेजआदित्रयमात्रात्मकं बोध्यत इति वाच्यम्। वाय्वाकाशादेरप्यविज्ञातपदार्थत्वेन कात्स्न्र्यबोधकयद्योगप्राथम्येन तत्रापि त्रयमात्रात्मकत्वस्य बोध्यत्वेन बाधादेवकारस्यायोगव्यवच्छेदकत्वनिर्णयात्। वचनमिति। पञ्चीकरणनामकग्रन्थस्थमिति शेषः। अधिष्ठानं संयोगसम्बन्धेनाश्रयः। तदेव शरीरमिति। 'त्वगिन्द्रियस्य साक्षादाश्रयश्शरी-

नारायणी।

यधीरस्त्येव, वायोर्गन्धवत्त्वेनाकाशस्य नीलरूपवत्त्वेन प्रतीतेरिति भावः। सिद्धान्तसिद्धत्वादपि पञ्चीकरणमावश्यकमित्याह—पञ्चीकृतेति। पञ्चीकरणनामकग्रन्थस्थमिति शेषः। श्रुतिमूलकोप्यनात्मविचारो न पूर्वपक्षसिद्धान्तैः समर्थयितुमाग्रहेण युक्तो व्यर्थत्वादित्यभिप्रेत्य झटिति प्रकृतविचारमुपसंहरति—तस्मादिति। लोकत एवावगतस्य श्रुतितर्काविषयत्वेन विफलत्वादित्यर्थः। प्रक्रान्तम्—पुनराह—तानि चेति। पञ्चीकृतानीत्यर्थ.। पञ्चभूतानि—बहिरन्द्रियैः शब्दस्पर्शरूपरसगन्धवत्तया गृहीतुं योग्यानि शान्तघोरमूढात्मकानि, मिलित्वा—यथायोग्यं

रमित्युच्यते । तत्र सत्त्वप्रधानं देवशरीरम् । रजःप्रधानं मनुष्यशरीरम्, तमःप्रधानं तिर्यगादिस्थावरान्तं शरीरम् । तस्य च शरीरस्य पाञ्चभौतिकस्यापि चित्ररूपस्येव क्वचित् न्यूनाधिकभावो भूतानां न विरुध्यते । एवं विषया अपि पञ्चीकृतैकैकभूतजन्याश्चतु-

न्यायरत्नावली ।

रमि' ति विवरणोक्तलक्षणात् । तिर्यगादि—पश्वादि । चित्रेत्यादि । यथा नीलपीतादिनानारूपसमुदायरूपस्य चित्ररूपस्य मध्ये कस्यचिद्रूपस्य रूपान्तरावच्छेदकावयवपरिमाणापेक्षयाधिकपरिमाणावयवावच्छिन्नत्वरूपमाधिक्यं तथा मनुष्यादिशरीरे भूतान्तरापेक्षया पार्थिवभागस्याधिक्यम्, देवादिशरीरे तेजोभागाधिक्यम्, वरुणादिलोकस्थशरीरे जलीयादिभागाधिक्यमित्यर्थः । पृथिव्यादेः सचराचरपृथिव्यादिहेतुत्वमित्याह—एकैकभूतेति । चतुर्दशभुवनेत्यादि । घनोदकाख्यमहाजलराशिमध्ये ऊर्ध्वाधोभावापन्नं संयुक्तं महाकटाहद्वयं तिष्ठति, तन्मध्येऽपि जलराशिः, तदुपरि महानौरिव पञ्चाशत्कोटिविस्तीर्णा महापृथिवी सप्ततिसहस्रयोजनोन्नता, तस्या दशदशयोजनसहस्रपरिमितभागेभ्यो-

नारायणी ।

गुणप्रधानभावेनैकत्रीभूय, अधिष्ठानं—संयोगसम्बन्धेनाश्रयः । तदेव—इन्द्रियाणामाश्रय एव, ( शरीरमिति ) 'त्वगिन्द्रियस्य साक्षादाश्रयः शरीरमि'ति विवरणोक्तलक्षणात्, तिर्यगादि—पश्वादि । चित्ररूपस्येवेति । यथा नोलपीतादिनाना( रूप )समुदायस्य मध्ये कस्यचिद्रूपस्य रूपान्तरविच्छेदकावयवपरिमाणापेक्षयाधिकपरिमाणावयवावच्छिन्नत्वरूपाधिक्यं तथा मनुष्यादिशरीरे पार्थिवभागस्याधिक्यं देवशरीरे तेजोभागस्य वरुणलोकस्थशरीरे जलभागस्याधिक्यमित्यर्थः । पृथिव्यादेः सचराचरपृथिव्यादिहेतुत्वमाह—एकैकशरीरभूतेति । चतुर्दशभुवनेत्यादि । घनोदकाख्यमहाजलराशिमध्ये ऊर्ध्वाधोभावापन्नं संयुक्तकटाहद्वयमस्ति तन्मध्येऽपि जल-

दशभुवनाख्या ऊर्ध्वमध्याधोभावेन सत्त्वरजस्तमोंश- प्रधानाः। एतत्सर्वं ब्रह्माण्डाख्यं विराडिति मूर्तमिति

न्यायरत्नावली।

ऽधस्तात् एकैकं पातालम्। इत्थं सप्त पातालानि स्वर्लोकादपि रम्याणि। तानि सप्त भुवनानि। तस्या उपरि पादगम्यः सर्वो लोकः भूर्लोकः, (१)तदुपरि भुवः स्वः महः जनः तपस्सत्यमि- ति षड् भुवनानि। तान्येतानि चतुर्दशभुवनानि संयुक्तकटाहद्व- यमध्यस्थानि। कटाहद्वयस्योर्ध्वमपि घनोदकाख्यं महाजलमस्ति। तदेव त्रिविक्रमाख्यविष्णुचरणसरोजाङ्गुष्ठतलनिर्भेदाधीनाछिद्रद्वारा कटाहान्तःप्रविष्टं शिशुमारचक्रसुमेर्वादिपतनद्वारा हिमालयमव- तीर्णं गङ्गारूपेण त्रिलोकीं पावयतीति भावः। ऊर्ध्वेत्यादि।

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।

नारायणी।

राशिस्तदुपरि महानौरिव पञ्चाशत्कोटियोजनविस्तीर्णा महापृथिवी सप्ततिसहस्रयोजनोन्नता तस्या दशदशसहस्रयोजनपरिमितभागेभ्यो- ऽधस्तादेकैकं पातालम्। इत्थमतलवितलसुतलरसातलतलातलमहातल- पातालभेदेन सप्त पातालानि स्वर्लोकादपि रम्याणि। तस्या उपरि पाद- गम्यो देशो भूर्लोकः, तदुपरि भुवः स्वर्महर्जनः तपः सत्यमिति षड्भु- वनानि। तान्येतानि चतुर्दशभुवनानि संयुक्तकटाहद्वयमध्यस्थानि। कटाहद्वयस्योर्ध्वमपि घनोदकाख्यो महाजलराशिरस्ति स एव त्रिवि- क्रमाख्यविष्णुचरणसरोजाङ्गुष्ठतलनिर्भिन्नछिद्रद्वारा कटाहान्तःप्रविष्टः शिशुमारचक्रसुमेर्वादिपतनद्वारा हिमालयमवतीर्णो गङ्गारूपेण त्रिलोकीं पावयतीति भावः। ऊर्ध्वेत्यादि।

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः॥

इतिभगवद्वाक्येन ऊर्ध्वादिलोकानां सात्त्विकादिपुरुषप्राप्यत्वोक्तेः सत्त्वादिप्रधाना इत्यर्थः। तर्कबलेन नैयायिकसाधितसृष्टिक्रमस्याप्रा- माणिकत्वं ज्ञापयिष्यन्स्वोक्तसृष्टिक्रमस्य प्रामाणिकत्वमाह—अयमिति।

(१) तदुपरि भुवर्लोकः। तदुपरि स्वः''' इति षड् भुवनानीति पाठ उपलब्धोऽपि प्रत्य- क्षमशुद्धः, भुवर्लोकादन्येषां षण्णां भुवनानामभावादिति शोधतोऽस्माभिरिति बोध्यम्।

चोच्यते। अथ औपनिषदः सृष्टिक्रमः। तद्विपरीतो लयक्रमः। मूर्तं पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं विराडाख्यं पृथिव्याद्येकैकभूतलयेनामूर्तं अपञ्चीकृतपञ्चमहाभूतात्मके हिरण्यगर्भाख्ये स्वकारणे लीयते। स एव दैनन्दिनः प्रलयः। अमूर्तं चाव्याकृते परमेश्वरो-

न्यायरत्नावली।

इत्यादिस्मृत्या ऊर्ध्वलोकानां सात्त्विकादिपुरुषप्राप्यत्वोक्तेः सत्त्वादिप्रधानतेति भावः। तद्विपरीत इति। 'विपर्ययेण तु क्रमोऽत उपपद्यते चे'ति न्यायात्। पृथिव्यादीत्यादि। पृथिव्या जले, तस्य तेजसि, तस्य वायौ, तस्याकाशे, तस्यापञ्चीकृतभूतेषु लयेनेत्यर्थः। दैनन्दिनेति। सङ्कर्षणमुखानलेन भूर्भुवस्स्वारूपलोकत्रयदाहे सति तत्तापक्रान्त्या महर्लोकस्थेषु जनलोकं गतेषु हिरण्यगर्भस्य सत्यलोकस्थस्य रात्रिर्भवतीति दैनन्दिनप्रलयः। तत्र महर्लोकस्य तापितत्वेन निर्जनत्वेऽप्यनाशात् जनलोकादौ च तापितत्वस्याभावात् न विराजस्सम्पूर्णस्य लयो दैनन्दिनप्रलये, किन्तु चतुर्दशभुवनैकदेशावच्छिन्नस्येति बोध्यम्। उपाधाविति अत्र लीयत इत्यनुषज्यते। तल्लक्षणादिति। तथा च प्रलयबोधकश्रुतिस्मृतीनां स्वपरिणामिकारणे संस्काररूपेण कार्याणामवस्थानरूपस्य प्रलयस्य बोधकत्वादव्याकृतस्य तदसम्भवात् तत्प्रलये मानाभावः। अत एव—

नारायणी।

प्रतिपादितः सृष्टिक्रम उपनिषत्प्रमाणक इत्यर्थः। तथाच तत्तद्बाह्यस्यु-पगतः सृष्टिक्रमोऽप्रामाणिकोऽश्रौतत्वादिति भावः। तदिति। सृष्टिक्रम-विपरीत इत्यर्थः। 'विपर्ययेण तु क्रमोऽत उपपद्यते चे'ति न्यायादिति भावः। पृथिव्यादीति। पृथिव्या जले तस्य तेजसि तस्य वायौ तस्याकाशे तस्यापञ्चीकृतभूतेषु लयेनेत्यर्थः। दैनन्दिनः—ब्रह्मणो दिवसावसाननिमित्त इत्यर्थः। सङ्कर्षणमुखानलेन भूर्भुवःस्वर्लोकानां दाहे सति तत्तापेन महर्लोकस्थेषु जनलोकं गतेषु हिरण्यगर्भस्य सत्यलोकस्थस्य रात्रि-

पाधौ। अव्याकृतस्य त्वनादित्वेन कारणाभावान्न लयः। स्वकारणे सूक्ष्मरूपेणावस्थानं लय इति तल्लक्षणात्। अयमेव प्राकृतः प्रलयः। ब्रह्मज्ञानादात्यन्तिक उच्छेदस्त्वात्यन्तिकः प्रलयः। स च कारणक्रमेणैव। कारणोच्छेदादेव

न्यायरत्नावली।

अव्याकृतं परे तत्त्वे लीयते सकलाश्रये।
.......................अव्यक्तं परमात्मनि॥

इत्यादिवाक्यानां परिणामशून्यतयावस्थानरूपभाक्तलयबोधकत्वम्। मुख्यलयबोधकत्वे 'तद्धेदं तर्ह्यव्याकृतमासीत्' 'नासदासीन्नोसदासीत्तम आसी'दित्यादिश्रुतिभिरव्याकृतरूपेण जगतः प्रलयकाले सत्त्वाभिधानानुपपत्तेः। प्राकृत इति। दैनन्दिनस्तु न प्राकृतः। प्रकृतौ संस्काररूपेणावस्थानस्यैव प्राकृतशब्दार्थत्वात्। दैनन्दिनस्तु न संस्काररूपेण पृथिव्यादेरवस्थानम्। शतवर्षीयानावृष्ट्यादिना पृथिव्यादेः शुष्कगोमयपिण्डाकारत्वादेः पुराणादिषूक्तत्वात्। किन्तूक्तपिण्डादिरूपेणैव हिरण्यगर्भेऽवस्थानम्। अत एव दैनन्दिनप्रलयसाधारणवाक्ये सूक्ष्मरूपेणेति मूले उक्तम्, न तु संस्काररूपेण। परमसूक्ष्मरूपं हि संस्कारः, न तु सूक्ष्मरूपमात्रमिति भावः। कारणक्रमेणैवेति।

नारायणी।

भवतीति दैनन्दिनप्रलय इत्युच्यते, तत्र महर्लोकस्य तप्तत्वेन निर्जनस्याप्यनाशात् जनलोकादौ तापस्याप्यभावाद्विराजः संपूर्णस्य न लयो दैनन्दिनप्रलये, किन्तु चतुर्दशभुवनैकदेशावच्छिन्नस्येति ज्ञेयम्। उपाधावित्यत्र लीयते इत्यनुषज्यते। लयव्यवस्था जन्येष्वेव नाव्याकृत इत्याह-अव्याकृतस्येति। सूक्ष्मरूपेण-संस्काररूपेण, तल्लक्षणात्-लयस्य लक्षणात्। प्राकृतः-प्रकृतौ भवः प्राकृतः मायायां संस्काररूपेणावस्थितिरूप इति यावत्। ब्रह्मज्ञानात्-निरुक्ताखण्डाकारवृत्तेः। आत्यन्तिकः-मूलाविद्यारहितः, उच्छेदः-नाशो वर्णितप्रकारः। कारणक्रमेणेति। आदौ मूलाविद्यारूपकारणोच्छेदः पश्चात्तत्कल्पितकार्यस्येत्यर्थः। ननु भवन्मते

कार्योच्छेदात्। सर्वं च सृष्टिप्रलयादिकं स्वप्नसृष्टिप्रलयवद्-पारमार्थिकमपि वासनादार्ढ्याद्व्यवहारक्षममिति न मा-

न्यायरत्नावली।

आदौ कारणस्योच्छेदः। पश्चात् कार्यस्येत्यर्थः। वस्तुतस्तु कार्योच्छेदस्य पूर्वभावित्वनिरासे तात्पर्यम्। तथा च कार्यं प्रथमतो नोच्छिद्यते, किन्तु युगपदेवाज्ञानतत्प्रयुक्तोच्छेद इत्यर्थः। उच्छेदादेवेति पञ्चमी ज्ञापकहेतौ 'धूमादग्निमानि'तिवत्। न च कार्योच्छेदं प्रति कारणोच्छेदस्य हेतुत्वात् कथमेवमिति वाच्यम्। उच्छेदस्य सिद्धान्ते जन्यत्वास्वीकारादेरुक्तत्वात्। 'या या प्रमा सा सा स्वसमानविषयकाज्ञानतत्प्रयुक्तविशिष्टकालपूर्वत्वशून्यकालवृत्ति'रिति नियमेन युगपदुच्छेदस्य युक्तत्वात्, अज्ञानसम्बन्धाध्यनादिदृश्योच्छेदस्य अज्ञानोच्छेदसमकालत्वावश्यकत्वेनाज्ञानप्रयुक्तमात्रोच्छेदस्यैवाज्ञानोच्छेदसमकालतायां युक्तत्वाच्च। ज्ञानस्याज्ञाननाशकत्वेऽपि न क्षतिः। अज्ञानोच्छेदस्य सर्वदृश्योच्छेदव्यापकत्वेऽपि अज्ञाननाशस्य (१)सर्वदृश्यनाशाव्याप्यत्वात्। वासनेति। सत्यत्ववासनेत्यर्थः। व्यवहारक्षममिति-मिथ्यात्वज्ञानात्पूर्वमूर्ध्वं वा तत्त्वसाक्षात्कारात्पूर्वं निष्कम्पप्रवृत्त्यादिक्षमम्, तत्त्वे साक्षात्कृते तु नैव (२)प्रवृत्त्यादिकम्, बलवत्तरक-

नारायणी।

दृश्यत्वेन मिथ्याभूतमिदं कथं निरूपणार्हमित्याशङ्क्य न खपुष्पादिवदलीकं किन्तु सदसद्विलक्षणमतोऽर्थक्रियाकारित्वान्निरूपणार्हं भवत्येवेत्यभिप्रेत्याह—सर्वं चेति। वासनेति। सत्यत्ववासनेत्यर्थः। व्यवहारक्षमम्—अर्थक्रियाकारीत्यर्थः। मायिकत्वेऽपि-तत्त्वदृष्टिकालीनाभावप्रतियोगिमायाविलासत्वेऽपि, तुच्छत्वप्रसङ्गः—खपुष्पादिवदलीकत्वप्रसङ्गः। सर्वदेशकालवृत्त्यभावप्रतियोगित्वरूपमिथ्यात्वा(३)विशेषेऽपि

(१) सर्वदृश्यनाशोत्पत्त्यव्याप्यत्वादिति गपुस्तके पाठः।

(२) प्रवृत्त्यादिबलवत्तरकर्मवशात् सकम्पं तत् इति घपुस्तके। युक्तमिदम्।

(३)—मिथ्यात्वविशेषेपि सत्त्वेन प्रतीयमानत्वादेर्विशेषादिति भावः इति खपुस्तके।

गिकत्वेऽपि तुच्छत्वप्रसङ्गः । यथा चैतत्तथा व्यक्तमाकरे । एवं स्थिते जागरणादिव्यवस्थोच्यते । इन्द्रियवृत्तिकालीनार्थोपलम्भो जागरणम् । तत्र च मूर्तं विराडाख्यं भोग्यं प्रत्यक्षादिप्रमाणषट्केन व्यवह्रियमाणमेवशात् सकम्पम् । तदुक्तम्—

न्यायरत्नावली ।

'शास्त्रेण नश्येत्परमार्थबुद्धिः कार्यक्षमं नश्यति चापरोक्षात्।' इति । व्यक्तमाकर इति । उक्तं हि भाष्यादौ—'ननु भवन्मते जगतोऽसत्त्वेन तुच्छत्वमिति चेत्, क एवमाह जगत्तुच्छमिति। आविद्यकत्वात् सदसद्विलक्षणमित्यस्मद्दर्शनम् । अथ पुनर्विद्योदये तुच्छमुच्यते ! काममुच्यताम्, न त्वेतावता तत्पूर्वव्यवहारस्यानुपपत्ति' रिति । इन्द्रियवृत्तीति । स्वसमानाधिकरणा या इन्द्रियजन्यवृत्तयः, तत्कालीनोऽर्थोपलम्भ इत्यर्थः । स्वपदमर्थोपलम्भपरम् । यदि च जागरे सर्वदा इन्द्रियवृत्तौ न प्रमाणम्, कदाचिदनुमित्यादेरेव सम्भवात्, तदेन्द्रिय(वृत्ति)पदं प्रमापरं बोध्यम्। प्रमाणषट्केन—अज्ञाताबाधितविषयकधीरूपप्रमित्यादिषट्केन ।

नारायणी ।

सत्त्वेन प्रतीयमानाप्रतीयमानत्वादेर्विशेषादिति भावः । व्यक्तमिति। उक्तं हि भाष्यादौ "ननु भवन्मते जगतोऽसत्त्वेन तुच्छत्वमिति चेत् ! क एवमाह जगत्तुच्छमिति । किन्त्वाविद्यकत्वाच्छुक्तिरजतादिवत्सदसद्विलक्षणमित्याह । 'इन्द्रियैरर्थोपलब्धिर्जागरणमि'ति पञ्चीकरणग्रन्थे भाष्यकारवचनम्, तत्र जन्यत्वस्य तृतीयार्थत्वे साक्षिमात्रभास्याकाशशुक्तिरजतादिज्ञानानां जागरणानापत्तेरतस्तत्रेन्द्रियवृत्तिकालीनत्वमेवार्थ इत्यभिप्रेत्य तथैव लक्षणमाह—इन्द्रियेति । स्वसमानाधिकरणा या इन्द्रियाणां वृत्तिस्तत्कालीनोऽर्थोपलम्भ इत्यर्थः। स्वपदमुपलम्भपरम्, उपलम्भः साक्षिरूपः । तावन्मात्रं जागरणमित्युक्ते स्वप्नादेरपि जागरणत्वापत्तिरत उक्तं-(१)स्वसमानाधिकरणेति । प्रमाण-

(१) उक्तम्-इन्द्रियवृत्तिकालीनेति । तन्निवेशेऽपि तत्पुरुषीयस्वप्नस्य पुरुषान्तरीयेन्द्रियवृत्तिकालीनत्वाज्जागरणापत्तिरत उक्तं-स्वसमानेति । इति खपुस्तके पाठः ।

त्वाद्व्यावहारिकं विश्वाख्येन जीवेनोपभुज्यते। स च देहेन्द्रियादिषु प्रवेशात् व्यापनाद्वा विश्व इत्युच्यते। विश प्रवेशने विषॢ व्याप्ताविति च स्मरणात्। अत्र यद्यपि विश्वेनामूर्तमव्याकृतं चानुमानादिनानुभूयते, तथापि व्यावहारिकं सर्वं विश्वेनैव ज्ञायत इति

न्यायरत्नावली।

प्रत्यक्षानुमानशब्दानामिवोपमानार्थापत्त्यनुपलब्धीनामपि पृथगेव प्रमाणत्वम्। गोसादृश्याविशिष्टगवयादिप्रत्यक्षोत्तरं 'स गौरेतद्गवयसदृश' इति ज्ञानस्य मानान्तरानवतारकालीनस्योपमानमात्राधीनत्वात्, व्यतिरेकव्याप्तिज्ञानजन्यज्ञानस्यानुमितित्वे मानाभावात्, अर्थापत्तित्वस्यैवान्वयव्याप्तिज्ञानजन्यज्ञाने स्वीकारेणानुमितित्वलोपापत्तेश्च, अर्थापत्तिप्रमाणस्यान्यस्यावश्यकत्वात्, प्रतियोग्यनुपलब्धिजन्याया अभावप्रमाया इन्द्रियसन्निकर्षादिजन्यत्वे मानाभावेनानुपलब्धित्वजात्याश्रयतादृशप्रमाकरणत्वस्यानुपलब्धावेवोचितत्वात्। व्यावहारिकमिति। अज्ञातविषयकधीविषयत्वेनाज्ञातत्वात् ब्रह्मज्ञानात् पूर्वमबाध्यत्वाच्च प्रातीतिकान्यदृश्यत्वेन व्यावहारिकमिति भावः। अमूर्तं—स्वाप्नं वस्तु। अव्याकृतं—सौषुप्तम्। व्यावहारिकं—व्यावहारिकप्रमाणग्राह्यम्। अवस्थान्तरव्यापकत्वम्—अवस्थान्तरभोक्तृतैजसादिवाचिपदवाच्य-

नारायणी।

ट्केति। प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिरूपप्रमाणषट्केन। व्यतिरेकव्याप्तिजन्यज्ञानस्यानुमितित्वे मानाभावादर्थापत्तेः प्रतियोग्यनुपलब्धिजन्याया अभावप्रमाया इन्द्रियसन्निकर्षजन्यत्वे मानाभावादनुपलब्धेश्च पृथगेव प्रमाणत्वमिति भावः। व्यावहारिकम्—आत्मज्ञानातिरिक्तज्ञानाबाध्यत्वे सत्यात्मज्ञानबाध्यम्। स च—मूर्तभोक्ता जीवः। प्रवेशात्—सच्छिद्रान्तर्भावात्, व्यापनात्—सर्वमूर्तसंयोगित्वात्, विष्लृ व्याप्ताविति पृषोदरादित्वेन मूर्धन्यस्य षस्य तालव्यशत्वादिति भावः। अमूर्तं—स्वाप्नं वस्तु. अव्याकृतं-सौषुप्तम्। व्यावहारिकं—व्यवहारक्षममर्थक्रिया-

नियमात् स्थूलशरीरोपाध्यभिमानित्वाच्च न तस्याव-स्थान्तरव्यापकत्वम् । शुक्तिरजतादिज्ञानानामप्रामाणिकत्वात्तद्विषयस्याव्यावहारिकत्वेऽपि इन्द्रियव्यापारकालीनत्वाज्जागरणत्वोपपत्तिः । ज्ञानोत्पत्त्यादिप्रक्रिया चाधस्तादुक्तैव । एवं जाग्रद्भोगजनककर्मक्षये स्वाप्नभोग-

न्यायरत्नावली ।

त्वम् । तथा च जाग्रदवस्था येनैवानुभूयते तस्यैव विश्वश-ब्दवाच्यतेति भावः । स्वप्नो येनैवानुभूयते स एव तैजस इत्या-देर्वक्तुमशक्यत्वेन वैरूप्यापत्तेराह—स्थूलशरीरोपाध्यभिमा-नित्वाच्चेति । स्थूलशरीरघटितोपाध्यभिमानिवाचकपदवाच्य-त्वाच्चेत्यर्थः । तथा चोपाधित्रयाभिमानी विश्वशब्दस्य, द्व्युपा-ध्यभिमानी तैजसशब्दस्य, एकमात्राभिमानी प्राज्ञशब्दस्य वाच्य इति भावः । अप्रामाणिकत्वात्—अज्ञाताविषयत्वात् । इन्द्रिय-व्यापारेति । व्यावहारिकाविषयक(१)बहिरिन्द्रियजन्यमनोवृत्ती-त्यर्थः । कालीनत्वादिति । ज्ञानानां कालीनत्वाज्जागरणत्वो-पपत्तिरिति योजना । तथा च शुक्तिरूप्यादिज्ञानाव्याप्तिः इन्द्रि-यजन्यवृत्तित्वमात्रं न जागरणलक्षणमिति भावः । कर्मोदये-कर्म-

नारायणी ।

कारितायोग्यम् । स्थूलशरीरेति । व्यावहारिकस्थूलशरीर इत्यर्थः । अवस्थेति । अवस्थान्तरभोक्तृतैजसादिपदवाच्यत्वं तथाच जाग्रदवस्था येनैवानुभूयते स एव विश्वपदवाच्य इत्यर्थः । इन्द्रियजन्यं ज्ञानं जागरणमिति विहायेन्द्रियवृत्तिकालीनेत्युक्तेरभिप्रायं स्व-यमेव प्रकटयति—शुक्तीति । अप्रामाणिकत्वात्—अज्ञाताविषय-कत्वात् । अव्यावहारिकत्वेऽपि—स्वोचितार्थक्रियाकारित्वाक्षमत्वेऽपि । इन्द्रियव्यापारकालीनत्वात्—विषयेन्द्रियसंप्रयोगकालीनत्वात् । स्व-प्नावस्थां निरूपयितुमुपक्रमते—एवमिति । कर्मोदये—कर्मणः सहकारिसमवधाने, निद्राख्यया—'अभावप्रत्ययालम्बना वृत्ति-

(१)—विषयकप्रत्यक्षादिप्रमाणजन्येति घपुस्तके ।

जनककर्मोदये च सति निद्राख्यया तामस्या वृत्त्या स्थूलदेहाभिमाने दूरीकृते सर्वेन्द्रियेषु देवतानुग्रहाभावान्निर्व्यापारतया लीनेषु विश्वोऽपि लीन इत्युच्यते। तदा च स्वप्नावस्था। तत्र चान्तःकरणगतवासनानिमित्त इन्द्रियवृत्त्यभावकालीनोऽर्थोपलम्भः स्वप्नः। तत्र मन एव गजतुरगाद्यर्थाकारेण विवर्तते, अविद्यावृत्त्या

न्यायरत्नावली।

रूपसहकारिसमवधाने। तामस्येति। तमोगुणविषयिकयेत्यर्थः। दूरीकृत इति। 'अभावप्रत्ययालम्बना वृत्तिर्निद्रे'ति पातञ्जलसूत्रेण व्यावहारिकविषयकवृत्त्युपरमोपहिततमोगुणविषयकवृत्तेर्निद्रात्वोक्त्या देहाभिमानरूपवृत्तेर्निद्रया दूरीकरणम्। व्यावहारिकाकारवृत्त्यभावस्य प्रत्ययः प्रयोजकः उद्रिक्ततमोगुणः तद्विषयिका वृत्तिर्निद्रेति सूत्रार्थः। इन्द्रियेष्विति। जाग्रद्भोगप्रदकर्माभावप्रयुक्तादिति शेषः। इन्द्रियेति। बाह्येन्द्रियजन्येत्यर्थः। विवर्तते—परिणमते। सर्वत्र—प्रातिभासिकाध्यासस्थले

नारायणी।

निद्रे'तिसूत्रलक्षितया, तामस्या—तमोगुणप्रधानया, स्थूलदेहाभिमाने—तदुपलक्षितव्याहारिकसामान्यविषयकाभिमाने, दूरीकृते—उपरमिते। सर्वेति—दशसु ज्ञानकर्मेन्द्रियेषु। देवतेति। तत्तदिन्द्रियाधिष्ठातृदेवताप्रेरणाभावात् जाग्रद्भोगजनककर्मतिरोधानप्रयुक्तादिति शेषः। निर्व्यापारेति। स्वोचितव्यवहारसामान्याभावविशिष्टतयोपरतेषु भोगोपधायकवृत्त्यात्मत्वोपरमेण कारणात्मतां प्राप्तेष्विति यावत्। विश्वेति। स्थूलभोगोपधायकाभावेन भोगाभावात्तद्भोगभोक्ता विश्वपदाभिधेयो न भवति, तर्ह्येतत्सकलक्लृप्तसामग्र्यभावे भोग एव तत्र न स्यादित्याशङ्क्य तदुचितां तत्रत्यविशेषसामग्रीमाह—तत्रेति। तत्र—स्वप्नावस्थायां (१)मनोगतो यो जाग्रद्भोगजः संस्कारस्तद्धेतुकः। इन्द्रियेति—बाह्येन्द्रियव्यापाराभावकालीनेत्यर्थः। अर्थेति—वक्ष्यमाणरीत्या प्रातीतिकपदार्थोपलम्भः। तत्र—स्वप्ने। गजेति—गजतुरगाद्याकृतिविशिष्टपरिणा-

(१) अन्तःकरणवासनानिमित्तमनोगतो यो० इति खपुस्तके।

च ज्ञायत इति केचित्। अविद्यैव शुक्तिरजतादिवत् स्वप्नार्थाकारेण परिणमते ज्ञायते चाविद्यावृत्त्येत्यन्ये। कः पक्षः श्रेयान्? उत्तरः। अविद्याया एव सर्वत्रार्थाध्यासज्ञानाध्यासोपादानत्वेन क्लृप्तत्वान्मनोगतवासनानिमित्तत्वेन च क्वचिन्मनः परिणामत्वव्यपदेशात्। ननु तदा मनसो दृश्याकारपरिणामानभ्युपगमे द्रष्टृत्वसम्भवेनात्मनः स्वयंज्योतिष्ट्वसिद्धिरिति चेन्न।

न्यायरत्नावली।

सर्वत्र। क्वचित्-'सधीः स्वप्नो भूत्वे'त्यादिश्रुतौ। नन्वित्यादि। मनसः परिणामानभ्युपगमे मनसो द्रष्टृत्वसम्भावनेति योजना। दृष्टृत्वं-ग्राहकत्वम्। स्वयंज्योतिष्ट्वेति। 'अत्रायं पुरुषस्स्वयंज्योतिर्भवती'त्यादिश्रुत्युक्तस्वयंज्योतिष्ट्वेत्यर्थः। अत्र-स्वप्ने। स्वयंज्योतिरिति। आदित्यादिमनोवृत्तिपर्यन्तानां ज्योतिषामभा-

नारायणी।

मवद्भवति। अविद्यावृत्त्या-ज्ञानाख्याऽविद्यापरिणामेन ज्ञायते-विषयीक्रियते। शुक्तीति-शुक्तिरजताद्याकारेणैव। स्वाप्नेति। अध्यस्यत इत्यध्यासः अर्थश्चासावध्यासश्चेत्यर्थाध्यासः स्वाप्नश्चासावर्थाध्यासश्चेति स्वाप्नार्थाध्यासः, [(१)तदा-कृत्या सर्वत्र प्रातीतिकाध्यासस्थले] अर्थेति। अर्थरूपभ्रमज्ञानरूपभ्रमपरिणामित्वेन अविद्याया एवोपादानत्वानङ्गीकारे तस्यात्यन्तोच्छेदानापत्तेः, परिणामिनो मनसोऽविनाशात्, तथाच विशेषदर्शनोत्तरमपि कदाचित्प्रतीयेत! न च प्रतीयते, तस्मान्नाशान्यथानुपपत्त्याऽविद्यैव परिणामिनीति भावः। मनोगतेति। मनोगतवासनाहेतुकत्वेनैव। क्वचित्-'स हि स्वप्नो भूत्वेमं लोकमतिक्रामती'ति श्रुतौ। नन्वित्यादि। मनसः परिणामानभ्युपगमे मनसो द्रष्टृत्वसम्भवेनेति योजना। द्रष्टृत्वं-ग्राहकत्वम्। आत्मनः-साक्षिणः। स्वयमिति। 'अत्रायं पुरुषः स्वयंज्योतिर्भवतीति श्रुत्युक्तस्वयंप्रकाशत्वेत्यर्थः। अत्र-स्वप्ने, अयं पुरुषः जीवः, स्वयंज्योतिः-स्वयमेव व्यवहारसाधनज्योति-

(१) इदं तदा इति पदं मूलेऽस्मिन्वाक्ये कस्मिन्नपि पुस्तके नास्ति ततस्तस्य व्याख्या निरुपयोगिनी।

बहिरिन्द्रियजन्यवृत्त्यभावेन तदानीं मनसोऽग्राहकत्वात्, तत्सहकारेणैव तस्य ग्राहकत्वनियमात्, सवृत्तिकान्तःकरणावच्छिन्नस्यैव चैतन्यस्य प्रमातृत्वनियमात्, तदान्तःकरणसत्त्वेऽपि प्रमात्रभावः। किमधिष्ठानं स्वप्नाध्यासस्य? मनोवच्छिन्नं जीवचैतन्यमित्येके । मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमित्यपरे । किं श्रेयः? मतभेदेनोभयमपि । त-

न्यायरत्नावली ।

वेन स्वयमेवात्मा स्वीयव्यवहारसाधनरूपं ज्योतिरित्यर्थः। बहिरिन्द्रियजन्येति। प्रत्यक्षादिप्रमाणजन्येत्यर्थः। तत्सहेत्यादि । प्रत्यक्षादिप्रमाणजन्यमनोवृत्तावेव मनसः परिणामित्वमिति नियमादित्यर्थः । तथा चाहमित्याकारकवृत्तिरविद्यापरिणाम एवेति भावः । ननु तथापि स्वप्ने मनसस्सत्त्वे मनोविशिष्टचिद्रूपप्रमातृसत्त्वापत्तिः तत्राह—सवृत्तिकेत्यादि । प्रमानुकूलव्यापारवत्त्वं प्रमातृत्वं वृत्त्यसत्त्वे न सम्भवतीत्यर्थः । मूलाज्ञानाव-

नारायणी ।

भवतीत्यर्थः । बहिरिति । बहिरिन्द्रियसम्प्रयोगाभावेन इत्यर्थः । तदानीं स्वप्ने, अग्राहकत्वात्—ज्ञानजनकत्वाभावात् । तथाच प्रत्यक्षादिप्रमाणसहकारेणैवार्थग्राहकता नान्यथेति भावः । ननु नायं नियमः बाह्यप्रमाणसंयोगं विनाप्यात्ममानसस्य तार्किकादिभिरङ्गीकारात्तत्राह—तदिति । बहिरिन्द्रियसहकारेणैवेत्यर्थः । (१)प्रमाणान्तरसापेक्षस्य मनस आलोकादेरिव स्वतःप्रमाणत्वायोगात् नात्मनो मानसं किन्तु शाब्दमेवातो न तार्किकोक्तिः साध्वीति भावः । ननु तथापि मनसः सत्त्वे मनोनिष्ठस्य चिद्रूपस्य प्रमातुः सत्त्वप्रसङ्गस्तत्राह—सवृत्तिकेत्यादि । प्रमानुकूलव्यापारवत्त्वरूपं प्रमातृत्वं प्रथमश्लोके वर्णितं वृत्तिं विना न सम्भवतीति भावः । तदा-स्वप्ने । जाग्रत्यपि साक्षिण एव द्रष्टृत्वेऽपि प्रमाणजन्यवृत्त्यारोहेणविषयीकरणात्प्रमात्रादिभावोऽप्यस्ति स्वप्ने तु न तथेति विशेषः । मूलेति । मूलाज्ञानावृतत्वोपलक्षितं ब्रह्माधिष्ठानमित्यर्थः ।

(१) तस्य—मनसः ग्राहकत्वनियमात्—ज्ञानपारेणामित्वनियमादित्यर्थः । अयं पाठोधिकः खपुस्तके ।

था हि-जाग्रद्बोधेन स्वप्नभ्रमनिवृत्त्यभ्युपगमादधिष्ठानज्ञानादेव च भ्रमनिवृत्तेर्ब्रह्मचैतन्यस्य चाधिष्ठानत्वे संसारदशायां तज्ज्ञानाभावात्, ज्ञाने वा सर्वद्वैतनिवृत्तेर्न जाग्रद्बोधात्स्वप्ननिवृत्तिः स्यात्। 'स हि कर्ते'ति च जीवकर्तृत्वश्रुतेः आकाशादिप्रपञ्चवत् सर्वसाधारण्यापत्तेश्च

न्यायरत्नावली।

च्छिन्नं ब्रह्मचैतन्यमिति। मूलाज्ञानावृतं ब्रह्माधिष्ठानमित्यर्थः। यथाश्रुते अज्ञानावच्छिन्नब्रह्मणः सर्वद्वैताधिष्ठानत्वेनाग्रे(१) तज्ज्ञानात्तन्निवृत्त्युक्त्यसङ्गतेः। निवृत्त्यभ्युपगमात्-बाधाभ्युपगमात्। ब्रह्मचैतन्यस्येत्यादि। ब्रह्मचैतन्यस्य चाधिष्ठानत्वे जाग्रद्बोधात् स्वप्ननिवृत्तिर्न स्यादिति योजना। कर्तेति चेति चकारेण पूर्वोक्तस्य निवृत्तिर्न स्यादित्यस्य हेतुतया समुच्चयः। कर्तृत्वेति। तथा च सिद्धान्ते (२)*यस्मिन् कार्ये यः कर्ता स एवोपादानम्। घटादावपि कपालाकारनिर्गतमनोवृत्त्या कुलालादेः कपालाद्यवच्छिन्नचिद्रूपत्वसम्पत्त्या उपादानत्वमस्त्येवेति स्वप्ने ब्रह्मण

नारायणी।

यथाश्रुतेऽज्ञानावच्छिन्नब्रह्मणः सर्वद्वैतानधिष्ठानत्वेनाग्रे तज्ज्ञानात्तन्निवृत्त्युक्त्यसङ्गतेः। जाग्रद्बोधेन-प्रमाणवृत्तिकालीनापरोक्षज्ञानेन, निवृत्त्यभ्युपगमात्-बाधाभ्युपगमात्, अधिष्ठानज्ञानादेव-भ्रमकारणीभूताज्ञानविषयापरोक्षज्ञानादेव। ब्रह्मेत्यादि। ब्रह्मचैतन्यस्याधिष्ठानत्वे जाग्रद्बोधात्स्वप्ननिवृत्तिर्न स्यादिति योजना। (तत्रोपपत्तिमाह—) संसारेति। आध्यात्मिकप्रपञ्चावभासदशायाम्। तज्ज्ञानेति-मूलाज्ञानविषयत्वोपलक्षितब्रह्मज्ञानाभावात्। श्रवणादिनिदिध्यासनान्तव्यापारं विना तज्ज्ञानासम्भवादिति भावः। ज्ञाने वेति। स्वप्रकाशमाहात्म्यादिनेति शेषः। तथाच जाग्रत्स्वप्नादिव्यवस्थाप्रसङ्ग एवोच्छिद्येतेति भावः। स हीति। 'न तत्र

(१) सर्वद्वैताधिष्ठानत्वे जाग्रज्ज्ञानात्तन्निवृत्त्युक्त्यसङ्गतेरिति गपुस्तके।

(२) *विवर्तोपादानस्य कर्तृत्वनियमात् स हि कर्तेत्यत्र जीवस्यैव स्वप्नकर्तृत्वावधारणाच्च स्वप्ने ब्रह्मण उपादानत्वे जीवस्य कर्तृत्वं न स्यादिति भावः* इति पाठान्तरं घपुस्तके।

न मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमधिष्ठानम् ।

ननु जीवचैतन्यस्यानावृतत्वेन सर्वदा भासमानत्वात् कथमधिष्ठानत्वम्? सत्यम् । तत्रापि स्वप्नाध्यासानुकूलव्यावहारिकसंघानभानविरोध्यवस्थाज्ञानाभ्युपगमात्,

न्यायरत्नावली ।

उपादानत्वे जीवस्य कर्तृत्वं न स्यादिति भावः । 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति । अथ रथान्रथयोगान् पथः सृजते स हि कर्ते'ति श्रुतौ, तत्र—स्वप्ने, स हि—जीवो हि । अत्र जीवस्य स्वप्नानुकूलव्यापारालोचनादिमत्त्वरूपस्य स्वप्नकर्तृत्वस्यासम्भवात् अदृष्टद्वारा कर्तृत्वमेव श्रुत्योक्तम्, तच्चाकाशादाविव स्वप्नेऽपि ब्रह्मोपादानके सम्भवतीति नेदं दूषणं युक्तम् । प्रपञ्चवदिति । स्वप्नस्येति शेषः । सर्वसाधारण्येति । सर्वान् जीवान् प्रत्यापरोक्ष्येत्यर्थः । भानविरोधीति । मनोऽवच्छि-

नारायणी ।

रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान्पथः सृजत' इति पूर्वभागः । अयमर्थः । स्वप्ने यद्यपि रथादयो व्यावहारिका न सन्ति अथ अथापि भोगोपधायकान् रथादीन्सृजते । स्रष्टारं स्पष्टयति—स हि कर्तेति । स हि जीवः कर्ता स्रष्टव्यस्वप्नानुकूलालोचनादिमानित्यर्थः । तथाच श्रुतिबलादपि जीव एवाधिष्ठानमिति भावः । नन्वस्तु जीवः कर्ता उपादानत्वं तु प्रपञ्चोपादानत्वेन क्लृप्तस्य ब्रह्मण एवास्तु लाघवात्तथाच नाधिष्ठानं जीव इत्यत आह—आकाशादीति । स्वप्नस्येति शेषः । सर्वेति । सर्वजीवान्प्रति भोगयोग्यत्वापत्तेः । अधिष्ठानावरणं विना नाध्यासः आवरणं च न जीवे सम्भवति 'सर्वदाहमस्मी'त्यपरोक्षात् अतः स्वप्रत्यावृतं ब्रह्मैवोपादानं युक्तमित्यभिप्रेत्य शङ्कते—नन्विति । जीवचैतन्यस्य—मनोऽवच्छिन्नचैतन्यस्य प्रमातृरूपस्य, अनावृतत्वेन—'नास्ति न भाति' इत्याद्यावरणाविषयत्वेन, सर्वदा भासमानत्वात्—यावत्स्वसत्त्व'महमस्मी'त्यपरोक्षधीविषयत्वात् । कथमिति । अध्यासाधिष्ठानताप्रयोजकावृतत्वाभावादिति भावः । स्वरसतो न सम्भवत्येवेत्यङ्गीकारपूर्वकमुत्तरमाह—सत्यमित्यादि । व्यावहारिकेति । ब्रह्मज्ञानमात्रबाध्यजगज्जीवादिसमुदायभा-

स्वप्नदशायां चाहं मनुष्य इत्यादिप्रातीतिकसंघातान्तरभानाभ्युपगमात्। 'शय्यायां स्वपिमी'ति शय्यान्तरभानवत्। भानसामग्र्यभावश्च तुल्य एव। नन्वहं म-

न्यायरत्नावली।

नाचिद्विषयकं यदज्ञानं तदेव व्यावहारिकशरीराद्यवच्छिन्नचिद्विषयकमपि स्वीक्रियते, अन्यथा शरीरादेस्साक्षिणा भानं स्यात्; घटाद्यवच्छिन्नचितस्तु स्वप्नकाले नाज्ञानविषयत्वे मानमस्ति, प्रमातृरूपसाक्षिचिदुपरागाभावादेव तदभानसम्भवात्। जीवस्य जगदुपादानत्वपक्षे घटादौ साक्षिसम्बन्धस्य सदा सत्त्वेऽपि जागरणकालिकाज्ञानेनैव तदावरणादिति ध्येयम्। शय्यान्तरभानवदित्यत्र व्यावहारिकान्यशय्याभानाभ्युपगमवत्। उक्तं हि मणिकारादिभिः "संशयस्वप्नौ न प्रमे, अत एव 'शय्यायां स्वपिमी'त्यादौ सुषुप्तपुरुषसंसृष्टशय्या भाती"त्यादि। भानसा-

नारायणी।

नविरोधीत्यर्थः। अवस्थेति। मूलाज्ञानावस्थारूपजायमाननिद्रादिरूपावरकाभ्युपगमात् स्वतोऽनावृतत्वेऽपि जीवस्य ब्राह्मणशरीरादिपुरस्कारेणावृतत्वमस्त्येव 'व्याघ्रोहं शूद्रोहमि'त्यादिभ्रमस्य स्वप्ने दर्शनादिति भावः। ननु तर्हि 'मनुष्योहमि'त्यादिप्रतीतिः स्वप्ने न स्याज्जीवस्य तज्ज्ञानविरोध्यज्ञानाभ्युपगमात्तत्राह—स्वप्नेति। 'अहं मनुष्य' इत्यादिना 'ब्राह्मणोहं क्षत्रियोहमि'त्यादिपरिग्रहः। प्रातीतिकेति। व्यावहारिकान्यप्रातीतिकसमुदायभानेत्यर्थः। तथाच प्रातीतिकदेहपुरस्कारेण प्रातीतिकाहमर्थस्यैव व्यावहारिकाहमर्थेऽध्यस्तस्य भानं व्यावहारिकाहमर्थज्ञानाच्चारोप्याधारयोरपि निवृत्तिरिति न कोपि दोष इति संक्षेपः। ननु व्यावहारिकेणैव तदुपपत्तिसम्भवे तस्याधिष्ठानत्वमङ्गीकृत्य भोक्तृभोग्यभेदकल्पनमन्याय्यं गौरवात्तत्राह—शय्यायामिति। इति प्रतीतौ व्यावहारिकान्यशय्याया इवेत्यर्थः। 'संशयस्वप्नौ च न प्रमे'ति वदतां मणिकारादीनां मत इति शेषः। ननु तत्र परमतानुसारेण तथोक्तिः परेणापनयस्य ज्ञानादेः सन्निकर्षत्वानङ्गीकारादित्यत आह—भानेति। व्यावहारिकविषयप्रमाकरणेन्द्रियरूपसामग्र्या

नुष्य इत्यादिव्यावहारिकसंघातज्ञानस्य प्रमाणाजन्य-

न्यायरत्नावली।

मग्रीति। व्यावहारिकविषयकप्रमाकरणेन्द्रियसन्निकर्षादित्यर्थः। तुल्य इति। यथा व्यावहारिके शय्यादौ प्रत्यक्षादिसामग्र्य-भावः तथा मनुष्यशरीरादावित्यर्थः। ज्ञानस्य—जाग्रद्दशागतप्रथ-

नारायणी।

अभावश्चेत्यर्थः। तुल्य इति। यथा व्यावहारिके शय्यादौ भासकसामग्र्यभावस्तथा अहमर्थमनुष्यशरीरादावपीत्यर्थः। ननु तत्र ज्ञानलक्षणसन्निकर्षस्य भासकस्य सम्भवात्कथं सामग्र्यभावः अन्यथा 'सुरभि चन्दनम्, घटो नास्ति, घटं पश्यामि, वन्हिमनुमिनोमि'इत्यादौ घटसौरभादेर्भानं न स्यात् लौकिकसन्निकर्षबाधात्, अलौकिकस्य चानङ्गीकारादिति चेन्न। सौरभाद्यंशे स्मृतित्वादेरङ्गीकारात्, ज्ञानलक्षणायाः प्रत्यासत्तित्वे मानाभावात्। न च तर्हि कथमपूर्वार्थककाव्यरचना? अप्रसिद्धसंसर्गकस्य स्मृत्यसम्भवादिति वाच्यम्। तत्रावश्यकतत्तत्पदार्थस्मृत्या विशिष्टप्रत्यक्षमप्रकल्प्यैव तत्तत्पदस्मृतेरेव कल्पनात्। शाब्दस्यायोग्यताज्ञानेनाप्रतिबध्यतायाः कलहस्थले क्लृप्तत्वात्। उक्तपदस्मृतिजन्यशाब्दबोधादेव काव्यरचनोपपत्तेः, अक्लृप्तसन्निकर्षकल्पनमपेक्ष्य पदतदर्थोभयस्य स्मरणवृत्तिकल्पनस्यैव युक्तत्वात्। तस्मादलौकिकप्रत्यक्षान्यथानुपपत्त्या ज्ञानलक्षणप्रत्यासत्तेरसिद्धेर्न तेन सन्निकर्षेण देशान्तरस्थरजतादे'रिदं रजतमि'ति भ्रमे भानं किन्त्वधिष्ठाने ज्ञायमानानिर्वचनीयरजतादेरेव, निर्विषयज्ञानानभ्युपगमात्। आध्यासिकतादात्म्यस्य उत्पत्तेरावश्यकत्वे विनिगमकाभावेन रजतोत्पत्तेरपि युक्तत्वाच्चेत्यन्यत्र विस्तरः। अनिर्वाच्यत्वं च सद्विलक्षणत्वे सत्यसद्विलक्षणत्वम्। एतच्चार्थापत्तिप्रमाणकम्। तथाहि—सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेत, विरोधाच्च न सदसदात्मकम्, अतः सदसद्भिन्नमिति। तस्मात्सिद्धानिर्वचनीयख्यातिः। एतेन भ्रमेऽसदेव रजतम् भाति वासनाविशेषादिति माध्यमिकस्य, 'सदेवान्तःकरणपरिणामात्मकम् भाती'ति साङ्ख्यादेः, 'क्षणिकविज्ञानात्मनो विशेषपरिणामो रजतादिरिदंत्वादिना भाती'त्यात्मख्यातिवादिनो योगाचारादेः, 'इदमिति पुरोवर्तिनो ग्रहणम्, रजतमिति रजतस्य स्मरणं तयोश्च स्वरूपतो विषयतश्च भेदाग्रहाद्विशिष्टव्यवहारोऽतः प्रवृत्तिश्चेत्यख्या-

त्वात्कथमज्ञाननिवर्तकता ? अवस्थान्तरान्यथानुपपत्त्या तत्कल्पने सुषुप्तावपि स्वप्नबाधकज्ञानमास्थीयेत। तच्चानिष्टम्, जाग्रत्त्वापत्तेरिति चेत्, साध्ववोचः। स्वप्नावस्थाज्ञानस्यैवान्तःकरणलयसहितस्य सुषुप्तिरूप-

न्यायरत्नावली।

मज्ञानस्य। अज्ञानेति। स्वप्नप्रयोजकाज्ञानेत्यर्थः। अवस्थान्तरान्यथानुपपत्त्या—पूर्वावस्थाया बाधाभावे अवस्थान्तरोत्पत्त्यन्यथानुपपत्त्या। तत्कल्पने-प्रमाणाजन्यज्ञानस्यापि बाधकत्वकल्पने। सुषुप्तावपीत्यादि। सुषुप्तावविद्यावृत्तिरूपमहमित्याकारकज्ञानं स्वप्नबाधकमङ्गीक्रियत इत्यर्थः। जाग्रत्त्वेति। स्वप्नसुषुप्तिशून्यत्वेत्यर्थः। स्वप्नावस्थाज्ञानस्य—स्वप्नावस्थाविषयकाज्ञानस्य, सुषुप्तौ यद्यत् भासते अज्ञानादि तदन्यस्वाप्नार्थविषयकाज्ञानस्येति यावत्। अथवा स्वप्नावस्थाज्ञानस्य—स्वप्नावस्थाधिष्ठानविषयकाज्ञानस्य, तस्यैव जीवेशादिभेदविषयकत्वस्वीकारात्। एवं च सुषुप्तौ साक्षिमात्रभास्यजीवेशतद्भेदादेरभानमुपपद्यते। त-

नारायणी।

तिवादिनो मीमांसकस्य च मतम् परास्तम्। आद्यद्वितीययोः ख्यातिबाधानुपपत्तेरेव, तृतीये रजतत्वेनेदंत्वस्य इदन्त्वेन रजतत्वस्य चारोप इत्यत्र विनिगमकाभावात् उभयारोपे सदसदादिविकल्पेनोक्तदोषात्, चतुर्थे रजतप्रकारकपुरोवर्तिविशेष्यकज्ञानत्वेन हेतुतायाः सत्यरजतादिस्थले क्लृप्ताया इह बाधेन हेत्वन्तरकल्पने गौरवात्। परिशेषात् अनिर्वचनीयख्यातिसिद्धिरित्यन्यत्र विस्तरः। ज्ञानस्य-जाग्रद्दशागतप्रथमज्ञानस्य। प्रमाणेति। अहमित्यंशस्याविद्यावृत्त्यारूढसाक्षिमात्रवेद्यत्वात् प्रमातृवेद्यत्वानङ्गीकारादिति भावः। अज्ञानेति। स्वप्रयोजकाऽज्ञाननिवर्तकता। अवस्थेति। पूर्वावस्थाया बाधं विनाऽवस्थान्तरस्याऽसम्भवेन। तत्कल्पने-प्रमाणाजन्यज्ञानस्यापि बाधकत्वकल्पने। सुषुप्ताविति। सुषुप्तावविद्यावृत्तिरूपमहमित्याकारकं स्वप्नबाधकमङ्गीक्रियत इत्यर्थः। जाग्रत्वापत्तेः-स्वप्नसुषुप्तिशून्यत्वापत्तेः। स्वप्नेति। स्वप्नावस्थाया जनकाऽज्ञा-

त्वान्न तत्र तद्बाधः। जागरणे तु मिथ्यैव स्वप्नोऽभादित्यनुभवादहमिति ज्ञानस्य प्रमाणाजन्यत्वेऽपि यथार्थत्वाच्छरीरादिज्ञानस्य च प्रमाणजन्यत्वादवस्थाज्ञान-

न्यायरत्नावली।

त्र–सुषुप्तौ। तद्बाधः–स्वप्नावस्थाबाधः। यथार्थत्वात्–अज्ञाताबाधितमनोऽवच्छिन्नचिद्विषयकत्वात्। प्रमाणजन्यत्वादिति। मनुष्यत्वादिविशिष्टरूपेण साक्षिमात्रेण कदाचित् भास्यत्वेऽपि चक्षुरादिप्रमाणभास्यत्वस्यापि कदाचित्तेन रूपेण शरीरादौ सत्त्वात् 'मनुष्यं मामहं पश्यामी'ति प्रतीतेरिति भावः। अनुभवासिद्धमिति। तथा च प्रमाणजन्यज्ञानत्वेन नाज्ञानविरोधिता किन्त्वज्ञाताबाधितविषयकनिश्चयत्वेन, तत्समनियतजातिविशेषरूपप्रमात्वेन वेति भावः। नन्वविद्यावृत्तिरूपेणाहमित्याकारकज्ञानेन यदि मनोऽवच्छिन्नचिद्विषयकं व्यावहारिकशरीराद्यनेकावच्छिन्नचिद्विषयकत्वेन सामान्याज्ञानशब्दवाच्यमज्ञानं निवर्तते तदा 'घटं न जानामी'त्याकारेणाज्ञातत्वविशिष्टघटविषयकेणाविद्यावृत्तिरूपज्ञानेनापि घटाद्यवच्छिन्नचिद्विषयकमज्ञानं निवर्त्तेत, तस्याप्यज्ञाताबाधितघटविषयकत्वस्वीकारात्। अज्ञानतत्कार्यविषयकमेव ज्ञानमज्ञाननिवर्तकमिति स्वीकारेऽपि आत्ममात्रविषयकसौषुप्ताविद्यावृत्त्या मूलाज्ञानं निवर्त्तेत, प्रमाणजन्यत्वत्यागे श्रवणादिजन्यत्वस्यापि त्यागौचित्यात् श्रवणादीनां प्रमाणाश्रितत्वात् तत्रा

नारायणी।

नस्यैव। तत्र–सुषुप्तौ। तद्बाधः–स्वप्नवस्थाबाधः। प्रमाणाजन्यत्वेऽपि–अविद्यावृत्तिमात्रारूढसाक्षिरूपत्वेपि। यथार्थत्वात्–अज्ञाताऽबाधितमनोवच्छिन्नचिद्विषकत्वात्। बहिरिन्द्रियसंप्रयोगसम्भवेन बहिरिन्द्रियजन्यमनोवृत्तिरूपत्वात्। ननु प्रमाणजन्यत्वं विनापि यथार्थत्वमात्रेण ज्ञानस्याज्ञाननिवर्तकत्वाङ्गीकारे सौषुप्तात्मबोधादप्यज्ञाननिवृत्तिप्रसङ्ग-

विरोधित्वमनुभवसिद्धम् । विशेषाज्ञानं तु न प्रमाण-जन्यवृत्तिमन्तरेण निवर्तते । साक्षिणश्चाविद्यानिवर्तक-

न्यायरत्नावली ।

इ-विशेषाज्ञानं त्विति । (१)घटाद्येकैकमात्राविषयकाज्ञानं त्वित्यर्थः । अन्तरणेति । 'घटं न जानामी'त्याकाराविद्यावृत्तौ घटाद्यंशे निश्चयत्वाभावात् प्रमात्वजात्यभावाद्वा नाज्ञाननिवर्तक-ता । अत एव स्वप्नेऽपि कदाचिन्मनो न जानामीत्याकारकावि-द्यावृत्त्युदयेऽपि न (२)सामान्याज्ञाननिवृत्तिरिति भावः । ननु प्रमाणाजन्यज्ञानस्याविद्यानिवर्तकत्वे साक्षिणोऽपि तत् स्यात्, अ-ज्ञानसाक्षिणोऽज्ञातविषयांशे न निश्चयत्वमिति चेत्तर्हि तत्र ज्ञापकं वाच्यं तत्राह—साक्षिणश्चेति । निवर्तकत्वेऽपीति । निवृ-

नारायणी ।

स्त द्दृशबोधस्याऽबाधिताऽज्ञातात्मविषयकत्वादित्यत आह—विशेषेति। परिपूर्णचिदानन्दरूपाऽखण्डार्थगोचराज्ञानं त्वित्यर्थः । प्रमाणेति । तत्त्वम-स्यादिवाक्यहेतुकाखण्डार्थबोधं विना सौषुप्तबोधस्य चिन्मात्रगोचरत्वे-ऽप्यज्ञाताऽभेदाऽविषयकत्वान्न ततोऽज्ञाननिवृत्तिः सम्भवति, किन्तु वा-क्यजन्यवाक्यार्थबोधादेवेति दिक् । अथवा जाग्रद्बोधेन अहं मनुष्य' इत्या-दिना यदि स्वप्नावस्थाजनकस्य व्यावहारिकद्वैतज्ञानस्य निवृत्तिस्तदा जागरे 'घटमहं न जानामी'त्यज्ञानप्रतीतिर्न स्यात् घटाज्ञानस्य नाशादि-त्यत आह-विशेषेति । घटत्वादिप्रकारकाऽज्ञानमित्यर्थः । प्रमाणेति । प्रमाण-जन्यविशेषप्रकारकवृत्तिं विना यथा द्रव्यत्वेन घटज्ञानाद् द्रव्यत्वेन घटा-ज्ञाननिवृत्तावपि घटत्वेन न घटाऽज्ञाननिवृत्तिः, किन्तु घटत्वेन घटज्ञाना-देव, तथाऽत्रापि सामान्यतोऽवस्थाऽज्ञाननिवृत्तावपि विशेषतः प्रमाण-जन्यज्ञानादेव, तथा च ततः पूर्वं न विशेषज्ञानानुभवानुपपत्तिरिति भावः । ननु प्रमाणजन्याऽजन्योभयज्ञानादज्ञाननिवृत्तेर्दर्शनात् तदुभय-साधारणाज्ञाताबाधितगोचरज्ञानत्वेनैव विशिष्य निवर्तकता वाच्या, तथा च साक्षिणोऽप्यविद्यानिवर्तकत्वापत्तिः, साक्षिणोऽपि तथाविध-

(१) उक्तसामान्याज्ञानभिन्नाज्ञानमित्यर्थः इति घछपुस्तकयोः ।

(२) ज्ञानसामान्यस्य स्वविषयानिवर्तकतायाः क्लृप्तत्वादिति भावः । इति पाठान्तरं घछपुस्तकयोः ।

त्वाभाव अज्ञानसाधकत्वेनैव धर्मिग्राहकमानसिद्ध इति न किञ्चिदनवद्यम् । यावन्ति ज्ञानानि तावन्त्यज्ञानानीति चाभ्युपगमात् शुक्तिज्ञानेनेव व्यावहारिकसंघातज्ञानेनाज्ञाननिवृत्तावपि पुनरपि कदाचिद्रजतभ्रमवन्न स्वप्नाध्यासानुपपत्तिरिति जीवचैतन्यमेवाधिष्ठानमिति

न्यायरत्नावली ।

त्तिजनकतावच्छेदकनिश्चयत्वेत्यर्थः । अज्ञानसाधकत्वेति । अज्ञानविषयकत्वेत्यर्थः । ननु तत्साधकमपि पश्चात्तन्निवर्तकं भवतु तत्राह—धर्मीति । अविद्यासाधकं साक्षीति येन मानेन सिद्धं तेनैव तस्य तदनिवर्तकत्वं सिध्यति(१) । निवर्तकत्वसत्त्वे साधकत्वक्षण एव तदापत्तिरिति भावः । यावन्तीत्यादि । व्यावहारिकसंघातज्ञानेनाज्ञाननिवृत्तावपि पुनरपि स्वाप्नाध्यासस्याज्ञानान्तरेणोत्पत्तेर्नानुपपत्तिः, यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्यस्याभ्युपगमात् । शुक्तिज्ञानेनाज्ञाननिवृत्तावपि पुनरप्यज्ञानान्तरेण रजतभ्रमोत्पत्तिवदित्यर्थः । एकाज्ञानपक्षे शुक्तिरूप्यादेरिव स्वाप्नस्यापि ब्रह्मज्ञानात् पूर्वं न बाधः, किन्तु निवृत्तिः ।

नारायणी ।

विषयधीरूपत्वात्तत्राह—साक्षिणश्चेति न ।निवर्तकत्वेऽपि । निवृत्तिजनकतावच्छेदकप्रमात्वाभावेत्यर्थः । धर्मिग्राहकेति । अविद्यासाधकः साक्षी येन मानेन सिद्धस्तेनैव तदनिवर्तकत्वमपि, ज्ञानस्य स्वविषयानिवर्त्तकतायाः क्लृप्तत्वात् । तथा च नापरोक्षज्ञानत्वं तथा किन्त्वज्ञातत्वाभावप्रयोजकवृत्तित्वमेवेति भावः । ननु यदि सामान्यविशेषोभयज्ञानात् सामान्यतो विशषतश्चाज्ञाननिवृत्तिः कथं पुनः स्वाप्नभ्रमः? कारणाभावात्तत्राह—यावन्तीति । व्यावहारिकसंघातज्ञानेनाज्ञाननिवृत्तावपि पुनरपि स्वप्नाध्यासस्याज्ञानान्तरेणोत्पत्तेर्नानुपपत्तिः,'यावन्ति ज्ञानानि तावन्त्यज्ञानानि' इत्यभ्युपगमात्, यथा श्रुतिज्ञानेनाज्ञाननिवृत्तावपि पुनरप्यज्ञानान्तरेण रजतभ्रमोत्पत्तिस्तद्वदित्यर्थः। एकाज्ञानपक्षे न ब्रह्मज्ञानात्स्वप्नबाधः किन्तु निवृत्तिमात्रम्, अतो ब्रह्मैवाध्यासाधिष्ठानमित्याशयेना-

(१) ज्ञानस्य स्वविषयनिवर्तकत्वस्य क्वचिदप्यक्लृप्तत्वादित्यर्थः ।

पक्षे न कोऽपि दोषः। यदा तु पुनर्ब्रह्मज्ञानादेवाज्ञाननिवृत्त्यभ्युपगमः, तदा रज्ज्वां दण्डभ्रमेण सर्पभ्रमतिरोधानवदधिष्ठानज्ञानाभावेऽपि जाग्रद्भ्रमेण स्वप्नभ्रमतिरोभावोपपत्तेः ब्रह्मचैतन्यमेव स्वप्नाध्यासाधिष्ठानमिति पक्षेऽपि न कश्चिद्दोषः। प्रतिजीवं स्वप्नाध्यासासाधारण्यं तु मनोगतवासनानामसाधारण्यादेव। म-

न्यायरत्नावली।

अतो ब्रह्मैवाध्यासमात्रेऽधिष्ठानमित्याशयेनाह–यदेत्यादि। पक्षेऽपीति। न दोष इत्यनुषज्यते। प्रतिजीवमित्यादि। एकेन जीवेनोपलभ्यमानः स्वप्नो नान्येन उपलभ्यत इति यत् स्वप्ने असाधारण्यं ब्रह्मणः स्वप्नोपादानत्वे (१)तदनुपपन्नमिति यत् पूर्वमुक्तं तन्न। ब्रह्मोपादानकस्यापि स्वप्नस्य तत्तज्जीवीयवासनाजन्यत्वेनोक्तासाधारण्यसम्भवादित्यर्थः। पक्षान्तरमाह–मनोवच्छिन्नं ब्रह्मेत्यादि। अविद्याप्रतिबिम्बितचिद्रूपजीवान्यत् ब्रह्मचैतन्यं नियन्तृरूपं मनोऽवच्छिन्नमधिष्ठानमित्यर्थः। प्रथमकल्पेऽपि अविद्याप्रतिबिम्बितचैतन्यस्य न तद्रूपतया अधिष्ठानत्वम्, 'अज्ञोऽहं घटं जानामी'त्येवं ज्ञातृतया स्वप्ने भानात्,

नारायणी।

ह–यदेति। अज्ञानेति। अज्ञानोच्छेदाभ्युपगमः। तिरोधानवत्–कार्यावस्थामात्रपरित्यागवदिति यावत्। अधिष्ठानेति। अङ्गीकृतब्रह्मरूपाधिष्ठानज्ञानाभावेऽपि। आकाशादिवत् सर्वसाधारण्यं स्वप्नस्य वारयति–प्रतिजीवमिति। एकजीवेनोपलभ्यमानः स्वप्नो नान्येन जीवेनोपलभ्यत इत्याह–स्वप्नेति। भ्रमहेतुभूतानां मनोगतसंस्काराणां प्रतिजीवं नियतत्वात् उपपद्यत इति शेषः। संस्कारविशिष्टत्वेनैव मूलाज्ञानं भ्रमोपादानमिति मूलाज्ञानस्यसाधारणत्वेपि कारणतावच्छेदकानां संस्काराणामसाधारण्यात् स्वप्नासाधारण्यमिति भावः। पक्षान्तरमाह––मन इति। अविद्याप्रतिबिम्बितचिद्रूपजीवादन्यत् ब्रह्मचैतन्यं मनोवच्छिन्नं नियन्तृरूपमधिष्ठानमित्यर्थः। ननु मनोवच्छिन्नचित्त्वेन रूपेण ब्रह्मणोऽपि जागरे

(१) तदनुपपन्नं सद्दोष इति यत् पूर्वमिति घपुस्तके।

नोवच्छिन्नं ब्रह्मचैतन्यमेवाधिष्ठानम् । एतस्मिन्नपि पक्षेऽवस्थाज्ञानस्यावारकत्वाङ्गीकारान्न काप्यनुपपत्तिः । अत एव शास्त्रेषु क्वचित्क्वचित्तथा व्यपदेशः ।

ननु मनोऽवच्छिन्नचैतन्यस्याधिष्ठानत्वे 'अहं गज' इत्याद्यहङ्कारसामानाधिकरण्येन गजप्रतीतिः स्यात् 'इदं

न्यायरत्नावली ।

किन्तु मनोऽवच्छिन्नत्वेनेति । ननु मनोऽवच्छिन्नचित्त्वेन रूपेण जागरणे ब्रह्मणोऽपि भासमानत्वात् कथमधिष्ठानता ? तत्राह—एत-

नारायणी ।

भासमानत्वात् कथमधिष्ठानत्वं तत्राह—एतस्मिन्नपीति । अवस्थाऽज्ञानस्य–निद्रादिरूपस्योक्तस्य, न कापि अनुपपत्तिः–न स्वप्नाध्याससामग्र्यनुपपत्तिः । न चाज्ञानाज्ञानविकल्पदोषापत्तिः, मनोवच्छिन्नचिद्विषयकज्ञानेनावस्थाऽज्ञाननाशाङ्गीकारादित्यन्यत्र विस्तरः । अत्र भाष्यकारसम्मतिरप्यस्तीत्याह—अत एवेति । [मनोवच्छिन्नचितम् अधिष्ठानत्वस्य सोपपत्तिकत्वादेवेत्यर्थः] । शास्त्रेषु–भाष्यादौ । क्वचित्–तृतीयाध्यायद्वितीयपादादौ । तथेति । बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे' इत्यादिना बाध्यशब्देनोच्छेदोक्त्या स्वप्नज्ञानस्यावरकावस्थाऽज्ञाननाशपूर्वकत्वनिर्देशः मूलाज्ञाननाशपूर्वकत्वस्य जागरे बाधात्, तथा च स्फुटमेव लब्धमवस्थाऽज्ञानस्यैव तदावरकत्वात् स्वप्नोपादानकत्वम्, अतोऽनयोः पक्षयोः परिणामिनि न विवादः, किन्तु विवर्ते । तत्र यस्मिन्पक्षे मनोवच्छिन्नचैतन्यमेवाधिष्ठानं तस्मिन्पक्षेऽन्तःकरणावच्छिन्न एव रजताद्युत्पत्तेरवश्यं वक्तव्यत्वान्नियमतोहमंशतादात्म्यविशिष्टतयैव प्रतीतिः स्यान्न त्विदमंशसामानाधिकरण्येनापि, रजतादाविव बाह्यांशाभावात् । यस्मिन्पक्षे ब्रह्मचैतन्यमेवाधिष्ठानं तस्मिन्पक्षे बाह्यांशाभावात्सामान्यत एव प्रतीतिः स्यादिति पक्षद्वयेप्याशङ्कते—नन्वित्यादि । मन इति । जीवरूपस्य तादृशब्रह्मणो वा अधिष्ठानत्वे–स्वप्नाध्यासाधिष्ठानत्वे । 'अहं गज' इत्यादिना 'अहं गजवानि'त्यादिपरिग्रहः । अहङ्कारेति । अहमंशस्याधारत्वादहमंशवैशिष्ट्यावगाहित्वेनैव । तथा च तादात्म्येन, रजतादेरिवोत्पत्ता'वहं गज' इति संसर्गितया सुखादेरिवोत्पत्तौ 'चाहं सुखी'तिवदहं गजवानि'त्यादिप्रतीतिः स्यादित्यर्थः । सामानाधिकरण्येनैवेत्येवकारार्थं स्फुटयति--इदमिति । द्वितीयपक्षे

रजतमि'ति शुक्तिसामानाधिकरण्येन रजतप्रतीतिवत्, न 'त्वयं गज' इति। ब्रह्मचैतन्यस्याधिष्ठानत्वपक्षेऽपि 'गज' इत्याकारैव प्रतीतिः स्यान्न 'त्वयं गज इति। तत्रापीदङ्कारास्पदीभूतबाह्यार्थाभावस्य समानत्वादिति चेन्न। आद्ये पक्षे अहङ्कारस्य शुक्तिवदधिष्ठानानवच्छेदकत्वात् 'शुक्तिरजतमि'तिव'दहं गज' इति न भ्रमाकारप्रसङ्गः। 'अहमि'ति ज्ञानस्येव 'शुक्ति'रिति ज्ञानस्यैव भ्रमविरोधित्वात्, इदमंशस्य च भ्रमाविरोधिन एव तत्र भानाभ्युपगमात्। स्वप्ने तु गज इत्याकारवदयमीत्याकारोऽपि कल्प्यते एव। उभयाकारबाधेऽप्यधिष्ठानीभूतचैतन्याबाधान्न शून्यवादप्रसङ्गः। जाग्रद्दशायामपि शु-

न्यायरत्नावली।

स्मिन्नित्यादि। अधिष्ठानानवच्छेदकत्वात्-भ्रमप्रयोजकाज्ञानविषयतावच्छेदकत्वात्। भ्रमाविरोधिनः-भ्रमविरोधिधीविषयशुक्तित्वाद्यविशेषितस्य। तत्र-भ्रमे। कल्पित एव न तु बाह्यः। जाग्रद्दशायां-जाग्रद्दशागतभ्रमे। शुक्तीदङ्काराविलक्षणस्य-रज-

नारायणी।

आह—ब्रह्मेति। गज इत्येव-इदमंशाहमंशवैशिष्ट्यानवगाहिनी। एवकारार्थं स्वयमेव स्फुटयति—नत्वित्यादि। समाधत्ते—आद्य इत्यादि। अधिष्ठानावच्छेदकत्वात्-भ्रमप्रयोजकाज्ञानविषयतावच्छेदकत्वात्, अधिष्ठानावच्छेदकस्य च भानं तत्प्रकारकधियो भ्रमविरोधित्वादित्याह—अहमिति। भ्रमेति। भ्रमबाधकज्ञानाविषयस्यैव आधारत्वादिति भावः। तत्र-भ्रमे। ननु तथापि कथं रजतादिभ्रम इव स्वप्नभ्रमे इदमंशभानम्? अधिष्ठानेऽसत्त्वादित्याशङ्क्य मास्त्वधिष्ठाने इदमंशस्तथापि संस्कारेण गजादिवत्कल्पितेदमंशस्यापि भानान्न कोपि दोष इति पक्षद्वयेऽप्येकोक्त्या समाधानमाह—स्वप्ने त्विति। कल्पित एव न तु बाह्यः। ननु प्रतीयमानमात्रांशस्य कल्पितत्वेन बाधावश्यकत्वात् शून्यताप्रसङ्ग इत्यत आह—उभयेति। अध्यस्ताधारांशोभयबाधेपीत्यर्थः। न स्वप्नभ्रम एवेयं कल्पना किन्तु जागरेपीत्याह—जाग्रदिति।

क्तीदङ्कारविलक्षणस्य प्रातीतिकस्यैव रजतेदङ्कारस्य भानाभ्युपगमाच्च। 'अध्यस्तमेव हि परिस्फुरति भ्रमेष्वि'ति न्यायात्। शुक्तीदमंशभानपक्षेऽपि नेदमंशसत्यत्वमध्यासे प्रयोजकम्। किन्त्वधिष्ठानसत्यत्वम्।

न्यायरत्नावली।

तसंसृष्टत्वानापन्नादिदमंशात् विलक्षणस्य रजतेदङ्कारस्य। रजतसंसृष्टेदमंशस्य प्रातीतिकेन रजततादात्म्येन विशिष्टतया प्रातीतिकमेवेदन्त्वविशिष्टं भ्रमे भाति, नातादृशं व्यावहारिकमित्यत्र सङ्क्षेपशारीरकोक्तिं प्रमाणयति—अध्यस्तमेवेत्यादि। नन्विदं रजतमिति भ्रमे शुक्तीदमंशस्य भानपक्षे भ्रमे(१) विशिष्टस्याप्रातीतिकत्वनियमात् 'अयं गज' इति स्वप्नानुपपत्तिस्तत्राह—शुक्तीति। सत्यत्वं—प्रातीतिकान्यत्वम्। प्रयोजकं-व्यापकम्।

नारायणी।

जाग्रद्दशागतभ्रमेपीत्यर्थः। शुक्तीति। शुक्तीदमंशाद्व्यावहारिकाद्भिन्नस्य, प्रातीतिकस्यैव—प्रतीत्याभावव्यापकीभूताभावप्रतियोगिनः, रजतेदङ्कारस्य-रजतसंसृष्टेदमंशस्य। अस्मिन्नर्थे संक्षेपशारीरकाचार्योक्तिं प्रमाणयति—अध्यस्तमिति।

अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत्कथंचन परिस्फुरति भ्रमेषु।
रज्जुत्वशुक्तिशकलत्वमरुक्षितित्वचन्द्रैकताप्रभृतिकानुपलम्भनेन॥

इति संक्षेपशारीरकाचार्योक्तयुक्त्येत्यर्थः। नन्विदं रजतमिति भ्रमे शुक्तिदङ्कारस्यैव भानपक्षे भ्रमविषयस्य प्रातीतिकत्वनियमाभावा 'दयं गज'इति भ्रमानुपपत्तिस्तदवस्थेत्यत आह—शुक्तीति। सत्यत्वं-प्रातीतिकान्यत्वं प्रयोजकं व्यापकं भ्रमनिवर्तकधीविषयांशस्यैव भ्रमनाशकत्वान्यथानुपपत्त्या सत्यत्वावश्यकत्वादिदमंशस्य तादृशसत्यत्वावश्यकत्वे मानाभावादिति भावः। धर्मिण इदमंशस्य सत्यत्वाभावेऽपि भ्रमस्सदधिष्ठान एक एवेति नियमोऽधिष्ठानस्य सत्यत्वादव्यभिचार्यैवेत्यभिप्रेत्याह—किन्त्विति। तत्सत्यत्वं विना तज्ज्ञानाद्भ्रमनिवृत्तेरसम्भवादिति भावः। ननु विशेष्यतया भातस्येदमंशस्य चेन्नाधि-

(१) विशेष्यस्याप्रातीतिकेति घपुस्तके।

अधिष्ठानं च तत्राज्ञातं शुक्तिचैतन्यमिवात्रापि साक्षिचैतन्यं विद्यते एवेत्युपपादितम्। तस्मान्न पक्षद्वयेऽपि काप्यनुपपत्तिः। अत्र च स्वाप्निकपदार्थभोक्ता तैजस इत्युच्यते। पित्ताख्यतेजःप्रधानकत्वात्। आदित्यादिज्योतिरन्तरेणापि भासकत्वादिति वा। एवं जाग्र

नारायणी।

ष्ठानत्वं किमधिष्ठानं तर्हि स्वप्नभ्रमस्य? तत्राह—अधिष्ठानमिति। परमते यद्धर्मप्रकारकज्ञानस्यैव भ्रमविरोधित्वम्, अज्ञानविषयतावच्छेदकतादृशधर्मावच्छिन्नमेवाधिष्ठानं न ज्ञातसामान्यधर्मावच्छिन्नमित्यर्थः। विशेषणभेदेन विशिष्टभेदात् ज्ञातेदन्त्वादिरूपधर्मविशिष्टमाधारः, अज्ञातशुक्तित्वादिरूपधर्मविशिष्टमधिष्ठानमिति यावत्। तत्र—जाग्रदवस्थाकालीनशुक्तिरजतभ्रमे, अत्रापि—स्वप्नभ्रमेऽपि। साक्षिचैतन्यम्—अहङ्कारोपहितं मूलाज्ञानावृतत्वोपहितं वा, तस्यापि जीवचैतन्येनैक्यमादाय विषयेभिव्यक्तस्य विषयावभासकत्वाङ्गीकारात् साक्षितया निर्देशः। एतेन मनोवच्छिन्नचैतन्यस्य स्वप्नाध्यासाधिष्ठानत्वपक्षेऽहमर्थ आधारो वा अधिष्ठानं वा? नाद्यः। 'अहं गज'इत्येव स्यान्न त्वयं गज इति। आधारारोप्ययोरेवाभेदप्रतीतेः। इदमंशभेदप्रतीत्ययोगात्। न द्वितीयः। कदाचिदहं व्याघ्र इति भ्रमानुपपत्तेः। अधिष्ठानारोप्ययोरभेदाप्रतीतिरिति निरस्तम्। व्यावहारिकाहङ्कारोपहिते साक्षिणि सकलाध्यासाङ्गीकारात्। अधिष्ठानतावच्छेदकत्वेन व्यावहारिकाहङ्कारस्य भ्रमे भानाभावात्। निद्रादिदोषवशात् अधिष्ठानाधारोभयकोटिबहिर्भूतकाल्पनिकाहङ्कारेणैवेदङ्कारसामानाधिकरण्येनारोप्यस्य भ्रमे भानमिति न कोऽपि दोष इत्यन्यत्र विस्तरः। स्वयमेव स्वस्य 'द्वितीयपक्षे त्विति' विशेषाकथनन्यूनतां परिहरन्नुपसंहरति—तस्मादिति। स्वप्ननिरूपणस्य पर्यवसानमाह—अत्र चेति। स्वप्नावस्थायां तेजःप्रधानत्वमिति प्रसक्तमित्याशङ्क्याह—आदित्येति। 'अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किं ज्योतिरयं पुरुष' इति प्रश्ने 'आत्मैवास्य ज्योतिरि'ति याज्ञवल्क्योत्तरश्रुतेरिति भावः। इति स्वप्नप्रकरणम्। विश्वतैजसोपाधी जाग्रत्स्वप्नौ 'एतावुभावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं चे'ति श्रुत्युक्तौ निरूप्य 'तद्यथा श्येनो वा सुपर्णो वे'ति श्रुतिबोधितं प्राज्ञोपाधिं निरूपयितुमुपक्रमते—एवमिति।

त्स्वप्नभोगद्वयेन श्रान्तस्य जीवस्य तदुभयकारणकर्म-क्षये ज्ञानशक्त्यवच्छिन्नस्य सवासनस्यान्तःकरणस्य कारणात्मनावस्थाने सति विश्रामस्थानं सुषुप्त्यवस्था। 'न किञ्चिदवेदिषमि'ति कारणमात्रोपलम्भः सुषुप्तिः। तत्र जाग्रत्स्वप्नभोग्यपदार्थज्ञानाभावेऽपि साक्ष्याकारं

न्यायरत्नावली।

तत्रापि–स्वप्नेऽपि। कारणेति। तदानीमुपधायकेऽर्थः। क्रिया-शक्त्यवच्छिन्नमात्रस्य प्राणस्य सुषुप्तौ लयाभावादाह—ज्ञानश-क्त्यवच्छिन्नस्येत्यादि। कारणात्मना–कारणभूताज्ञानग-तसंस्काररूपेण। कारणमात्रोपलम्भः–स्थूलसूक्ष्मरूपदेहानुपल-म्भविशिष्टः कारणोपलम्भविशेष इत्यर्थः। यथाश्रुतेऽविद्यावृत्ति-रूपकार्योपलम्भस्य साक्षिणस्सत्त्वादसङ्गतिः। मूर्छाप्रलयादि-वारणाय विशेष्यदलम्। अवस्थाज्ञानाकारं संस्कारतापन्नजाग्रत्स्व-प्नाविषयकम(१)नादिजीवेशभेदादिविषयकं च यदवस्थारूपमज्ञानं

नारायणी।

तदुभयेति। जाग्रत्स्वप्नोभयेत्यर्थः। क्रियाशक्तिविशिष्टस्य सुषुप्तौ लयाभावा-दाह–ज्ञानेति। ज्ञानशक्तिसमष्टिरूपस्य अन्तःकरणस्य लयेऽपि वासनाभि र्भोगस्तत्र स्यात्तत्राह—सवासनस्येति। कारणात्मना–कारणीभूताऽज्ञा-नगतसंस्कारेण। कारणेति। स्थूलसूक्ष्मदेहानुपलम्भविशिष्टः कारणोप-लम्भः इत्यर्थः। मूर्च्छाप्रलयादिवारणाय विशेष्यदलम्। सुषुप्तौ मनसः पुरीतति प्रवेशाज्ज्ञानसामान्यं प्रति वाङ्मनोयोगरूपकारणस्य सुषु-प्तिकाले बाधान्न कारणोपलम्भोऽपि युक्तिसह इति तार्किका-दिशङ्कामपाकर्तुमाह—तत्रेति। तत्र–सुषुप्तौ, जाग्रदिति। जाग्रत्स्वप्ना-वस्थयोर्भोग्या ये पदार्था व्यावहारिकप्रातिभासिकरूपास्तद्विषयक-ज्ञानाभावेऽपि। तत्तदर्थावभासकेन्द्रियवासनादिरूपविशेषसामग्र्या अ-भावादिति शेषः। साक्ष्याकारम्–निकृष्टाहङ्काररूपसाक्षिविषयकम्, सु-खाकारं-ब्रह्मरूपसुखविषयकम्, अवस्थाऽज्ञानाकारं च—स्वप्नाधिष्ठा-नविषयकं यदवस्थाज्ञानं तद्विषयकं च, अविद्यावृत्त्येत्यनेन

(१) स्वप्नाधिष्ठानविषयकं च इति पाठान्तरम्। घपुस्तके।

सुखाकारमवस्थाज्ञानाकारं चाविद्याया वृत्तित्रयमभ्युपेयते । अहङ्काराभावाच्च नैका विशिष्टवृत्तिः, सुषुप्त्यभा-

न्यायरत्नावली ।

तद्विषयकम् । संस्कारादीनां साक्षिसम्बन्धेन प्रकाशप्रसक्तेस्तत्राज्ञानमावश्यकम् । त्रयमिति—आकारत्रयोपहितरूपभेदसम्भवादित्यभिप्रायम्, समूहालम्बनैकवृत्त्या निर्वाहे वृत्तित्रयकल्पने गौरवात् । ननु मूलाज्ञानाकारवृत्त्यापि 'नावेदिष' मिति स्मरणोपपत्तेः अवस्थाज्ञानविषयकवृत्तिः किमित्युक्ता ? उच्यते—'न किञ्चिदवेदिषमि' त्यनेकपदार्थविषयकज्ञानस्मृतेर्मूलाज्ञानेनानुपपत्तेः तस्य चिन्मात्रविषयकत्वात् । अत एव(१)'आत्मानमीशानं मनुष्यं वा नावेदिषम्, आकाशादिकं नावेदिषम्' इति स्मृतेरुपपत्तिः । इदं तु बोध्यम् । मूलाज्ञानाकाराप्यविद्यावृत्तिस्सुषुप्ताववश्यं वाच्या । प्रलयान्यकाले सर्वदैव तत्स्वीकारात् । 'एतावत्कालं मूढोऽहमास' मिति नानाविषयाविशेषितरूपेणाप्यज्ञानस्य जागराद्यकाले तत्त्वज्ञानकाले च स्मरणात् । एवञ्च मनोऽवच्छिन्नचितः स्वप्नाधिष्ठानत्वपक्षेऽप्युक्तस्मरणोपपत्तिरिति । नन्वज्ञानविशिष्टसाक्षिविषयिका सुखाभिन्नसाक्षिविषयिका च वृत्तिः कुतो नोक्ता ? तत्राह—नैकेति । विशिष्टवृत्तिः—अज्ञानादिविशिष्टसाक्षात्कारवृत्तिः । अहङ्काराभावादिति । तथा च संसर्गविषयकवृत्तौ अहङ्कारत्वेन हेतुता । सा च हेतुता निमित्ततया कार्यसहभावेनैवेति नाहङ्कारलयोत्पत्तिकालेऽपि विशिष्टविषयकवृत्त्युत्पत्तिः । अहङ्कारत्वं च

नारायणी ।

त्वङ्मनोयोगाभावेऽपि न सुषुप्तावनुभवाभावः साधयितुं शक्यः, त्वङ्मनोयोगस्य प्रमाणजन्यज्ञानं प्रत्येव हेतुत्वाङ्गीकारादिति सूचितम् । त्रयं—निर्विकल्पवृत्तित्रयम् । ननु लाघवात्त्रिविषयसंसर्गावगाह्येक एव प्रतियोगी क्रियतां तत्राह—अहङ्कारेति ।

(१) आत्मानं गौरं मनुष्यमिति घपुस्तके ।

वप्रसङ्गाच्च। अत एव वृत्तिरूपस्योपलम्भस्याभावान्न

न्यायरत्नावली।

स्थूलावस्थमनस्त्वम्, (१)अहमाकाराविद्यावृत्तित्वं वा। तार्किकादिमते तु निर्विकल्पकस्यापि सुषुप्तावस्वीकारात् जन्यज्ञानमात्रे त्वङ्मनोयोगस्य हेतुत्वम्। नन्वस्थाज्ञानस्यैवाज्ञानसाक्षिणोस्संसर्गविषयकत्वं स्वीकृत्य तादृशसंसर्गभानमुपपाद्यताम्, किमहङ्कारहेतुतयेति चेन्न। तावतापि संसर्गाकारवृत्तेर्वारयितुमशक्यत्वात्, सुषुप्तिपूर्वक्षणे लिङ्गपरामर्शादिसत्त्वे संसर्गानुमित्यादेर्दुर्वारत्वाच्च। अत एवाह—सुषुप्त्यभावप्रसङ्गादिति। सुषुप्तौ संसर्गाकारवृत्तिस्वीकारे सुषुप्त्यभावप्रसङ्गात्तादृशवृत्तावहङ्कारहेतुताकल्पनात् तादृशहेत्वभावात्तादृशवृत्त्यभाव इति समुदायार्थः। न च निर्विकल्पकाविद्यावृत्तेस्संस्कारतापन्नमन आदाविवाज्ञानसंसर्गादावप्यविद्यावृत्त्युत्पत्तिवारणमिति वाच्यम्। जागरस्वप्नयोरज्ञानादिसंसर्गविषयिकाया 'न जानामि' इत्यादिवृत्तेरुत्पत्त्या तत्सामग्र्याश्चाज्ञानादिरूपायाः सुषुप्तावपि तदापत्तेः। संस्कारतापन्नमनआदौ तु संसर्गविषयकानुमित्यादिकमहङ्कारहेतुकमेव जाग्रदादिवृत्तेरुत्पत्तिकाले जायते, नाविद्यावृत्तिरिति वैषम्यम्। वृत्तीत्यादि। तथा च वृत्तिरूपः कारणोपलम्भो लक्षणे निवेश्य

नारायणी।

स्थूलावस्थस्यान्तःकरणसंसर्गस्याभावाच्च नेकाहमर्थविशेष्यकसुखाभिन्नस्वापप्रकारकानुभवमित्यर्थः। लाघवात्सप्रकारकवृत्तिमात्रेऽहङ्कारस्य हेतुत्वकल्पनादिति भावः। अस्त्वज्ञानवदहङ्कारोऽपि तत्रेत्यत आह—सुषुप्त्यभावेति। बाह्यार्थविषयकवृत्त्यन्तरस्यापि तत्राहङ्कारसत्त्वेन सम्भवादिति भावः। कारणात्मनावस्थितिः सुषुप्तिरिति लक्षणस्य प्रलयेऽतिव्याप्तावपि कारणमात्रोपलम्भः सुषुप्तिरिति लक्षणस्य नातिव्याप्तिरित्याह—वृत्तिरूपस्येति। एतेन साक्षिरूपस्योपलम्भस्य तत्र सत्त्वेऽपि नातिव्याप्तितादवस्थ्यम्। लक्षणे उपलम्भपदस्य वृत्तिपरत्वादिति

(१) अहमाकारेति द्वितीयं लक्षणं नास्ति घपुस्तके।

प्रलयेऽतिव्याप्तिः। तत्र तत्कल्पनाबीजाभावात्। इह च 'सुखमहमस्वाप्सं न किञ्चिदवेदिषमि'ति सुप्तोत्थितस्य परामर्शात्। अननुभवे च परामर्शानुपपत्तेः। अन्तःकरणोपरागकालीनानुभवजन्यत्वाभावाच्च न तत्तोल्लेखा-

न्यायरत्नावली।

इति भावः। इह-सुषुप्तौ। परामर्शात्-स्मरणात्। अननुभवे-वृत्त्यनुत्पादे। ज्ञानसूक्ष्मावस्थारूपसंस्काराभावादिति शेषः। अन्तःकरणेति। अहङ्कारेत्यर्थः। जन्यत्वाभावात्तत्तोल्लेखाभावः। तस्मिन् सत्यपि न स्मरणत्वानुपपत्तिरित्यर्थः। अहङ्काराभावेन कालदेशविशिष्टरूपेणाज्ञानादेरननुभवात्तेन रूपेण न स्मरणम्, किन्तु केवलाज्ञानत्वादिविशिष्टरूपणेति भावः। (१)ननु सौषुप्ता-

नारायणी।

ज्ञापितम्। अविद्यारूपकारणसत्त्वे वृत्तिः कथं नेत्यत आह—तत्कल्पनेति। वृतिकल्पने, बीजाभावात्-अनुमापकहेत्वभावात्, फलानुसारेणादृष्टादिघटिता सामग्री कल्प्यते 'आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप' इति न्यायात्, तत्र च फलानुपलब्धेर्नादृष्टादिकं न वा तज्जन्यानुभवः कल्प्यतेऽतोऽविद्यायास्तत्र सत्त्वेऽपि न वृत्तिप्रसङ्ग इति संक्षेपः। ततः सुषुप्तौ वैलक्षण्यमाह—इहेति। इह-सुषुप्तौ। सुखमिति। स्वापो नाम मनोलयसहितमज्ञानम्। धात्वर्थः क्रिया सुखं नामार्थः तयोश्च स्तोकः पाक इत्यादाविवाभेदेन स्वापस्य चाख्यातार्थे तस्य चाहमर्थे लुङर्थस्यातीतत्वस्य धात्वर्थे स्वापेऽन्वयात्, सुखाभिन्नातीतस्वापवानहमित्यर्थः। सुखस्वापयोरभेदस्तु व्यङ्ग्यव्यञ्जकभावनिबन्धनो बोध्यः। न किञ्चिदिति। न किमपि ज्ञातवान् सकलपदार्थाज्ञानवानित्यर्थः। अत्रोभयत्रातीतत्वांशस्याधिकस्य भानं तु 'सा गङ्गा मया दृष्टे'त्यादाविवाऽसंसर्गाऽग्रहादित्यन्यत्र विस्तरः। परामर्शात्-स्मरणात्। अननुभवे-अनुभवाभावे, परामर्शानुपपत्तेः-स्मरणासम्भवात्। ज्ञानसूक्ष्मावस्थारूपसंस्काराभावादिति शेषः। स घट इत्याद्याकारस्यैव स्मरणस्योपलम्भात् प्रकृते विना तत्तोल्लेखं कथं स्मृतित्वं तत्राह—अन्तरिति। अन्तःकरणाश्रितत्वरूपो य उपरागः सम्बन्धस्तत्काली-

(१) अत एव स्मरणे तत्तोल्लेखानियम इत्याह—स्मरणेति। इति पाठश्छपुस्तके।

न्यायरत्नावली।

नुभवे यद्यज्ञानांशे देशादिवैशिष्ट्यं न भाति अहङ्काररूपकारणाभावात्तर्हि सविषयकत्वाज्ञानत्वयोरपि वैशिष्ट्यं तत्र न भायात्, इष्टापत्तौ च न किञ्चिदवेदिषमिति स्मृतौ तदुल्लेखानुपपत्तिः, उक्तवैशिष्ट्यांशे न स्मृतित्वं किन्त्वनुभवत्वमित्यस्याद्वैतसिध्युक्तस्य स्वीकारेऽपि अवस्थाज्ञानाकारा वृत्तिरिति मूलासङ्गतिः, स्मृतिकाले स्मर्यमाणस्यावस्थाज्ञानस्यो(१)च्छिन्नत्वेन तत्रोक्तवैशिष्ट्यस्य साक्षिणो भानासम्भवादिति चेन्न। यथाऽभावस्य प्रतियोग्यनुयोगिविशिष्टत्वाभावत्वरूपाभ्यामेव ज्ञानस्य सविषयकत्वज्ञानत्वाभ्यामेव च प्रत्यक्षे भानं तथैवाज्ञानस्य सविषयकत्वाज्ञानत्वाभ्यामेव प्रत्यक्षे भानं न तु शुद्धाज्ञानस्य, तयोरिव तस्यापि निर्विकल्पकावेद्यत्वात्। किञ्च तदुभयरूपविशिष्टत्वेनाज्ञानस्मृतिः तादृशीमेव स्वकारणीभूतामविद्यावृत्तिं(२) कल्पयति। एवं चाज्ञानत्वादिसंसर्गान्यसंसर्गविषयकवृत्तावेवाहङ्कारस्य हेतुत्वं कल्प्यम्। ननु ज्ञानस्य प्रत्यक्षे सविषयकत्वसप्रकारकत्वनियमो युक्तः, विषयस्य पूर्वमुपस्थितत्वात्। ज्ञानत्वप्रकारकत्वनियमस्त्वयुक्तः, तस्य पूर्वमनुपस्थितत्वात्। अत एव सविषयकत्वांशे सविकल्पकं ज्ञानत्वांशे निर्विकल्पकं नृसिंहाकारं ज्ञानस्य प्रत्य-

नारायणी।

नेत्यर्थः। जन्यत्वाभावात्ततोल्लेखाभावस्तस्मिन्सत्यपि न स्मरणत्वानुपपत्तिरित्यर्थः। सुषुप्तावहङ्कारस्याभावाद्देशकालविशिष्टरूपेणाज्ञानादेरननुभवान्न तेन रूपेण स्मृतिः, किन्तु केवलाज्ञानत्वादिनैव, तथा च यस्य कालादिविशिष्टरूपेणानुभवस्तस्यैव तद्रूपेण स्मृतिरिति भावः। एतेन जाग्रति तत्तादेरस्मरणेऽपि परमते सुषुप्तौ न निर्विकल्पभावसिद्धिः। तन्मते सप्रकारकत्वेनैव स्मृत्यनुभवयोः कार्यकारणभावात्, तत्तादिप्रकारकस्मरणस्य स्मरणाऽहेतुनिर्विकल्पकाभावासाधकत्वादित्यपि सूचितम्। ननु प्रमाणजन्यसप्रकारकज्ञानं प्रत्येव मनसो हेतुत्व-

(१)—ज्ञानस्याभिन्नत्वेनेति गपुस्तके।　　(२)—विद्यास्मृतिमिति गपुस्तके।

भावेऽपि स्मरणत्वानुपपत्तिः। स्मरणे तत्तोल्लेखनियमाभावाच्च जाग्रद्दशायामस्वाप्समित्यनुभवानुपपत्तेः

न्यायरत्नावली।

क्षं नव्यतार्किकैरुच्यते इति चेन्न। ज्ञानस्योत्पत्त्युत्तरं प्रत्यक्षतामते (१)हि तादृशयुक्तत्वायुक्तत्वविचारः न तु तस्य साक्षिवेद्यत्वमते पूर्वानुपस्थितस्यापि ज्ञानत्वादेरपि भानस्वीकारादिति ध्येयम्। (२)स्मरणेति। यस्य कालादिविशिष्टरूपेणानुभवस्तस्यैव तद्रूपेण स्मृतिरिति भावः। ननु सुषुप्तौ तादृशवृत्त्यभावेऽपि जाग्रत्काल एव 'सुखमहमस्वाप्समि'त्यनुभवः कल्प्यताम्, तत्राह—जाग्रदित्यादि। ननु जागरे सुषुप्तेः प्रत्यक्षं मास्तु,

नारायणी।

:स्य व्यवस्थापयिष्यमाणत्वात्परिभाषितप्रमाणाजन्ययोराविद्यकयोः स्वापानुभवस्मृत्योस्तत्ताप्रकारकत्वे बाधकाभावात्कथमतथाभूतस्य स्मृतित्वं तत्राह— स्मरण इति। स्मृतित्वावच्छेदेनेत्यर्थः। तत्तेति। तत्ताप्रकारकत्वनियमाभावात् चिन्तितार्थगोचरस्मृतौ व्यभिचारात् तत्र चिन्तयैव पश्चात्तज्ज्ञानदर्शनादिति भावः। तथा चात्र विशिष्टसंस्कारजन्यत्वाङ्गीकारेऽपि तत्रैवोद्बोधकाऽलाभेन तत्ताद्यभानं युक्तमतो नैतावता सुषुप्तावनुभवाभावः साधयितुं योग्यः, ज्ञानस्य स्मृतिजनकत्वानियमेन स्मर्यमाणत्वस्य व्यभिचारित्वादिति संक्षेपः।(३)

प्रेमानुपाधिरसुखात्मनि नोपलब्धः स प्रत्यगात्मनि क्रमेरपि नित्यसिद्धः।
प्रेयः श्रुतेरपि ततः सुखतानुमानं नैयायिकोपि न हृगात्मनि निह्नुवीत॥
प्राज्ञे सुखं समनुभूय समुत्थितः सन्सर्वप्रकारविषयप्रतिपत्तिशून्ये।
सुप्तोहमत्र सुखमित्यनुसन्दधानः सर्वोपि जन्तुरवगच्छति तस्य सौख्यम्॥

ननु सुषुप्तौ मनस उपरमात्तादृशवृत्त्यभावेऽपि जाग्रत्काल एव 'सुखमहमस्वाप्समि'त्यनुभवः कल्प्यतां? तत्राह—जाग्रदिति। अवस्था-

(१)—प्रत्यक्षतापत्तेर्हि तादृशयुक्तत्वायुक्तत्वविचारो न युक्तः तस्य साक्षिवेद्यत्वमते स्ववेद्यत्वमते—वा पूर्वेत्यादिः घपुस्तके पाठः।

(२) अत एव स्मरणे तत्तोल्लेखानियम इत्याह स्मरणेति। इति घपुस्तके।

(३) अधस्तनीये संक्षेपशारीरकीयपद्ये कपुस्तकेऽत्रैवोपलब्धेपि सम्बन्धप्रदर्शकशब्दाभावादिति संक्षेप इत्युक्तेश्च निरुपयोगिनीति ज्ञेयम्।

लिङ्गाभावेनाश्रयासिद्धया चानुमानस्यासम्भवात्। अ-

न्यायरत्नावली।

अवस्थाज्ञानं मनोलयश्चेति द्वयं हि सुषुप्तिः, तत्राद्यं जागरकालीनधिया नष्टत्वात्, द्वितीयं चायोग्यत्वात् नष्टत्वाच्च न प्रत्यक्षम्, अनुमितिस्तु स्यात्तत्राह-लिङ्गेत्यादि। 'स्वप्नजागरणयोर्मध्यकालस्सुषुप्तिमान् ज्ञानसामान्याभावात्, जन्यज्ञानसामान्याभावाद्वे'त्यनुमानं न सम्भवति। आद्यो हि न हेतुः। असिद्धत्वात्, पक्षे ज्ञातुमशक्यत्वाच्च। अत एव न द्वितीयः। न च तत्कालविशिष्टरूपेण कस्याप्यस्मृतेः तत्काले जन्यज्ञानसामान्याभावोऽनुमेयः यदा ह्यनुभवो जायते तदा तत्कालविशिष्टं स्वविषयं संगृह्णाति, ततश्च तद्रूपेण स्मृतेरुत्पत्तिस्स्यात्, तदभावाच्च तादृशज्ञानाभाव इत्यनुमानसम्भव इति वाच्यम्। ज्ञानस्य स्मृतिजनकत्वानियमात्। तस्माल्लिङ्गासम्भवः, आश्रयासिद्धिश्च। तत्कालस्यानुपस्थितत्वात्। ननु स्मृतिरपि न सम्भवति। 'अहमस्वाप्समि'ति स्मर्यमाणाहङ्कारस्य पूर्वमननुभवात् तत्राह—अहङ्कार इत्यादि। अनुभूयते-साक्षिणा विषयीक्रियते। ननु तथाप्यज्ञानादि-

नारायणी।

ऽज्ञानं मनोलयश्च सुषुप्तिः आद्यस्याधिष्ठानधिया नष्टत्वात्, द्वितीयस्यायोग्यत्वादिति भावः। ननु मास्तु प्रत्यक्षम्,'स्वप्नजागरयोर्मध्यकालः सुषुप्तिमान् ज्ञानसामान्याभावात्, जन्यज्ञानसामान्याभावाद्वे' त्यनुमानं स्यादित्यत आह—लिङ्गेति। निरुक्तहेतुद्वयस्याभासत्वेनेत्यर्थः। आश्रयेति। निरुक्तकालस्यानुपस्थितत्वात्, तादृशकालरूपपक्षस्यानिर्णयेन। तथाहि नाद्यो हेतुः। निरुक्तरीत्या तस्यासिद्धेः, पक्षे ज्ञातुमशक्यत्वाच्च। नापि द्वितीयः। तस्याप्यसिद्धेः। न च जन्यज्ञानसामग्र्यभावेन तत्सिद्धिः। अन्योन्याश्रयापत्तेः। जन्यज्ञानसामान्याभावनिश्चयेन तत्सामग्र्यभावकल्पनं सामग्र्यभावनिश्चयेन च जन्यज्ञानाभावकल्पनमिति। एतेन 'न किञ्चिदवेदिषमि'ति ज्ञानाभावानुमितिरित्यपि निराकृतम्। अनुमानस्य निरुक्तरीत्याऽसम्भवादित्यन्यत्र विस्तरः। ननु स्मृतिरपि न सम्भवति, स्मर्यमाणाहङ्कारस्य सुषुप्तावननुभवात्तत्राह—अहङ्कार इति। उत्थानस-

हङ्कारस्तूत्थानसमय एवानुभूयते । सुषुप्तौ लीनत्वेन तस्याननुभूतत्वात् स्मरणानुपपत्तेः । मुखप्रतिबिम्बाश्रये दर्पणे जपाकुसुमलौहित्याध्यासेन 'रक्तं मुखमि'ति प्रतीतिवदहङ्काराश्रयतया साक्षिचैतन्यस्य स्मरणाश्रयत्वादहमस्वाप्समिति सामानाधिकरण्यप्रतीतिः, न पुन 'रहं सुखी'तिवदाश्रयतया । स्मृतिसंशयविपर्ययाणां सा-

न्यायरत्नावली ।

स्मृत्याश्रयतयाऽहङ्कारस्य साक्षिभास्यत्वानुपपत्तिः अज्ञानाद्यनुभवानाश्रयत्वात् तत्राह—मुखेत्यादि । रक्तं मुखमिति प्रतीतिवत्-'अत्र रक्तं मुखमि'ति प्रतीतावेकत्र दर्पणे रक्तरूपमुखयोर्भानवत् । यत्र मुखं दर्पणस्थं पूर्वमदृष्ट्वा रक्तरूपस्य दर्पणे आरोपः, तत्र मुखे न रक्तत्वारोपसम्भवः,अधिष्ठानीभूतमुखस्य पूर्वं ज्ञानाभावात्तादृशस्थलं दृष्टान्त इति भावः । आश्रयतयेति । अहङ्कारस्य स्मरणाश्रयतयेत्यर्थः । प्रतीतिरित्यनुषज्यते । साक्षिचैतन्याश्रयत्वात्-अविद्योपहितचिदाश्रयत्वात् । ननु प्रमायामिव स्मृत्यादा-

नारायणी ।

मये—जाग्रद्दशायाम्, अनुभूयते—साक्षिणा विषयीक्रियते, तथाच नाहङ्कारांशे स्मृतिः, तत्र हेतुमाह—सुषुप्ताविति । लीनत्वेन—स्थूलात्मनाऽसत्त्वेन, तस्य—अहङ्कारस्य, स्मरणानुपपत्तेः—अहमित्यंशस्मृत्यसम्भवात् । ननु सुषुप्तावहङ्काराभावश्चेत्कथमहमस्वाप्समिति स्वापाश्रयत्वेन प्रतीतिः तत्राह—मुखेति । रक्तं मुखमिति प्रतीतावेकत्र दर्पणे रक्तरूपमुखयोर्भानात्, यत्र मुखं दर्पणस्थं पूर्वमदृष्ट्वा रक्तरूपस्य मुखे आरोपस्तत्र मुखे न रक्तारोपसम्भवोऽधिष्ठानीभूतस्य मुखस्य पूर्वं ज्ञानाभावात्तादृशस्थलं दृष्टान्त इति भावः । सामानाधिकरण्येन एकधर्मिणि तदुभयसम्बन्धावगाहिनी, प्रतीतिः—स्मृतिः सुखीतिवत्—अहंपदार्थे सुखवत्त्वावगाहिप्रत्यक्षवत्, आश्रयतया—स्वापाश्रयत्वावगाहिनी । ननु साक्षिचैतन्याश्रिता स्मृतिः साक्षिणि तदुभयसामानाधिकरण्यमात्रं गृह्णाति नतु तयोराश्रयाश्रयीभावमपीत्युक्तं तन्न युक्तं स्मृतेरहमर्था-

क्षिचैतन्याश्रयत्वनियमादहङ्कारस्य च प्रमाणजन्यज्ञाना-श्रयत्वानियमात्, प्रमात्वेनैव तत्कार्यतावच्छेदात्, अप्रमा-त्वावच्छेदेन च अविद्याया एव कारणत्वात्। अत एवाना-प्तवाक्यादिजन्यपरोक्षविभ्रमोऽप्यविद्यावृतिरेवेत्यभ्युप-

न्यायरत्नावली।

वप्यहङ्कार आश्रयस्स्यात् तत्राह—अहङ्कारस्येत्यादि। ज्ञानाश्र-यत्वात्—ज्ञानमात्राश्रयत्वात्। तत्र हेतुः—प्रमात्वेनेत्यादि। तत्कार्यतेति। अहङ्काररूपपरिणामिकार्यतेत्यर्थः। अप्रमात्वेति। स्मृतिसंशयविपर्ययसाधारणाप्रमात्वेत्यर्थः। कारणत्वात्—परिणा-मित्वात्। प्रमां प्रत्यप्यविद्यायाः परिणामित्वम्, कार्यमात्रं प्रति तत्स्वीकारात्; अप्रमायां त्वविद्याया एव, नाहङ्कारस्येति ज्ञा-पनार्थमेवकार उक्तः। स्मृतेरज्ञाताविषयकत्वात् संशयविपर्ययपो-

नारायणी।

श्रितत्वानुभवात्तत्राह—स्मृतीति। साक्षीति। अविद्योपहितचिदाश्रितत्व-नियमात्। किमित्ययं नियमस्तत्राह—प्रमाणेति। प्रमाणमात्रजन्यज्ञानाश्र-यत्वनियमात्। तत्र हेतुः—प्रमात्वेनेति। तत्कार्यता—अहङ्कारकार्यता। एवकारार्थमाह—अप्रमात्वेति। स्मृतिसंशयविपर्ययसाधारणाप्रमात्वे-नेत्यर्थः। कारणत्वात्—परिणामिकारणत्वात्, प्रमां प्रत्य(प्य)विद्यायाः परिणामित्वम्, कार्यमात्रं प्रति तत्स्वीकारात्, अप्रमां प्रति त्वविद्याया एव, नाहङ्कारस्येति ज्ञापनाय एवकारः। स्मृतेर-ज्ञातविषयकत्वाभावादप्रमात्वं संशयविपर्यासयोर्बाधितार्थकत्वात् (अप्रमात्वमित्यर्थः)। ननु नाप्रमामात्रं प्रत्यविद्याया हेतुत्वं यु-क्तम्, अनाप्तवाक्यादिना बोधे व्यभिचारात्। तत्र पदज्ञानादि-रूपबहिःप्रमा(१)करणकमनोवृत्तेरेवौचित्यादित्याशङ्क्य कार्यकारणभा-वकल्पनस्य लाघवगौरवतर्काधीनत्वात्, तत्र सामग्रीसत्त्वेऽपि नहि प्रमाकरणिका मनोवृत्तिः, किन्त्वविद्यावृत्तिरेवेत्यतिदेशेनाह—अत एवेति।

(१) प्रमाणकरणिकेति खपुस्तके। एवमग्रेपि 'सामग्रीसत्त्वेपि न बहिःप्रमा-णकरणिका' इति पाठः। साधुरयम्।

गमो वेदान्तविदाम्। तत्रान्तःकरणवृत्तिजनकसामग्रीसम्भवेऽपि प्रमात्वाभावा(१)वरोधेनान्तःकरणस्यासामर्थ्यात्। नामादिषु ब्रह्माध्यासस्तु इच्छाधीनतया भ्रमप्रमाविलक्षणा मनोवृत्तिरेव कामादिवत्, तदुक्तम्—'अत एव चो-

न्यायरत्नावली।

बाधितार्थकत्वादप्रमात्वम्। तत्रान्तःकरणेति। शब्दज्ञानपदार्थोपस्थितिरित्यादिसामग्र्या यथा मनोवृत्तिश्शाब्दप्रमारूपा जायते, तथा शाब्दभ्रमरूपापि सम्भवति, परन्तु भ्रमं प्रत्यविद्याया एव परिणामित्वात् न मनसः परिणामित्वमिति भावः। ननु नामादौ ब्रह्मैक्योपासना न प्रमा, बाधितविषयकत्वात्; नापि भ्रमः, नामादौ ब्रह्मभेदस्य ज्ञातत्वेऽपि तदुत्पत्तेः; तथा च तत्राविद्याया इव मनसोऽपि परिणामित्वसम्भव इत्यत आह—नामादीति। ब्रह्माध्यासः—ब्रह्मतादात्म्याकारवृत्तिः। कामादिवत्—इच्छाद्वेषादिवत्। चोदनाजन्यत्वात्—'नाम ब्रह्मेत्युपासीते'त्यादिविधिवाक्यार्थस्य इष्टसाधनत्वस्य ज्ञानाधीनेच्छाजन्य-

नारायणी।

प्रमां प्रत्येव मनसः परिणामित्वाभ्युपगमादेव। तत्र-अनाप्तवाक्यादौ, सामग्रीसम्भवेऽपि-प्रमायामिव शब्दज्ञानतज्जन्यपदार्थोपस्थितिसम्भवेऽपि। अपराधेनेति। बाधितविषयत्वादिति भावः। अन्तरिति। लाघवादप्रमात्वावच्छिन्नं प्रत्यविद्यायाः कारणत्वकल्पनाद् भ्रमं प्रति मनसः कारणत्वायोगादिति भावः। ननु प्रमां प्रति मनसः अप्रमां प्रत्यविद्यायाः कारणत्वे नामादौ ब्रह्मैक्योपासनावृत्तिराकस्मिकी स्यात्, तादृशवृत्तेर्भ्रमप्रमाबहिर्भूतत्वात्। तथाहि सा न प्रमा, विषयबाधात्। नापि भ्रमः, नामादौ ब्रह्मभेदस्यानावृत्तत्वेऽपि तदुपपत्तेः, भेदग्रहपूर्वकत्वादिति यावत्। तथा च नाविद्या न वा मनसस्तत्र परिणामिता सम्भवतीत्यत आह—नामादिष्विति। इच्छेति। बाधकालीनेच्छेत्यर्थः। ब्रह्माध्यासः-ब्रह्मैक्याकारवृत्तिः; कामादिवत्-इच्छाद्वेषादिवत्, चोदनाजन्यत्वात्-'नाम ब्रह्मेत्युपासीते'त्यादिविधिवाक्यार्थस्येष्टसाधनत्वज्ञानाधीनेच्छाजन्यप्रयत्नसाध्य-

(१)—भावापराधेनेति कपुस्तके।

दनाजन्यत्वान्मानसी क्रियैव सा । न ज्ञान'मिति । एतेन तर्कस्यापि मनोवृत्तित्वं व्याख्यातम् । व्याप्यारोपेण व्यापकप्रसञ्जनात्मकस्य तर्कस्येच्छाधीनतया भ्रमप्रमाविलक्षणत्वादिति । अत एव मनननिदिध्यासनसहिते श्रवणाख्ये

न्यायरत्नावली ।

प्रयत्नसाध्यत्वात् । न ज्ञानमिति । ज्ञानस्योक्तप्रयत्नं विनापि दुर्गन्धादिविषयकस्योत्पत्तेः प्रमाणव्यापाराभावे उक्तप्रयत्नसत्त्वेऽप्यनुत्पादान्नोक्तप्रयत्नजन्यता । (१)अत एव 'पत्न्याज्यमवेक्षेत' इत्यादौ ज्ञानानुकूलव्यापारे विधिरिति भावः । व्याप्येत्यादि । 'वह्निव्याप्यधूमवान् ह्रद' इत्याद्यारोपजन्यस्य 'ह्रदो वह्निमान् स्यादि'त्याकारकपरिणामस्य इच्छाधीनत्वेन (२)भ्रमत्वप्रमात्वे इत्यर्थः । निदिध्यासनसहितेति । निदिध्यासनरूपफलोपकार्यङ्गसहितेत्यर्थः । साक्षात्कारमुद्दिश्य मननादिसहितं श्रवणं

नारायणी ।

त्वात् । न ज्ञानमिति । ज्ञानस्योक्तप्रयत्नं विनापि दुर्गन्धादिविषयकस्योत्पत्तेः, प्रमाणव्यापाराभावे उक्तप्रयत्नसत्त्वेपि अनुत्पादान्नोक्तप्रयत्नसाध्यता, अत एव 'पत्न्याज्यमवेक्षेत' इत्यादौ ज्ञानानुकूलव्यापारे विधिरिति भावः । श्रवणादिषु विषयत्वं समर्थयितुं दर्शितनियमफलं तर्केऽतिदिशति—एतेनेति । भ्रमप्रमाबहिर्भावनियमप्रदर्शनेनेत्यर्थः । मनोवृत्तित्वम्—इच्छादेरिव ज्ञानान्यपरिणामविशेषरूपत्वम्, व्याख्यातं—सूचितम् । स्पष्टयति—व्याप्येत्यादि । व्याप्यारोपे—ह्रदो यदि वह्निव्याप्यधूमवान् स्यादित्यारोपे, व्यापकप्रसञ्जनात्मकस्य—ह्रदो वह्निमान्स्यादित्याकारकपरिणामविशेषस्य, इच्छाधीनतया—आपाद्यव्यतिरेकनिश्चयकालीनेच्छाजन्यत्वेन । भ्रमेति । भ्रमत्वप्रमात्वशून्यत्वात्, अत एव—तर्कस्य भ्रमप्रमाबहिर्भूतवृत्तित्वसमर्थनादेव । मननेति । मनननिदिध्यासनरूपफलोपकार्यङ्गसहिते । सहित इत्यनेन मनननिदिध्यासनयोरङ्गत्वमात्रं श्रवणस्य प्राधान्यं सूचितम्, तत्र बीजमाह—श्रवणाख्य इति । तत्त्वमस्यादिवाक्या-

(१) अत एव यत्नाजन्यमवेक्षेत इति पाठो घपुस्तके ।

(२) भ्रमत्वप्रमात्वशून्यत्वादित्यर्थ इति घपुस्तके ।

न्यायरत्नावली।

विधीयते। तत्र श्रवणं नाम 'तत्त्वमस्यादिवाक्यं यदि ब्रह्मात्मैक्यपरं न स्यात्, तदोपक्रमोपसंहारादिभिरपि अद्वैतब्रह्मबोधकं न स्यादि'त्यादितर्करूपम्। तस्य च प्रमाणीभूतवाक्यतात्पर्यविषयकत्वेन प्राधान्यम्। ब्रह्मात्मैक्यसिद्ध्यनुकूलतर्कादयोऽपि श्रवणेऽन्तर्भवन्ति। मननं तु वाक्यजन्यज्ञानस्य परोक्षनिश्चयभावसम्पादकस्तर्कः। निदिध्यासनमपरोक्षनिश्चयत्वसम्पादकस्तर्कः। 'तत्त्वमस्यादिवाक्यजं ज्ञानं यदि परोक्षं स्यात्, तर्हि अपरोक्षात्मविषयकं न स्यादि'त्यादिरूपः। तयोस्तत्सम्पादनरूपफलोपकारकारित्वेन श्रवणाङ्गत्वम्। तदसम्पादने हि श्रवणफलीभूतं वाक्य-

नारायणी।

नामद्वैततात्पर्यानुकूलमानसक्रियारूपव्यापारविशेषेत्यर्थः। आत्मज्ञानस्योपनिषत्प्रमाणमात्राधीनत्वान्न तत्र विधिर्युक्तः, किन्तु श्रवणादावेव, तादृशं व्यापारं विना प्रतिबन्धानिवृत्तेः पुरुषार्थासिद्धेः, प्रतिबन्धश्च (१)प्रमाणप्रमेययोर्गताऽसम्भावना विपरीतभावना चेति। तत्राद्या क्रियार्थत्वादितिहेत्वाभासैः ब्रह्मात्मैक्ये वेदान्तानां प्रामाण्यं न सम्भवतीत्याकारकश्चित्तदोषः, द्वितीया वेदान्तानां स्वार्थपरत्वसम्भवेऽपि ब्रह्मात्मैक्यं कर्तृत्वादिप्रत्यक्षविरोधात् सर्वथा नोपपद्यत इत्येवमाकारकश्चित्तदोषः, तृतीया अनादिकालात्प्रवृत्तदेहात्मज्ञानजनितसंस्कारप्रचयश्चित्तदोषः। तत्राद्या श्रवणेन, द्वितीया मननेन, तृतीया निदिध्यासनेनापसार्यते। तत्र श्रवणं वेदान्तपदवाक्यशक्तितात्पर्यावधारणम्। मननम्—अभेदाभावेऽनिष्टप्रसञ्जनरूपस्तर्कः। 'यदि तयोरभेदो न स्यात्तदा समस्वभावतया प्रतिपत्तिर्न स्यादि'ति। निदिध्यासनं ब्रह्मात्मैक्यवृत्तीनां पौनःपुन्यम्, अत एव एतेषु श्रवणं प्रधानम्, तद्विशिष्टस्यैव शब्दस्य तात्पर्यभ्रमसंशयोत्तरशाब्दबोधे हेतुत्वादित्यन्यत्र विस्तरः। ननु श्रवणं नाम श्रुतिकरणकशाब्दबोधः, मननमनुमितिः, निदिध्यासनम्-धारावाहिकात्मगोचरवृत्तिः—

(१) प्रमाणगतासम्भावना प्रमेयगताऽसम्भावना विपरीतभावना चेति खपुस्तके।

व्य' इत्यादिविधिरप्युपपद्यते। तस्य चतुर्विधान्वयव्यतिरेकादितर्करूपत्वात्। दृग्दृश्यान्वयव्यतिरेकः, साक्षिसा-

न्यायरत्नावली।

जज्ञानं नापरोक्षभ्रमहेत्वज्ञानस्य निवर्तकम्। अथवा ब्रह्मात्मैक्यसिद्ध्यनुकूलस्तर्को मननम्। निदिध्यासनं तु श्रवणमननयोरैकाग्र्यं पौनःपुन्यरूपम्। तयोश्चोक्तैक्यविषयकासम्भावनाविपरीतभावनाबुद्धिनिरासद्वारा साक्षात्काररूपफलाप्रामाण्यधीनिरासकत्वेन उपकारित्वात् श्रवणाङ्गत्वम्। आद्यकल्पो विवरणे, द्वितीयकल्पस्संक्षेपशारीकादावुक्तः। दृग्दृश्यान्वयव्यतिरेक इत्यादि। दृशि दृश्यानां तादात्म्यमन्वयः। तस्य च निरूपणासम्भवात् दृशि दृश्यानि कल्पितानीति दृशि दृश्यानामन्वयेनैव व्यतिरेकस्सिध्यतीत्यर्थः। 'स्वप्रकाशदृशस्तादात्म्येन सिद्धं जडं यदि सत्यं स्यात्, तदा जडत्वादिना स्वप्रकाशादत्यन्तविलक्षणं स्यादि'ति तर्को बोध्यः। एवमग्रेऽपि 'निर्विकारसाक्षितादात्म्येन सिद्धं जडं यदि सत्यं स्यात्, तदा विकारवत् न स्यात्'। 'एवमागमापायशून्यात्मतादात्म्येन सिद्धं दृश्यं यदि सत्यं स्यात्, तदा आगमापायित्वरूपकादाचित्कत्ववन्न स्यात्, 'परमप्रेमास्पदात्मतादात्म्येन प्रतीयमानं यदि सत्यं स्यात्, तदा

नारायणी।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।

इत्यादिना वाक्यकरणकशाब्दबोधादेव श्रवणत्वादिलाभात्। तथा च ज्ञानरूपेषु तेषु कथं विधिरुपपद्यते? तत्राह—चतुर्विधेत्यादि। तस्य—मनननिदिध्यासनसहितस्य श्रवणस्येत्यर्थः। चतुर्विधान्वयव्यतिरेकानेव दर्शयति–दृग्दृश्येति। दृशि दृश्यानामन्वयेन व्यतिरेक इत्यर्थः। अन्वयस्तादात्म्यादिः, तस्य कल्पितत्वात्तत्प्रतियोगिनामनात्मनामन्वयेनैव व्यतिरेकः सिद्ध्यतीति भावः। तथा च स्वप्रकाशदृशस्तादात्म्येनाभातं जडं यदि सत्यं स्यात्तदा जडत्वादिना 'स्वप्रकाशादत्यन्तविलक्षणं न स्यादि'ति तर्को बोध्यः। साक्षीति। साक्षिणि साक्ष्यस्यान्वयेन व्यति-

क्ष्यान्वयव्यतिरेकः, आगमापायितदवध्यन्वयव्यतिरेकः, दुःखिपरमप्रेमास्पदान्वयव्यतिरेक इति (१)समन्वयाध्या-

न्यायरत्नावली।

दुःखसाधनं न स्यात्' 'सद्वस्तुतादात्म्येन प्रतीयमानं पटादिकं यदि सत्यं स्यात् तदा (२)मिथ्याभूतं न स्यादि'ति बोध्यम्। एवं साक्षिणो निर्विकारत्वात् साक्ष्याणां च विकारित्वात् साक्षिणि साक्ष्यस्यान्वयेन व्यतिरेकः सिध्यतीत्यर्थः। एवमागमापायितया उत्पत्तिविनाशवत्त्वरूपया(३) कादाचित्कत्वेन मिथ्यात्वात् सर्वकादाचित्कानामधिष्ठानमात्मा। स हि तेषामवधिः, आगमापायशून्यत्वात्। यथा वृष्टिमतां देशानां वृष्टिशून्या गङ्गाऽवधिरुच्यते, तथा च तेषां तत्र तादात्म्येनानुपपन्नेन व्यतिरेकः। एवं दुःखित्वेनोपलभ्यमानस्याहङ्कारादेः परमप्रेमास्पदात्मभिन्नत्वात् तयोस्तादात्म्यरूपान्वयेनानुपपद्यमानेनात्मन्यहङ्कारादि कल्पितम्। एवं सर्वेषु दृश्येषु मिथो व्यावृत्तेषु भिन्नेषु सद्रूपेणानुवृत्त आत्मा, तस्मात्तत्र तेषामन्वयेन तादात्म्यरूपेण व्यतिरेकस्सिध्यति। यत् येषु व्यावृत्तेषु तादात्म्येनान्वितं तत्र तानि कल्पितानि। यथा रज्जौ मालास-

नारायणी।

रेक इत्यर्थः। व्यतिरेकश्च प्राग्वद् बोध्यः। तर्कश्च-'अधिष्ठानभूतनिर्विकारसाक्षितादात्म्येन भातं जडं यदि सत्यं स्यात् सविकारं न स्यादि'ति। आगमापायीति। आगमापायिनस्तदवधौ उत्पत्तिविनाशधर्मकस्य बाधकधीविषयेऽन्वयेन व्यतिरेक इत्यर्थः। तर्कश्च 'नित्यधर्मितादात्म्येन भातं जडम् यदि सत्यं स्यात्तदोत्पत्तिविनाशि न स्यादि'ति। दुःखीति। दुःखिनः परमप्रेमास्पदेऽन्वयेन व्यतिरेक इत्यर्थः। तर्कश्च 'प्रेमास्पदानन्दतादात्म्येन भातं जडं यदि सत्यं स्यात्तदा

(१) समन्वयाध्याया इत्यन्तः पाठो नास्ति कखपुस्तकयोः।
(२) मिथो व्यावृत्तं नेत्यादि घपुस्तके।
(३)—रूपया सर्वदृश्यानां कादाचित्कत्वमात्मा तु तेषामवधिरागमापायशून्यत्वात् इति घपुस्तके भिन्नः पाठः।

थाविरोधाध्यायसाधनाध्यायफलाध्यायाः । अनुवृत्तव्यावृत्तान्वयव्यतिरेकः पञ्चमः । एतच्च सर्वेषां वेदान्तानुकूलतर्काणां चतुर्लक्षणीमीमांसाप्रतिपादितानामुपल-

न्यायरत्नावली ।

र्णादि यथा वा जातौ व्यक्तय इति भावः । अनुकूलेति ! अनुग्राहकेत्यर्थः । तर्काणामिति । कार्यकारणानन्यत्वादितर्काणामित्यर्थः । चतुर्लक्षणीति । चतुरध्यायीत्यर्थः । प्रतिपादितानामिति । 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यादिसूत्रेषु प्रपञ्चमिथ्यात्वजीवब्रह्मैक्यबोधकवेदान्तानुग्राहकतर्काः प्रतिपादिताः । तथाहि—तदनन्यत्वं तस्य ब्रह्मणः अनन्यत्वं ब्रह्मान्यशून्यत्वम्, वाचारम्भणश्रुतेः । आदिपदोदितश्रुतियुक्तिभ्यः। वाचेत्यादिश्रुतेरयमर्थः । आरम्भणम् आरभ्यमाणं कार्यमात्रं वाचा वाङ्मात्रं मिथ्येति यावत् । अकार्यमप्यविद्यादिकं नाममात्रम् । उभयत्र हेतुगर्भं विशेषणं विकार इति । यतो नाशोत्पत्त्यादिविकृतिमत्, अतो मिथ्येत्यर्थः । कार्यनष्टयोर्हि कदाचिदसत्त्वं वाच्यम्, सर्वदा सत्त्वासम्भवात् । तथा च तदनधिकरणकालस्य तद्गतसत्त्वावच्छेदकत्वासम्भवात् असत्त्वं दुर्वारमिति । अधिष्ठानरूपकारणानन्यत्वं दृश्यमात्रस्य मिथ्यात्वमिति यावत् । तथा च दृश्यमात्रं यदि सत्यं स्यात्, तदा किञ्चित्कालावच्छिन्नेनासत्त्वेन निरूपणानर्हं न

नारायणी ।

दुःखी दुःखसाधनम् च न स्यादि'ति । अनुवृत्तेति । अनुवृत्ते व्यावृत्तस्यान्वयेन व्यतिरेक इत्यर्थः । तर्कश्च 'अनुवृत्ततादात्म्येन प्रतीयमानं जडं यदि सत्यं स्यात्तदा मिथो व्यावृत्तं न स्यादि'त्यादिः बोध्यः । यथा चैतेषां तर्काणां श्रुतिमूलत्वं तथा व्याख्यातमस्माभिर्महद्व्याख्याने । एतच्चेति । पञ्चविधान्वयव्यतिरेकरूपतर्ककथनं चेत्यर्थः । तर्काणां—कार्यकारणानन्यत्वादितर्काणाम् । चतुर्लक्षणीति । चतुरध्यायशारीरकमीमांसेत्यर्थः । प्रतिपादितानां—'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यादिसूत्रैर्विषयपरिशोधकतया सूचितानाम् । आनन्द-

क्षणमित्यभियुक्ताः। विस्तरस्तु वेदान्तकल्पलतिकायामनुसन्धेयः। तदेवं सुषुप्त्यवस्थायामस्त्यानन्दभोगस्तद्भोक्ता च सुषुप्त्यभिमानी प्राज्ञ इत्युच्यते। प्रकर्षेणाज्ञत्वात्तदानीं विशेषावच्छेदाभावेन प्रकृष्टज्ञत्वाद्वा। तदा चान्तःकरणस्य लयेऽपि तत्संस्कारेणावच्छे-

न्यायरत्नावली।

स्यादित्यादितर्का बोध्याः। कल्पलतिकेति। श्रवणादिस्वरूपनिरूपणमुक्तरीत्या तत्र कृतम्। आनन्दभोगः सुखाकारवृत्तिः। भोक्ता आश्रयः। अभिमानी आश्रयः। प्रकर्षेणेति। मूलाज्ञानं सर्वदास्ति। अवस्थाज्ञानमपि सुषुप्ताविति प्रकर्षः। विशेषावच्छेदाभावेन-वृत्तित्रयविषयान्यविषयविशेषविषयकत्वाभावेन। सौषुप्तसाक्षिण इति शेषः। विशेषविषयकत्वस्य दुःखप्रयोजकत्वेन तदभावो ज्ञानस्य प्रकर्षः। प्रज्ञ एव प्राज्ञः। प्रज्ञादिभ्यश्चेत्यनेन स्वार्थेऽणिति भावः। अवच्छेदादिति। मनोऽवच्छिन्नचैतन्यमेव जीव इति पक्षे इति शेषः। अविद्योपहितचैतन्यस्य जीवत्वपक्षे नोक्तप्रसङ्गः। मनोलयेऽप्यविद्ययैव जीवत्वासार्वज्ञ्यादिसम्पादनात्। मनोऽवच्छिन्नस्य जीवत्वे तु मनउच्छेदेन जीवत्वाभावस्स्यात्, ईशाभेदसम्पत्त्या सार्वज्ञ्यापत्तिश्च स्यात्। जीवस्याभावेन तं प्रत्यविद्याऽऽवृणोतीत्यस्य वक्तुमशक्यत्वादिति

नारायणी।

भोगः-सुखाकारा वृत्तिः, भोक्ता-आश्रयः, अभिमानी-अभिमानवान्। प्रकर्षेणेति। मूलाज्ञानं सर्वदास्ति तूलाज्ञानमपि सुषुप्ताविति प्रकर्षः। विशेषावच्छेदाभावेन-वृत्तित्रयविषयान्यविषयविशेषविषयकत्वाभावेन, सौषुप्तसाक्षिण इति शेषः। विषयविशेषविषयकत्वस्य दुःखप्रयोजकत्वेन तदभावो ज्ञानस्य प्रकर्षः, प्रज्ञ एव प्राज्ञ इति। अवच्छेदात् जीवभावात्। ननु यदि न जीवभावनिवृत्तिः तर्हि 'प्राज्ञेनात्मना सम्परिष्वक्त' इत्यादिपरमात्मभावसम्पच्छ्रवणं कथमित्याशङ्क्य न तन्नु-

दान्न जीवाभावप्रसङ्गः, न वा सार्वज्ञ्यापत्तिः। ईशाभेदप्रतिपादनं च शरीरेन्द्रियाद्यभिमानरहितत्वेनोपचारात् तत्संस्कारस्य च निमित्तकारणत्वेन साक्ष्याश्रितकार्योपादानकोटावप्रवेशान्न तद्भेदेऽपि साक्षिभेदः। जागरणे त्वन्तःकरणस्य प्रमात्राश्रितकार्योपादानकोटौ

न्यायरत्नावली।

भावः। ईशाभेदेति। 'प्रजा अहरहर्ब्रह्म गच्छन्त्योऽपि न विन्दन्ती'त्यादिश्रुतेरित्यादिः। गच्छन्त्यः ऐक्येन समाश्रिताः। ननु तदा वृत्तिरूपेण परिणतमनसः संस्कारसत्त्वे तज्जन्यस्मृतिरूपकार्याणां साक्ष्याश्रितत्वात् तादृशसंस्काराणामुक्तस्मृतिहेत्वाविद्यायामिव साक्षिकोटौ निवेशेन तद्भेदेन साक्षिभेदः स्यात्। वार्तिकमते हि साक्षिमात्राश्रितं स्मरणादिकम्, न साक्ष्यनन्तर्गतवस्त्वाश्रितम्। तस्य संस्काराश्रितत्वे तु संस्कारोऽपि साक्ष्यन्तर्गतो वाच्यस्स्यात्, तथा च वक्ष्यमाणवार्तिकविरोधः तत्राह—संस्कारस्येति। निमित्तेति। स्मृतिनिमित्तेत्यर्थः। कार्येति। स्मृ-

नारायणी।

त्त्वं किन्तु गौणमेवेत्याह—ईश्वराभेद इति। उपचारात् 'सिंहो माणवक' इति गौणीलक्षणातः। ननु सुखदुःखव्यवस्थार्थं प्रमातारो भिन्नाः साक्षीत्वेक एवेत्युक्तं तन्न युक्तम्, प्रमातृशरीरप्रविष्टोपाधिभेदेन प्रमातृणामिव साक्षिशरीरप्रविष्टोपाधिभेदेन साक्षिणोऽपि भेदावश्यम्भावात्, तत्राविद्याया इव संस्कारस्यापि स्मृतिव्यवस्थान्यथानुपपत्त्योपाधित्वादित्याशङ्क्य न संस्कारविशिष्टाविद्यात्वेन स्मृतिं प्रत्युपादानता किन्त्वविद्यात्वेनैव, संस्कारस्तु निमित्तमात्रमतो न संस्कारभेदेन स्मृतिविवर्त्तोपादानस्य साक्षिणो भेदो युक्त इत्याशयेनाह—संस्कारस्य चेति। निमित्तकारणत्वेन—स्मृतौ निमित्तकारणत्वेन। साक्ष्याश्रितेति। साक्षिमात्राश्रितत्वेन अङ्गीकृतस्मृतिरूपकार्योपादानभूताविद्याशरीरे अप्रवेशात् उपादानांशतया अविशेषणत्वात्, उपादानतानवच्छेदकत्वादिति यावत्। तद्भेदेन–संस्कारभेदेन। प्रमातरि ततो विशेषमाह—जागरणे त्विति। उपदानेति। सुखदुःखादिकं प्रति मनसोऽसाधार-

प्रवेशात्तद्भेदेन प्रमातृभेद एव । साक्षिण एव चाधिकोपाधिविशिष्टस्य प्रमातृत्वान्न प्रतिसन्धानानुपपत्तिरिति।

न्यायरत्नावली ।

त्यादिकार्येत्यर्थः । स्मृत्यादेरविद्यामात्रपरिणामत्वस्योक्तत्वात् न मनसस्तत्र उपादानत्वं नतरां तत्संस्कारस्येति भावः । अत्रेदं बोध्यम् । मूले साक्षिमात्राश्रितत्वरूपं साक्ष्याश्रितत्वं स्मरणादेर्य-दुक्तं तदविद्यागतचिदाभासः साक्षीति वार्तिकमतमवलम्ब्यैव । अत एव मनोगतचिदाभासस्य जीवत्वेन तन्मतेऽविद्यायाः जीवानुपाधित्वेन भेदास्वीकारात् साक्षिणः सर्वजीवेष्वैक्यमेव । 'बिम्बप्रतिबिम्बानुगतशुद्धचित् साक्षी'तिमते तु स्मृत्यादिकार्यं न साक्षिमात्राश्रितम्, किन्त्वविद्याविशिष्टचिदाभासाश्रितमपि । ननु पूर्वदिनस्थप्रमात्रानुभूतमद्यदिनस्थप्रमात्रा न स्मर्येत, तयोर्भेदात् तत्राह—साक्षिण इत्यादि । अधिकोपाधीति । (१) सद्वृत्तिकमन इत्यर्थः । प्रमातृत्वात्—सद्वृत्तिकमनोऽवच्छिन्नचिद्रूपस्य च प्रमातुस्स्वरूपत्वात् । न प्रतिसन्धानेति (२)*तथा च साक्षिणि प्रमास्मृत्योः सामानाधिकरण्यसम्भवेन कार्यकारणभावसम्भवः* । न चैकमनोगतस्य मनोऽन्तरावच्छिन्नसाक्षिण्यपि

नारायणी ।

णत्वादिति भावः । तद्भेदेन—अन्तःकरणभेदेन । ननु पूर्वदिनस्थप्रमात्रानुभूतं मध्यदिनस्थप्रमात्रा न स्मर्येत, अन्यदृष्टस्यान्येनास्मरणात् तयोर्भेदादित्यत आह—साक्षिण एव चेति । अधिकेति । मनःस्वरूपोपाधिविशिष्टस्य, प्रमातृत्वात्—सवृत्तिकमनोवच्छिन्नचिद्रूपस्य प्रमातुः स्वरूपत्वात् । प्रतिसन्धानेति । स्मरणेत्यर्थः । तथा च मनोवस्थाया भेदेऽपि सर्वावस्थानुस्यूतमनस्त्वोपलक्षितस्वरूपस्यैकत्वात्तद्विशिष्टसाक्षि

(१) मनःस्वरूपेत्यर्थ इति घपुस्तके ।

(२) *स्मरणेत्यर्थः । तथाच मनसोऽवस्थाव्यक्तिभेदेपि सर्वावस्थानुस्यूतमनस्त्वोपलक्षितस्वरूपैक्यात् तद्विशिष्टसाक्षिण एकत्वेन नानुभवस्मृत्योर्वैयधिकरण्यमिति भावः* इति पाठो भिन्नो घपुस्तके चिह्नद्वयवर्ती । अयञ्च युक्ततरः ।

मातृमानप्रभेदेऽपि प्रतिदेहं न भिद्यते।
साक्षी बाह्यार्थवद्यस्मात्स आत्मेत्युच्यते ततः॥
व्यभिचारो मिथो यद्वत्प्रमात्रादेः स्वसाक्षिकः।
सर्वमात्राद्यभावार्थसाक्षित्वान्न तथात्मनः॥

इति वार्तिककारपादैर्व्यवहारदशायामपि साक्षिभेदनिराकरणात्। सुषुप्तौ तद्भेदकल्पनं केषा-

न्यायरत्नावली।

स्मृत्यापत्तिरिति वाच्यम्। तन्मनोगतप्रमाजन्यसंस्कारस्य मनोऽन्तरावच्छिन्ने विरहात् तत्तच्छरीरावच्छिन्ने स्मृत्यादौ तत्तच्छरीराणामपि हेतुत्वाच्च। मनस्तत्संस्कारान्यतरावच्छिन्नं चैतन्यं साक्षीति केचित्। तदुक्तन्यायेन वार्तिकोक्तयुक्त्या च विरुद्धमिति ज्ञापयितुमाह—मातृमानेत्यादि। स तव आत्मेत्युच्यते 'एष त आत्माऽन्तर्याम्यमृत' इति श्रुताविति शेषः। व्यभिचारः—मिथः परस्पराभावकालीनत्वम्। स्वसाक्षिकः-आत्मसाक्षिकः। सर्वमात्राद्यभावार्थेति। सर्वे ये मात्रादिरूपाः तदभावरूपाश्चार्था इत्यर्थः। व्यवहारेति। जागरेत्यर्थः। साक्षिभेदेति-प्रतिदेहं साक्षिभेदेत्यर्थः। तद्भेदेति। एकस्मिन्नपि देहे मनोऽवच्छिन्नसा-

नारायणी।

ण एकत्वेन नानुभवस्मृत्योर्वैयधिकरण्यमिति भावः। नन्वविद्याया इव विनिगमकाभावान्मनसोऽपि प्रमात्रुपाधित्वेन क्लृप्तस्य साक्ष्युपाधित्वमप्रतिहतं तथा च साक्षिणोऽप्यौपाधिकभेदोस्त्येवेति केषांचिदनभिज्ञवेदान्तिनामुक्तिः सिद्धान्तविरोधान्न युक्तेत्याह—मातृमानेत्यादि। आत्मेत्युच्यते 'एष त आत्मान्तर्याम्यमृत'इति श्रुताविति शेषः। व्यभिचारो मिथः—परस्पराभावसामानाधिकरण्यादिरूपः। स्वसाक्षिकः-आत्मसाक्षिकः। सर्वेति। सर्वे ये प्रमात्रादिरूपास्तदभावरूपाश्चार्थास्तत्साक्षित्वादित्यर्थः। व्यवहारदशायामपि-जागरेऽपि। साक्षीति। प्रतिदेहं साक्षिभेदनिराकरणात्। तद्भेदकल्पनम्-(१)मनउपाधिक-

(१) अत्र कपुस्तके 'मनउपाधिकसाक्षिकसंस्कारोपाधिकः' इति, खपुस्तके 'मनउपाधिसाक्षिकः संस्कारोपाधिकः' इति च पाठः।

न्यायरत्नावली ।

क्षितो मनस्संस्कारावच्छिन्नसाक्षिणो भेदेत्यर्थः । यथा मनोभेदेन साक्षिभेदः, तथा (१)तत्संस्कारभेदेनेति तेषां भावः । महामोह एव न तु न्यायानुसरणम् । ननु साक्षिण एकत्वे एकस्य प्रमातुः प्रमात्रन्तरीयसुखाद्यनुभवापत्तिरिति चेन्न । अहमन्यमनोगतसुखविशिष्ट इत्यनुभवस्यापादनासम्भवात् एक मनोऽवच्छेदेनापरमनोगतसुखादिवैशिष्ट्यस्य उक्तानुभवविषयस्य अप्रसिद्धेः । ननु तथापि तत्पुरुषीयसुखादिभासकचितस्तन्मनोऽवच्छिन्नचित्त्वेन रूपेण साक्षितास्तु, सुषुप्तावपि तन्मनोव्यक्तिरस्त्येव, अवस्थाभेदेऽपि स्वरूपाभेदात्; किञ्चाविद्यावच्छिन्नचितस्साक्षित्वपक्षे मनोऽवच्छिन्नचितमादाय विनिगमकाभाव इति चेन्न । शुद्धाचितोऽन्तर्यामिणो वा चैतन्यस्य साक्षित्वपक्षे मनोभेदेन साक्षिभेदे(२) मानाभावात्, किञ्च अविद्यावच्छिन्नस्य साक्षित्वपक्षेऽपि मनोऽवच्छिन्नस्य न साक्षितासम्भवः । अविद्यातद्वृत्त्यादीनां मनोदेशापेक्षया अधिकदेशव्यापकानां कार्त्स्न्येन मनोऽवच्छिन्नचित्सम्बन्धाभावात् । अत एव मनोवृत्त्यनिर्गमकालेऽविद्यावच्छिन्नचिता घटाद्युपादानभूतया घटादेर्भाननिवारणाय घटाद्यवच्छेदेनावरणं कल्प्यत इति मूल एव पूर्वमुक्तम् । तदस्वीकारे च वृत्तेरावरण-

नारायणी ।

साक्षितः संस्करोपाधिकः साक्षी भिन्न एवेति साक्षिभेदकल्पनं महामोह एव-अति भ्रम एव, मनआदेः साक्षिशरीरे अप्रवेशस्य बहुधोक्तेरिति भावः । ननूत्थितस्य सुखस्मृतिवद् दुःखस्मृतिरप्यस्ति अतस्तदन्यथानुपपत्त्या नित्यसु-

(१) तथा मनस्तत्संस्कारेति घपुस्तके ।

(२) अत्रायमाधिकः पाठो घपुस्तके । साक्षिभेदे गौरवान्मानाभावाच्च । अन्यथा तत्तत्सुखदुःखादिदृश्यावच्छिन्नचितो वा भासकत्वेन सुखादिदृश्यभेदेन क्षणभेदेन वा साक्ष्यभेदापत्तेः । तस्मात् आध्यासिकस्य तादात्म्यस्य भासकतानियामकत्वामिति सिद्धान्तादधिष्ठानमेव साक्षीति युक्तम् ।

अविद्यामोह एवेत्यवधेयम् । ननु 'दुःखमहमस्वाप्समि'ति कस्यचित्कदाचित्परामर्शात् सुषुप्तौ दुःखानुभवोऽप्यस्तु। न। तदानीं दुःखसामग्रीविरहेण तदभावात्। सुखस्य चात्मस्वरूपत्वेन नित्यत्वात् शय्यादेरसमीचीनत्वेन च दुःखमित्युपचारात् 'दुःखमहमस्वाप्समि'ति प्रत्ययोपपत्तिः । अथवा अवस्थात्रयस्यापि त्रैविध्याङ्गीकारात् सुषुप्तावपि दुःखमुपपद्यते । तथा हि—प्रमाज्ञानं जाग्रज्जाग्रत्, शुक्तिरजतादिविभ्रमो जाग्रत्स्वप्नः, श्रमादिना स्तब्धीभावो जाग्रत्सुषुप्तिः । एवं स्वप्ने मन्त्रादिप्राप्तिः स्वप्नजाग्रत् , 'स्वप्नेऽपि स्वप्नो मया दृष्ट' इति बुद्धिः स्वप्नस्वप्नः, जाग्रद्दशायां कथयितुं न शक्यते, स्वप्नावस्थायां च यत्किञ्चिदनुभूयते,

न्यायरत्नावली।

भङ्गार्थत्वपक्षस्य उच्छेदस्स्यात् । उपचारात्—जाग्रत्कालीनाच्छय्यादौ दुःखसाधनत्वज्ञानात् । दुःखमित्यादि । दुःखसाधनशय्याधिकरणकं शयनं कृतवानहमित्यर्थः। जागरे त्रैविध्यमाह—प्रमेत्यादि । स्तब्धीभावः—अहमाकारवृत्त्यन्यवृत्तिसा-

नारायणी।

खस्येव नित्यदुःखस्याप्यनुभवोऽस्तु सामग्रीवाधेन जन्यसुखस्येव जन्यदुःखस्यापि भानासम्भवादित्यभिप्रेत्याशङ्कते—नन्विति । दुःखेति। तथाचात्मनो दुःखरूपतापि स्यादिति भावः। सुखदुःखयोः साम्यं परिहृत्य दुःखानुभवमन्यथा नयति—शय्यादेरित्यादि। उपचारात्–जाग्रत्कालीनात् शय्यादौ दुःखसाधनत्वज्ञानात्। दुःखमहमिति। दुःखसाधनशय्याधिकरणकं शयनं कृतवानहमित्यर्थः। ननु शय्यादेरसमीचीनत्वेनैव दुःखप्रतीतिर्न युक्ता (चेत्) सुखप्रतीतेरपि शय्यादेः समीचीनप्रयुक्तत्वापत्तिः युक्तेस्तौल्यादतः पक्षान्तरमाह—अथवेति । त्रैविध्याङ्गीकारात् तापनीयादिश्रुताविति शेषः। जागरे त्रैविध्यमाह—प्रमेत्यादि । स्तब्धिभावः—अहमाकारवृत्त्यन्यवृत्तिसामान्याभावः एवं स्वप्नेत्यादि स्पष्टम् ।

तत्स्वप्नसुषुप्तिः । एवं सुषुप्त्यवस्थायामपि सात्त्विकी या सुखाकारा वृत्तिः, सा सुषुप्तिजाग्रत्, तदनन्तरं 'सुखमहमस्वाप्स'मिति परामर्शः । तत्रैव या राजसी वृत्तिः, सा सुषुप्तिस्वप्नः, तदनन्तरमेव दुःखमहमस्वाप्स-मिति परामर्शोपपत्तिः । तत्रैव या तामसी वृत्तिः, सा सुषुप्तिसुषुप्तिः, तदनन्तरं 'गाढं मूढोऽहमस्वाप्स'मिति

न्यायरत्नावली ।

मान्याभावः । सात्त्विकी—सत्त्वगुणपरिणामरूपसुखाकारात्मसुखविषयिका । राजसी—रजोगुणविषयिका । रजोगुणस्य दुःखादिपरिणामयोग्यत्वेन दुःखत्वोपचार इति भावः । तामसी—तमोगुणविषयिका । तिस्रोपि वृत्तयः सत्त्वगुणस्यैव परिणामाः, ज्ञानत्वात् । अथवा सुखरूपेण परिणतसत्त्वगुणविषयिका सात्त्विकी, दुःखरूपेण परिणतरजोगुणविषयिका राजसी, मोहरूपेण परिणततमोगुणविषयिका तामसी । न च सत्त्वादिगुणपरिणामरूपा वृत्तिस्सात्त्विक्यादिरूपा आत्मसुखविषयिका(१), एवं सुखाकारेत्यस्य सर्वत्रानुषङ्गादिति वाच्यम् । दुःखविषयकज्ञानेन विना दुःखविषयकस्मृत्यसम्भवात् ज्ञानरूपाया(२) वृत्तेः सत्त्वान्यगुणपरिणामत्वासम्भवात् ।'सत्त्वात्सञ्जायते ज्ञान'मिति स्मृतेः। सुखादिरूपेण परिणामे तु धातुसाम्यादिकमेव निमित्तम् । अथ राजसी वृत्तिर्दुःखम्, तामसी वृत्तिः तमःपरिणामो मोहरूपः, तत्संस्कारश्च तदवच्छिन्नचैतन्यनाश एवेति न तदर्थं तद्गोचरवृत्त्यपेक्षेति चेन्न । दुःखमो-

नारायणी ।

सात्त्विकी-सत्त्वगुणपरिणामरूपा, सुखाकारा-आत्मसुखविषयिका,राजसी-दुःखरूपरजःपरिणामगोचरा,तामसी-तमोगुणविषयिका । तिस्रोऽपि वृत्तयः सत्त्वगुणस्यैव, ज्ञानत्वात् ; 'सत्त्वात्संजायते ज्ञान'मिति स्मृत्या सत्त्वपरिणामस्यैव ज्ञानात्मवृत्तित्वोक्तेरित्यन्यत्र विस्तरः । मुख्याधि-

(१)—विषयिका एव सुखाकारेत्यस्येति घपुस्तके । (२) ज्ञानरूपाऽविद्यावृत्तेरित्यर्थः ।

परामर्शः । यथा चैतत्, तथा (१)वासिष्ठवार्तिकामृतादौ स्पष्टम् । एवमध्यात्मं विश्वः, अधिभूतं विराट्, (२)अधिदैवं विष्णुः । अध्यात्मं जाग्रत्, अधिदैवम्, (३)पालनं, अधिभूतं सत्त्वगुणः । एवमध्यात्मं तैजसः, अधिभूतं

न्यायरत्नावली ।

द्वयोः वृत्तिपदेनाव्यवहारात् सविषयके ज्ञानेच्छादावेव वृत्तिपदप्रयोगादिति भावः । एवमध्यात्ममित्यादि । (४)एवमभिहितानामेतेषामैक्योपासनया हिरण्यगर्भलोकप्राप्तिः अन्तःकरणशुद्धिद्वारा क्रममुक्तिश्चेति योजना । एतेषां विश्वादिसमूहानां प्रथमं समूहमाह–रजोगुण इत्यन्तेन । अध्यात्मं–शरीरमधिकृत्य स्थितः । अधिभूतं–स्थूलभूतमधिकृत्य स्थितः । अधिदैवं–शरीरस्थूलसमष्टिभिन्नसोपाधिरजोगुणरूपमधिकृत्य स्थितः । अध्यात्मं जाग्रदिति । अध्यात्मेन विश्वेनानुभूयमाना जाग्रदवस्थेत्यर्थः । अधिदैवं–ब्रह्मकारणिका सृष्टिः । अधिभूतं सर्वभूतान्यधिकृत्य स्थितः । रजोगुणो–ब्रह्मोपाधिः । एष प्रथमस्समूहः । एवमध्या-

नारायणी ।

कारिणां परमहंसानां श्रवणादिद्वारकमात्मज्ञानं मोक्षोपायमित्यभिधाय मन्दाधिकारिणामविद्वत्सन्यासिनां ज्ञानसाधनोपायमाह—एवमिति । एवमुपहितानामेतेषामैक्योपासनया हिरण्यगर्भलोकप्राप्तिः, अन्तःकरणशुद्धिद्वारा क्रममुक्तिश्चेति योजना । अध्यात्मं शरीरमधिकृत्य स्थितः, अधिभूतं स्थूलभूतसमष्टिमधिकृत्य स्थितः, अधिदैवं स्थूलसमष्टिभिन्नं सोपाधिरजोगुणरूपमधिकृत्य स्थितः, (५)रजोगुणोपाधिको ब्रह्मा । जाग्रदिति । अध्यात्मेन विश्वेनानुभूयमाना जाग्रदवस्थेत्यर्थः । अधिदैवं ब्रह्मकार्यम्, अधिभूतं सर्वभूतान्यधिकृत्य स्थितः, एष प्रथमः समूहः । एवमध्यात्ममिति । लिङ्गमधिकृत्य स्थित इत्य-

(१) वासिष्ठेतिशब्दो नास्ति कखपुस्तकयोः । (२) अधिदैवं ब्रह्मा इति कखपुस्तकयोः ।
(३) अधिदैवं सृष्टिः, अधिभूतं रजोगुणः इति कखपुस्तकयोः ।
(४) एवमुपहितानामिति घपुस्तके ।
(५) रजोगुणो ब्रह्मोपाधिः अध्यात्मम् इति खपुस्तके ।

हिरण्यगर्भः, अधिदैवं (१)ब्रह्मा, अध्यात्मं स्वप्नः, अधिदैवं (२)सृष्टिः, अधिभूतं रजोगुणः। एवमध्यात्मं प्राज्ञः, अधिभूतमव्याकृतम्, अधिदैवं रुद्रः, अध्यात्मं सुषुप्तिः, अधिदैवं प्रलयः, अधिभूतं तमोगुणः। एवमध्यात्माधिभूताधिदैवानामेकत्वात् प्रणवावयवत्रयसहितानामु-

न्यायरत्नावली।

त्मं—लिङ्गशरीरमधिकृत्य स्थितः। अधिभूतं—सूक्ष्मभूतसमष्टिमधिकृत्य स्थितः। अधिदैवं—तदुभयान्यसत्त्वगुणोपाधिकः। अध्यात्मम्—अज्ञानमधिकृत्य स्थितः। अधिभूतम्—अव्याकृतचिदाभासादियुक्तमधिकृत्य स्थितः। अव्याकृतम्-ईश्वरः। अधिदैवम्—अज्ञानाव्याकृतान्यतमो गुणोपाधिकः। एवमध्यात्मेत्यादि। प्रणवावयवरूपवाचकसहितानामुक्तसमूहानामेकत्वादेकत्वं विचिन्त्य उपहितस्वरूपाणामुक्तसमूहानामैक्योपासनया सत्यलोकप्राप्तिपूर्वकं कैवल्यमित्यर्थः। प्रथमावयवो वाचकः, प्रथमसमूहश्च वाच्यः, तयोरेकत्वं विचिन्त्यम्। एवं द्वितीयौ तृतीयौ चावयवसमूहावेकत्वेन विचिन्त्यौ। ततः प्रथमसमूहस्य कारणेन द्वितीये-

नारायणी।

र्थः। अधिभूतं सूक्ष्मभूतसमष्टिमधिकृत्य स्थितः, अधिदैवं तदुभयान्यः सत्त्वगुणोपाधिकः, अध्यात्मं तैजसेनानुभूयमाना स्वप्नावस्था, अधिदैवं विष्णुकार्यम्, अधिभूतं सर्वभूतान्यधिकृत्य स्थितः, एष द्वितीयः समूहः। अध्यात्ममज्ञानमधिकृत्य स्थितः, अधिभूतमव्याकृतं चिदाभासादियुक्तमज्ञानमधिकृत्य स्थितः, अव्याकृतमीश्वरः, अधिदैवं तदुभयान्यस्तमोगुणोपाधिकः, अध्यात्मं प्राज्ञेनानुभूयमाना सुषुप्त्यवस्था, अधिभूतं भूतान्यधिकृत्य स्थितः, अधिदैवं रुद्रकार्यम्। एवमिति। प्रणवावयवत्रयसहितानां—प्रणवावयवरूपाकारोकारमकाररूपवाचकसहितानामुक्तसमूहानाम्, एकत्वात्—व्याप्यव्यापकभावमर्यादयाऽभेदात्। उपहितेति। उपहितस्वरूपाणामुक्तसमूहानामैक्योपासनया।

(१) अधिदैवं विष्णुरिति पाठः कखपुस्तकयोः।
(२) अधिदैवं पालनम्, अधिभूतं सत्त्वगुणः। इति कखपुस्तकयोः।

पहितानामैक्योपासनया हिरण्यगर्भलोकप्राप्तिः, अन्तःकरणशुद्धिद्वारा क्रममुक्तिश्च। एतत्सर्वोपाधिनिराकरणेन साक्षिचैतन्यमात्रज्ञानेन तु साक्षादेव मोक्ष इति।

न्यायरत्नावली।

नैकत्वं द्वितीयस्यापि तृतीयेन कारणैकत्वं चिन्तयित्वा सत्यलोकं प्राप्य हिरण्यगर्भेण तत्र विद्यमानेन सह मुच्यते। नृसिंहतापिन्यथर्वशिखामाण्डूक्यादिश्रुतिः तद्भाष्यं चात्र प्रमाणं बोध्यम्। अत्र प्रथमसमूहे सत्त्वगुणपालनाद्विष्णूनां द्वितीयसमूहे रजोगुणसृष्टिब्रह्मणां च पाठः प्रामादिकः। विपरीतपाठस्य युक्तत्वात्, अथर्वशिखातापनीयादौ तथैवोक्तत्वात्, 'त्रयीं तिस्रो वृत्ती'रित्यादिमहिम्नस्तोत्रीयव्याख्याने आचार्यैरेवोक्तत्वात्। अत्र ब्रह्मनिर्देशेन तदुपाधिरजोगुणादिलाभेऽपि तेषामपि स्वातन्त्र्येणाका-

नारायणी।

हिरण्यगर्भलोकः—सत्यलोकः, अनन्तरं विदेहकैवल्यमित्यर्थः। प्रथमावयवोऽकारो वाचकः प्रथमसमूहो वाच्यः तयोरेकत्वं चिन्त्यम्, एवं द्वितीयावयवद्वितीयसमूहयोस्तृतीयावयवतृतीयसमूहयोरेकत्वं विचिन्त्य ततः प्रथमसमूहस्य द्वितीयेन कारणेन द्वितीयस्य तृतीयेन समूहेनैक्यं चिन्त्यम्, तच्चिन्तनेन सत्यलोकावाप्तिर्भवति। अनन्तरं तेन सह मुच्यते।

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥

इत्यादिश्रुतेरिति संक्षेपः। पुनरपि मुख्यानां प्रसङ्गात्कैवल्योपायमाह—एतदिति। (१)*उपास्योपासकभावपरित्यागेनेत्यर्थः। साक्षिचैतन्यमात्रज्ञानेन—

अभोक्ताहमकर्ताहमसङ्गोऽहं सदाऽमलः।
सर्वावभासकज्योतिस्स्वप्रकाशं निरञ्जनम्॥
ब्रह्म पूर्णं पराऽनन्दमहमस्मि सनातनम्।
कालत्रये द्वैतजातं नास्ति मायाविजृम्भितम्॥

(१) *...* चिह्नितः पाठः कपुस्तके भ्रष्टः प्रतिभाति।

तदेवं त्रयाणामप्यवस्थात्रयसहितानां विश्वतैजसप्राज्ञानामविद्यात्मकत्वात् दृश्यत्वेन च मिथ्यात्वादनुपहितः केवलः साक्षी तुरीयाख्योऽहमस्मीत्यर्थः। एवं व्यवहारतः सर्वव्यवस्थोपपत्तेः परमार्थतः कस्या अपि व्यवस्थाया अभावान्न काप्यनुपपत्तिः। विस्तरेण चैतत्प्रपञ्चितमस्माभिर्वेदान्तकल्पलतिकायामित्युपरम्यते ॥८॥

ननु जाग्रत्स्वप्नसुषुप्त्यवस्थासहितानां त्रयाणामपि तदभिमानिनां मिथ्यात्वात्तत्साक्षिणोऽपि मिथ्यात्वं स्यादविशेषादित्याशङ्क्य विशेषाभिधानेन साक्षिणः सत्यत्वमाह—

अपि व्यापकत्वाद्धितत्वप्रयोगा-
त्स्वतस्सिद्धभावादनन्याश्रयत्वात्।
जगत्तुच्छमेतत्समस्तं तदन्य-
त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ९ ॥

न्यायरत्नावली।

रादिवाच्यत्वात् पृथगुक्तिः। अत एव गार्हपत्याद्यग्नीनां पृथिव्यन्तरिक्षद्युलोकानाम् ऋगादिवेदानां च विराडन्तःपातित्वेऽपि अथर्वशिखादौ प्रथमादिसमूहे पृथगुक्तिस्सङ्गच्छते। स्वातन्त्र्येण वाच्यता तु त्रयीमित्यादिपद्यादौ स्पष्टा। पद्यार्थमुपसंहरति–तदेवमिति ॥ ८ ॥

नारायणी।

इति सर्वद्वैतबाधसाक्षिपरमात्माभेदज्ञानेन*। तापिन्यादा'वथात आदेशः, न स्थूलप्रज्ञमि'त्यादिना सर्वोपाधिविनिर्मुक्तस्यैव मुमुक्षुज्ञेयत्वोक्तेः। पद्यार्थमुपसंहरति—तदेवमिति।

नवमं पद्यमवतारयति—नन्विति। तत्साक्षिणः–अवस्थासाक्षिणः। अविद्याप्रयुक्ततदभिमानिन इवाविद्याप्रयुक्ततदवभासकस्यापि मिथ्यात्वमावश्यकमिति भावः। अविशेषात्–मिथ्यात्वप्रयोजकयोराविद्यकत्वदृश्य-

'न दृष्टेर्द्रष्टारं पश्ये' रिति साक्षिणं प्रकृत्य 'अतोऽन्यदार्त'मिति श्रुतेः साक्षिणोऽन्यत्साक्ष्यं सर्वं जगत्तुच्छं न तु साक्षी। बाधावधित्वात् भ्रमाधिष्ठानतया ज्ञात-

न्यायरत्नावली।

जगत्तुच्छमिति। जगन्मिथ्येत्यर्थः। आर्तशब्देन विनाशित्वोक्तावर्थान्मिथ्यात्वलाभः। आर्तं बाधेन पीडितमित्यर्थे मिथ्यात्वं शाब्दमेवेति भावः। बाधावधित्वादिति। यद्विषयकप्रमा बाधिका, तत्त्वादित्यर्थः। तथा च साक्षिणो मिथ्यात्वे बाधकप्रमैव दुर्लभेति कुतो मिथ्यात्ववार्तेति भावः। भ्रमेत्यादि। अतत्त्वारोपरूपभ्रमस्य तत्त्वाज्ञानपूर्वकत्वनियमेनाज्ञानविषयत्वरूपादधिष्ठानत्वात् साक्षिणस्तात्त्विकत्वमित्यर्थः। ननु माध्यमिकस्य शून्यवादिनो मते न तत्त्वप्रमा बाधिका, सर्वस्यैव विचारासहत्वेन युक्तिबाध्यत्वात्। अत एव भ्रमो न तत्त्वाज्ञानप्रयुक्तः। तथा च पूर्वपूर्वभ्रमवासनामात्रादुत्तरोत्तरभ्रमः, न किञ्चित्स्थिरमुपादानं निमित्तं वास्ति, 'यत् सत् तत् क्षणिक'मिति नियमाभ्युपगमात्। तथा च साक्षिण एव क्षणिकविज्ञानरूपस्य घटपटादिरूपत्वस्वीकारात् साक्षिणःघटाद्याकारस्यैव घटादिरूपाकारेण साक्षि-

नारायणी।

त्वयोः साम्यात्। तत्रादौ युक्त्यसहत्वेन प्राप्तं तुच्छत्वं परिहरिष्यन् तदभावे हेतुभूतामपरिच्छिन्नत्वसाधिकां श्रुतिं पठति--न दृष्टेरिति। श्रुतिस्थार्तपदस्य दुःखित्वमर्थ इति तार्किकभ्रमनिरासाय श्रुत्यर्थं विशदयति--साक्षिण इति। तुच्छं मिथ्या, तथा च 'अर्द हिंसाया'मिति धातुनिष्पन्नार्तपदस्य बाधितार्थकत्वान्मिथ्यात्वं शाब्दमेवेति भावः। आस्तिकाभिमानिनं श्रुत्या निराकृत्य शून्यवादिनिरासाय तर्कमाह-बाधेति। बाधकधीविषयत्वादित्यर्थः। साक्षिणो मिथ्यात्वे तु बाधकप्रमाया एव दौर्लभ्यात्कुतो मिथ्यावार्तेति भावः। भ्रमेति। अज्ञत्वारोपरूपभ्रमस्य तत्त्वज्ञानपूर्वकत्वाद् भ्रमकारणीभूताज्ञानविषयत्वरूपादधिष्ठानत्वात्। ननु शून्यवादिमते भ्रमो न तत्त्वाज्ञानपूर्वकः, किन्तु पूर्वपूर्ववासनाप्रयुक्त एव तथा च घटाद्याकारस्यैव कल्पितस्य साक्षिणोऽपि बाधः स्यादेवेत्यत आह--

त्वाच्च । तद्बाधग्राहकाभावाच्चेत्याद्यनुक्तसमुच्चयार्थोऽपि-शब्दः । 'अथ यदल्पं तन्मर्त्य'मिति श्रुतेः परिच्छिन्नत्व-तुच्छत्वयोः समव्याप्तत्वात्परिच्छिन्नत्वतुच्छत्वनि-वृत्तीत्याह—व्यापकत्वादिति । 'सर्वं खल्विदं ब्रह्मे'ति सर्वात्मत्वोपदेशेन देशकालापरिच्छिन्नत्वादाकाशादी-नां च देशकालपरिच्छिन्नत्वेऽप्यापेक्षिकमहत्त्वेन व्याप-

न्यायरत्नावली ।

णोऽपि बाधः सम्भवति तत्राह—तद्बाधग्राहकेत्यादि । घटाद्याकारे साक्षिसामान्याभावज्ञानं बाधकं तत्तेनैव गृह्यते अन्येन वा ज्ञानेन ? नाद्यः । बाध्यमानेन तेन तद्ग्रहणेऽपि तत्सिद्ध्यसम्भवात् । नान्त्यः । (१)तस्यापि घटवत् बाध्यमानत्वेन घटविषयकत्वासिद्ध्या घटज्ञानाभावविषयकबाधासाधकत्वात्, ज्ञानान्तरस्य ज्ञानान्तररूप-प्रत्यक्षतायास्त्वयाऽनङ्गीकारात्, ज्ञानस्य स्वात्मकप्रत्यक्षविषयत्व-स्यैव त्वया स्वीकारादिति भावः । अल्पं—परिच्छिन्नम्, मर्त्यं—वि-नाशि बाधरूपमृत्युग्रस्तं वा । अपरिच्छिन्नत्वात्—देशकालनिष्ठा-भावाप्रतियोगित्वात् । व्यापकत्वोपचारात्—'आकाशवत्सर्वगतः, वायुस्सर्वत्रगो महा'नित्यादिश्रुतिस्मृत्यादिव्यवहारात् । सर्व-

नारायणी ।

तद्बाधेति । साक्षिबाधग्राहकाभावादित्यर्थः । असाक्षिकस्य बाधस्यायो-गात् परवेद्यत्वे सर्वशून्यताभङ्गात्, स्ववेद्यत्वे विरोधात्, स्वप्र-काशत्वे च संज्ञाकलहप्रसङ्गात्, सर्वबाधसाक्षितया सिद्धस्य साक्षि-णो न बाधो युक्त इति भावः । युक्त्या नित्यत्वं प्रसाध्य श्रुत्या तदाह—अथेति । अल्पं परिच्छिन्नम्, मर्त्यं विनाशि बाधरूपमृत्युग्रस्तं वा, सम-व्याप्तत्वात्—परस्परं व्याप्यव्यापकभावात् । देशेत्यादि । देशकालनि-ष्ठाभावाप्रतियोगित्वात्, आपेक्षिकमहत्त्वेन—यावन्मूर्तापेक्षयाऽधिकपरि-माणवत्त्वेन, व्यापकत्वोपचारात्—'आकाशवत्सर्वगतः,वायुः सर्वत्रगो महानि'ति श्रुतिस्मृत्यादिव्यवहारात् । आत्मनोऽपुरुषार्थत्वमाशङ्क्ते-

(१) तस्यापि घटे बाध्यमानत्वेन घटविषयकत्वासिद्ध्या घटे ज्ञानाभावसाधकेत्यादि घपुस्तके ।

क्त्वोपचारात् । ननु सर्वव्यापकत्वेन नित्यत्वाद्भाव-रूपत्वाच्चात्मा न दुःखनिवृत्तिरूपः । नापि सुखरूपः । सुखस्यानित्यत्वेन नित्यात्मस्वरूपत्वानुपपत्तेः । तथा चात्मस्वरूपो मोक्षोऽपुरुषार्थ एवेत्याशङ्क्य नेत्याह–हितत्वप्रयोगादिति । हितत्वं पुरुषार्थत्वम् । 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मे'ति 'यो वै भूमा तत्सुखम्, एष परम आनन्दः, (एष ह्येवानन्दयाति) विज्ञानमानन्दं ब्रह्म'इत्यादिभिः श्रुतिभिः तस्य परमानन्दरूपत्वोपदेशात् । तस्य च नित्यत्वेऽपि

न्यायरत्नावली ।

व्यापकत्वेन–कालतः सर्वव्यापकत्वेन सर्वदा सत्त्वेनेति यावत् । प्रेयः–प्रियतरम् । अन्यस्मात्—आत्मभिन्नात् । अन्तरतरम्–आरोपितत्वेन बाह्यात् सर्वस्मात् दृश्यात् सत्यानन्दरूपत्वेन अधिष्ठानत्वात् यतोऽन्तरम् अतस्सर्वस्मात् स्वतादात्म्याध्यासेन प्रियादपि प्रियतममेतदित्यर्थः । यत्–यः । भूमा–अपरिच्छिन्नः । आनन्दयाति–सर्वानानन्दयति । महाकाशस्य घटाकाशादाविव महा-

नारायणी ।

नन्विति । सर्वव्यापकत्वेन--कारणतया सर्वदृश्यानुस्यूतसच्चिन्मात्रत्वेन, नित्यत्वात्–ध्वंसप्रागभावाप्रतियोगित्वात्, अतो न दुःखाभावरूपस्तस्य(१)जडत्वादिति भावः । ननु दुःखनिवृत्तिर्मास्तु दुःखध्वंसरूपः दुःखात्यन्ताभावरूपः स्यात् तस्य नित्यत्वात्तत्राह-भावरूपत्वाच्चेति । प्रतियोग्यनिरूप्यसत्यपदार्थस्वरूपत्वादित्यर्थः । तथा चात्मा यदि दुःखाभावरूपः स्यात्तदा प्रतियोगिनिरूपणाधीननिरूपणविषयः स्यात्,न तु तथाऽतो न दुःखाभावस्वरूप इति भावः । प्रेयः–प्रियतरम्,अन्यस्मात्–आत्मभिन्नात्,अन्तरतरं–आरोपितत्वेन बाह्यात्सर्वस्माद्दृश्याद्यतोन्तरतरं ब्रह्म सच्चिदानन्दरूपत्वादतः स्वतादात्म्याध्यासेन प्रियादपि प्रियतरमेतदिति

(१) तस्य जन्यत्वादिति भावः । मास्तु दुःखध्वंसरूपः दुखात्यन्ताभावरूपः स्यात् इत्यादिपाठः खपुस्तके । युक्तश्च ।

लोके धर्मजन्यतत्तदन्तःकरणवृत्तिव्यङ्ग्यतया तदुत्पत्तिविनाशोपचारः। अज्ञानव्यवहितस्य च तस्याप्राप्तस्यैव ज्ञानमात्रादविद्यानिवृत्त्या प्राप्तिरिव भवतीति तदुद्देशेन मुमुक्षुप्रवृत्त्युपपत्तिः। अध्यस्तस्य प्रपञ्चस्य दुःखरूपस्या-

न्यायरत्नावली।

नन्दस्य परिच्छिन्नानन्दे हेतुत्वमिति भावः। तत्तदन्तःकरणवृत्तीति। चन्दनादियोगजन्यमनोवृत्तीत्यर्थः। लोक इत्यनेनेदं सूचितम्—'सुखस्य स्वरूपेणाजन्यत्वेऽपि स्वावरकाज्ञानविरोधिविशिष्टरूपेण लोके काम्यत्वात् मुमुक्षोरपि पूर्णानन्दस्वरूपमोक्षस्यावारकमूलाज्ञानविरोधिविशिष्टतया काम्यते'ति तदिदमुक्तं—तदुद्देशेन मुमुक्षुप्रवृत्तीति। इति—इत्थमज्ञानविरोधिज्ञानविशिष्टरू-

नारायणी।

भावः। भूमा—अपरिच्छिन्नः। नित्यत्वे—आत्मनो ध्वंसप्रागभावरहितत्वे। तत्तदिति। स्रक्चन्दनवनितादिसंयोगजन्यवृत्तीत्यर्थः। व्यङ्ग्यतया—प्रकाश्यतया। तदुत्पत्तीति। सुखमुत्पन्नं नष्टमिति व्यवहारे सुखपदस्य व्यञ्जकवृत्तौ लक्षणेत्यर्थः। ननु यदि सुखमात्मरूपतया नित्यं तर्हि सिद्धत्वात्कथं तदुद्दिश्य प्रेक्षावतां प्रवृत्तिरित्याशङ्क्य (१)सुखस्यात्मरूपतया नित्यत्वेऽपि विस्मृतग्रैवेयकादाविव ज्ञानसाध्यायाः प्राप्तेः फलत्वसम्भवात् तदुद्दिश्य प्रवृत्तिर्नानुपपन्नेत्याह—अज्ञानेति। अज्ञानरूपावरकान्वितस्येत्यर्थः। अप्राप्तस्येव न तु वस्तुगत्या ग्रामादिवदप्राप्तस्य। ज्ञानेति। अपरोक्षसाक्षात्कारादविद्यानिवृत्त्या। प्राप्तिरिवेति। विस्मृतग्रैवेयकादेरिवेति शेषः। अत एव मोक्षस्य ज्ञानफलत्वात्पुमर्थत्वम्, अनित्यत्वे तु ग्रामादेरिव क्रियाप्राप्यत्वेऽनित्यत्वप्रसक्त्याऽपुमर्थत्वापत्तेरिति दिक्। सुखात्मना पुमर्थत्वमुपपाद्य दुःखाभावात्मनाऽपि तदुपपादयति—अध्यस्तस्येति। इदं च विशेषणं 'प्रतियोग्यधिकरणतया प्रसिद्ध एवाभावस्तिष्ठतो'ति पक्षे दुःखाभावस्य तत्र सम्भव-

(१) नित्यत्वेन फलत्वाभावो नेच्छानुदयात् कथं तदुद्दिश्य साधने प्रेक्षावतां प्रवृत्तिः कथं च तस्य पुमर्थत्वम्, अन्येच्छाधीनेच्छाविषयस्यैव लोके पुरुषार्थतापदार्थत्वात् इत्याशङ्क्य सुखस्यानित्यत्वे फलाभावेन इच्छानुदयादात्मरूपतयेत्यादिः पाठः खपुस्तके। युक्तश्च।

धिष्ठानत्वात् स एवाभाव इति दुःखाभावरूपत्वेनापि तस्य पुरुषार्थता। ननु मोक्षे सुखं संवेद्यते, न वा? नाद्यः। तदानीं देहेन्द्रियाद्यभावेन तद्व्यञ्जकाभावात्,

न्यायरत्नावली।

पेण तदुद्दिश्य प्रवृत्तीत्यर्थः। स एव–परमानन्दात्मैव। पुरुषार्थ-

नारायणी।

ज्ञापनाय, तथा च सुखरूपस्यात्मनो विरुद्धस्वभावत्वेन दुःखभाक्त्वायोगात्, तदभावाधारत्वायोगेऽपि प्रकृष्टप्रकाशे विभिन्नसत्ताकस्य कल्पितस्योलूकान्धकारस्येवाध्यासिकदुःखप्रसक्तेर्वास्तव तदभावाधिष्ठानत्वे न किमपि बाधकमिति सङ्क्षेपः। स एव–परमानन्दात्मा एव। दुःखाभावरूपत्वेनापीत्यपिशब्दः सुखात्मत्वसमुच्चायकः। सुखदुःखाभावान्यतरात्मकत्वेनेत्यर्थः। तस्य–आत्मनः अज्ञानाभावस्य स्वत इच्छाविषयत्वाभावेन दुःखनिदाननिवृत्तितयैव पुमर्थत्वस्यावश्यं वाच्यत्वादज्ञाननिवृत्तित्वेनेति विहाय दुःखाभावत्वेनापीत्युक्तम्। दुःखस्य नित्यपरिहृतत्वेऽप्यपरिहार्य्याऽनाद्यविद्ययाऽपरिहृतस्येव ज्ञानमात्राद्रज्जुसर्पादेरिव भ्रमनिवृत्त्या परिहृतिरिव भवतीति प्राक्प्रवृत्त्युपपत्तिः। पुमर्थो द्वेधा। प्राप्तिरिष्टस्य, परिहारश्च निवृत्तिरनिष्टस्य। इष्टं द्विविधम्। वस्तुतोऽप्राप्तं ग्रामादि, प्राप्तमपि भ्रमव्यवहितं ग्रैवेयकादि। परिहार्यं द्वेधा। वस्तुतोऽपरिहृतं गर्तादि, सर्वदा परिहृतमपि भ्रमव्यवहितं रज्जुभुजङ्गादि। तत्र प्रथमौ प्राप्तिपरिहारौ क्रियाधीनौ, द्वितीयौ ज्ञानमात्राधीनौ। (१)अत्रैव च क्रियाऽव्यवधानात् पुमर्थत्वं युक्तमिति भावः। शङ्कते—नन्वित्यादि। मोक्षे–मोक्षावस्थायाम्। तद्व्यञ्जकेति। नित्यसुखाविर्भावकेत्यर्थः। लाघवाज्जन्यज्ञानसामान्यं प्रति शरीरेन्द्रियादीनां हेतुत्वकल्पनात्, तत्र तदङ्गीकारे तु संसारावस्थातोऽविशेषः स्यादिति भावः। ननु सावच्छिन्नानुभवं प्रत्येव देहेन्द्रियादीनां हेतुत्वं न तु निरवच्छिन्नानुभवं प्रति, अतस्तदा देहेन्द्रियादि-

(१) सर्वदा प्राप्तस्य स्वरूपसम्बन्धः। अनेन सम्बन्धेन सर्वदा ब्रह्मणो जीवे सत्त्वेऽपि कण्ठे विद्यमानचामीकरादाविव सम्बन्धस्याभावदशायां सम्बन्धेपीच्छोदयेन कण्ठचामीकरन्यायेन विद्योपलक्षितसच्चिदानन्दस्वरूपब्रह्मावाप्तेः 'ब्रह्मैव सन्ब्रह्माप्येति' इति सिद्धायाः क्रियाया व्यवधानाभावात्पुमर्थत्वं युक्तमिति भावः। इति पाठः खपुस्तकेऽधिकः।

व्यञ्जकाभावेऽपि तत्संवेदनाभ्युपगमे संसारदशायाम- पि तथा प्रसङ्गात् । न द्वितीयः । अपुरुषार्थतापत्तेः । ज्ञायमानस्यैव तस्य पुरुषार्थत्वात् । अत एव शर्करात- द्भोजिनोरिवेति वैष्णवंमन्यानामुद्गार इति चेन्नेत्याह-

न्यायरत्नावली ।

ता-काम्यता । ज्ञायमानस्येति । अनावृतसुखमेव काम्यते अत एव तवावृतसुखं मया सम्पाद्यमिति केनाचित्प्रतारितः पुरुषो व- दति मास्तु मे तत्सुखमिति । शर्करेति । यथा शर्करा स्वरूपेण न सुखप्रकाशः, तत्प्रयोजकस्य शर्करासंवेदनस्याभावात् ; किन्तु तद्भोजिनस्तत्संवेदनवतः । एवं विष्णुभावापन्नस्य सुखरूपत्वेऽपि न सुखप्रकाशः, तत्संवेदनाभावात् ; किन्तु तद्भेदेनावस्थितस्य 'अयं विष्णुस्सकलकल्याणगुणो मत्सेव्य' इति संवेदनवतः । त- स्मात् विष्णुभावो न मोक्षः, किन्तु तत्सन्निधिस्थितस्य तत्संवे- दनमिति । तदेतन्मतमाश्रिता माध्वाः वैष्णवंमन्या एव न तु वैष्णवाः ।

नारायणी ।

भावेऽपि न हानिरिति तत्राह —व्यञ्जकेति । देहेद्रियादिरूपव्यापकाभावेपी- त्यर्थः । तत्संवेदनेति । नित्यसुखसंवेदनेत्यर्थः । संसारदशायां—मोहतत्का- र्यान्यतरकाले, तथात्वप्रसङ्गात्,--संवेद्यत्वप्रसङ्गात्, व्यञ्जकसाम- ग्र्या अनपेक्षणादिति शेषः । पुरुषार्थत्वात्-काम्यत्वात्, असंवेद्यस्य पुम- र्थत्वे परकीयसुखादेरपि तथात्वापत्तेरिति संक्षेपः । अत एव—संवे- द्यस्य पुमर्थत्वाङ्गीकारादेव । शर्करेति । विशेषो ब्रह्मभावापन्नतद्भक्तयो- रिति शेषः । यथा शर्कराया रसरूपत्वेन न सुखानुभवस्तत्प्रयोजकस्य शर्करासंवेदनस्याभावात्, एवं ब्रह्मभावापन्नस्याखण्डानन्दानुभवरू- पत्वेऽपि न सुखाविर्भावः तत्संवेदनाभावात्, किन्तु शर्कराभोक्तुरिव तद्भक्तस्यैव भेदेनावस्थितस्य 'अयं विष्णुर्वैकुण्ठाधिपतिः सर्वेश्वरोऽखि- लगुणपरिपूर्णो मत्सेव्योऽहं तु दास इति संवेदनवतः । तस्माद् ब्रह्मभावो न मोक्षः, किन्तु तत्सन्निधिस्थितस्य तत्प्रसादेन निःशेषदुःखनिवृत्ति- विशिष्टः स्वतो नीचोच्चभावापन्नस्वरूपानन्दाविर्भावो विदेहमुक्तिः ।

न्यायरत्नावली ।

एवमेकमिदं ब्रह्म न भेदि सकलं जगत् ।
वासुदेवाभिधानस्य स्वरूपं परमात्मनः ॥
तदेतदुपदिष्टं ते संक्षेपेण महामुने ।
परमार्थं सारभूतं यत्तदद्वैतमशेषतः ॥
तद्भावभावनापन्नस्ततोऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥

नारायणी ।

अपरोक्षज्ञानसत्त्वेऽपि स्वयोग्यपरमानन्दहेतुपरमभक्त्यभावे मोचकस्येश्वरप्रसादस्याभावादारब्धकर्मणा संसारानुवृत्तौ तु जीवन्मुक्तिरिति । तदेतन्मतमाश्रिता माध्वादयो वैष्णवंमन्या एव न तु वैष्णवाः ।

एकः समस्तं यदिहास्ति किञ्चित्तदच्युता नास्ति परं ततोन्यत् ।
सोहं स च त्वं च हि सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥
एवमेकमिदं ब्रह्म न भेदि सकलं जगत् ।
वासुदेवाभिधानस्य स्वरूपं परमात्मनः ।
तदेतदुपदेश्यं ते संक्षेपेण महामुने ।
परमार्थसारभूतं यत्तदद्वैतमशेषतः ॥
तद्भावभावनापन्नस्ततोऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥

इत्यादिविष्णुपुराणाद्युक्तेः । ब्रह्मैव सन्ब्रह्माप्येति, ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतेः । अधिकदर्शने दुःखद्वेषादेरपि संभवान्मधुविषसंपृक्तान्नवन्मुक्तेर्दुःखसंभिन्नसुखाविर्भावरूपत्वप्रसक्त्या हेयत्वोपपत्तेश्चेत्याद्यन्यत्र विस्तरः । मुक्तावुच्चनीचभावाङ्गीकारे तु 'अदृष्टमव्यवहार्य्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते' इति माण्डूक्यश्रुतिविरोधः ।

अनेकजन्मसाहस्रीं संसारपदवीं व्रजन् ।
मोहश्रमं प्रयातोऽसौ वासनारेणुगुण्ठितः ॥
प्रक्षाल्यते यदा सोऽस्य रेणुर्ज्ञानोष्णवारिणा ।
तदा संसारिपान्थस्य याति मोहश्रमः श म् ॥
मोहश्रमे शमं याते स्वस्थान्तःकरणः पुमान् ।
अनन्यातिशयाबाधं परं निर्वाणमृच्छति ।

स्वतस्सिद्धभावादिति । स्वप्रकाशज्ञानरूपत्वादित्यर्थः । यद्यपि संसारदशायामविद्यावृतस्वरूपत्वादात्मा परमानन्दरूपतया न प्रथते, तथापि तत्त्वविद्ययाऽविद्यानिवृत्तौ स्वप्रकाशतया स्वयमेव परमानन्दतया प्रकाशत इति न व्यञ्जकापेक्षा । ननु सुखस्य स्वप्रकाशज्ञानरूपत्वेऽपि नात्मरूपता । ज्ञानस्य धात्वर्थरूपतया क्रियात्वेन साश्रयत्वात्, जानामीति प्रतीतेर्ज्ञानमहमस्मीत्यप्रतीतेश्च;

न्यायरत्नावली ।

इति विष्णुपुराणाद्युक्तेः । 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुतेश्चेति भावः । प्रथते-भाति । प्रकाशते-संशयाद्यविषयत्ववान् । स्वयमेवेत्यस्य संशयाद्यविषयत्वेऽन्वयः । तथा च पूर्णानन्दस्य संसारकाले संशयादिविषयत्वमावरणप्रयुक्तम् । आवरणनिवर्तकवृत्तिनाशोत्पत्तिक्षणपर्यन्तक्षणत्रये संशयाद्यविषयत्वं तु तादृशवृत्तिप्रयुक्तम् । तदुत्तरकाले तु वृत्त्यभावेऽप्यावरणाभावादेव तदि·

नारायणी ।

इति विष्णुपुराणविरोधश्च । कैवल्ये ज्ञानमात्रस्य हेतुत्वात् भगवत्प्रसादश्चैतादृशनिष्ठाविरोधिविघ्ननिवारण उपक्षीयते । तदुक्तम्—

तस्माददृष्टश्रुतदूषणं परं भक्त्यैकयेशं भजतात्मलब्धये ।

इति दिक् । स्वप्रकाशरूपत्वेऽपि ब्रह्मणो व्यञ्जकं विना संसारकाल इव मुक्तिकाले प्रकाशायोगात्कथं पुरुषार्थत्वमित्याशङ्क्य व्यञ्जकाभावेप्यनावृतत्वरूपविशेषबलादेव प्रकाशसम्भवात्तस्य तद्युक्तमित्याह—यद्यपीत्यादि । न प्रथते—न भाति, प्रकाशते—भाति, अनावृतत्वेन संशयाद्यविषयत्वात् । न व्यञ्जकापेक्षा—न वृत्त्यपेक्षा, तथाच मुक्तिकालेऽनावृतत्वेन भासमानस्य पुमर्थत्वं युक्तमिति भावः । पुरुषार्थस्योपपादनेऽपि नाद्वैतं सिद्ध्यति, धर्मरूपतया तस्यातिरिक्ताश्रयावश्यंभावात्; न च धर्मिरूपमेव तत्, प्रत्यक्षविरोधादित्यभिप्रेत्याशङ्कते—नन्विति । आत्मरूपत्वाभावे हेतुमाह—ज्ञानस्येति । सुखज्ञानयोरेकत्वाङ्गीकारादिति भावः । साश्रयत्वात्—स्वभिन्नधर्मिवृत्तित्वात् । साश्रयत्वे प्रमाणमाह—जानामीति । साश्रयत्वांशे भ्रमोस्तु तत्राह—ज्ञानमिति । बाध·

तथा च कथमद्वैतवाद इत्याशङ्क्य नेत्याह–अनन्याश्रयत्वादिति। 'यत्साक्षादपरोक्षाद् ब्रह्म, अयमात्मा सर्वान्तरः, सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्मे'ति श्रुतेः स्वप्रकाशज्ञानानन्दरूप एवात्मा। अन्तःकरणाद्युपाधितादात्म्याध्यासेन च तद्वृत्तौ ज्ञानाध्यासाज्जानामीति तदाश्रयत्वप्रतीतिः। धात्वर्थत्वमुत्पत्तिविना-

न्यायरत्नावली।

ति भावः। साश्रयत्वात्–स्वसमानसत्ताकाश्रयकत्वात्। अद्वैतेति। अद्वैतज्ञानेत्यर्थः। अन्तःकरणेति। आत्मनि मनस्तादात्म्याध्यासेनेत्यर्थः। तद्वृत्तौ–तत्परिणामरूपायां वृत्तौ। ज्ञानाध्यासात्–स्वधर्मत्वेन कल्पितस्यात्मस्वरूपस्य ज्ञानस्य तादात्म्याध्यासात्। धात्वर्थत्वेत्यादि। धात्वर्थत्वं जानातीत्यादिधातुवाच्य-

नारायणी।

कं विना भ्रमत्वकल्पनाया अन्याय्यत्वादिति भावः। जानामीत्यादिप्रतीतेरन्तःकरणतद्धर्मवृत्तिविषयकत्वेन सावकाशत्वान्निरवकाशश्रुतिसिद्धज्ञानत्वमेवोचितमित्यभिप्रेत्य तदर्थिकां श्रुतिमुदाहरति--यत्साक्षादित्यादि। एवञ्चात्मनः स्वप्रकाशत्वबोधनद्वारा ज्ञानात्मत्वज्ञापिका (एषा), 'यः सर्वान्तरः' इति व्यापकत्वबोधनेनाखण्डताज्ञापिका, 'सत्यं ज्ञानमनन्तमि'ति च धर्मधर्मिभावनिरासेन साक्षात् ज्ञानात्मत्वज्ञापिका, विज्ञानमानन्दमि'ति तु ज्ञानानन्दयोरेकत्वबोधिका, तदेवाह--स्वप्रकाशेति। प्रत्यक्षस्य सावकाशतां दर्शयति--अन्तःकरणेति। आत्मनि मनस्तादात्म्याध्यासेनेत्यर्थः। तद्वृत्तौ--अन्तःकरणपरिणामरूपायां वृत्तौ, ज्ञानाध्यासात्--आत्मरूपज्ञानस्य तादात्म्याध्यासात्, तदाश्रयत्वप्रतीतिः--जानामीति ज्ञानाश्रयत्वप्रतीतिः, तथा चास्मन्मते ज्ञानसुखादिवृत्तीनां मनोधर्मत्वात्तादृशप्रतीतीनां विशिष्टाहङ्कारे स्वरूपज्ञानसुखतादात्म्यापन्नमनोधर्मरूपवृत्तिविषयकत्वेनानुपपत्त्यभावान्न तद्विरोधेनात्मनो ज्ञानानन्दत्वस्यासिद्धिरिति भावः। यद्यात्मैव ज्ञानं तर्हि नित्यतया धात्वर्थत्वानुपपत्तिः। धात्वर्थक्रियायाः कारणसाध्यत्ववत्साश्रयत्वाच्च, एवं ज्ञानमुत्पन्नं नष्टमिति प्रतीतयोऽनुपपन्ना इत्याशङ्क्यान्तःकरणवृत्तेरेव धात्वर्थत्वाद्यङ्गीकारा-

शवत्त्वं चान्तःकरणवृत्तेरेवेति ज्ञप्तिरूपसु(१)खज्ञानस्य सर्वाधिष्ठानत्वेनान्याश्रयत्वाभावान्न द्वैतापत्तिः। तेन ज्ञानसुखात्मक आत्मा सत्यः, तद्भिन्नं च सर्वं जगदसत्यमिति सिद्धम् ॥ ९ ॥

ननु सर्वस्य जगतस्तुच्छत्वे तन्निषेधेनात्मतत्त्वप्रतिपत्तिर्न स्यात्। न हि शशविषाणं निषिध्यते।

न्यायरत्नावली।

त्वम्। वृत्तेः-वृत्त्यवच्छिन्नाचितः। सुखादिज्ञानमपि सुखादिरूपवृत्त्यवच्छिन्नाचिदेव। वस्तुतस्तु वृत्तेर्वर्तमानरूपसम्बन्धस्य असत्त्वापादकाज्ञानशून्यत्वविशिष्टचित इति यावत्। एतेन यस्य विषयस्य ज्ञाने तदाकारवृत्त्यवच्छिन्नचित् तस्य ज्ञानमिति वाच्यम्। तथा च सुखादिस्थले तथा न सम्भवतीत्यपास्तम्। ज्ञप्तीति। चिदित्यर्थः। सर्वाधिष्ठानत्वेन-स्वान्यसर्वाधारत्वेन। अन्याश्रयत्वेति। अन्याश्रितत्वेत्यर्थः। ज्ञानसुखात्मकः-ज्ञप्तिसुखस्वरूपात्मकः ॥ ९ ॥

नारायणी।

त्वानुपपत्तिगन्धोपीत्याह--धात्वर्थत्वमिति। धात्वर्थत्वं ज्ञाऽवबोधन इत्यादिधातुपदेन बोध्यक्रियारूपता, वृत्तेरेव-वृत्त्यवच्छिन्नचित एव। ज्ञप्तिरूपसुखज्ञानस्य—शुद्धचिद्रूपसुखाभिन्नज्ञानस्य। अन्याश्रयत्वाभावात्--अन्याश्रितत्वाभावात्, न द्वैतापत्तिः—नाश्रयावश्यंभावनिबन्धनद्वैतापत्तिः, क्रियारूपत्वाभावेनाश्रयानपेक्षणात्, तथा चाहङ्कारज्ञानयोर्विशिष्टविवक्षायां नाहं ज्ञानमिति प्रतीतिः तयोर्धर्मधर्मिभावाङ्गीकारात्, निष्कृष्टविवक्षायां त्विष्टापत्तिरेवेति न काप्यनुपपत्तिरिति भावः। ज्ञानसुखात्मकः- ज्ञानाभिन्नसुखात्मक इत्यर्थः ॥ ९ ॥

दशमश्लोकमवतारयति—नन्विति। जगतः—शुद्धचिन्मात्रभिन्नस्य, तुच्छत्वे—शशविषाणादिवदलीकत्वे, तन्निषेधेन—एकमेवाद्वितीयमिति द्वैतनिराकरणेन, आत्मतत्त्वप्रतिपत्तिः—अद्वितीयात्मयाथार्थ्यज्ञानम्, प्रतियोगिज्ञानं विनाऽभावबुद्धेरनुदयादिति भावः। अप्रसिद्धप्रतियोगिक-

(१) ज्ञप्तिरूपसुखज्ञानस्येति कखपुस्तकयोः।

'क्वचित्प्रमितं क्वचिन्निषिध्यत' इति न्यायात्। तथा च निषेधानुपपत्त्यैव न जगतस्तुच्छत्वमिति नेत्याह--

न चैकं तदन्यद् द्वितीयं कुतस्स्या-
न्न वा केवलत्वं न चाकेवलत्वम्।
न शून्यं न चाशून्यमद्वैतकत्वा-
त्कथं सर्ववेदान्तसिद्धं ब्रवीमि॥ १०॥

एकत्वसङ्ख्यायोगि एकम्। तदपेक्षाबुद्धिजन्यद्वित्वसङ्ख्यायोगि द्वितीयम्। तत्र एकाभावे द्वितीयं कुतः

न्यायरत्नावली।

क्वचित् प्रमितमित्यादि। प्रतीयमानं सर्वं सत्यमेव परन्तु एकत्र प्रमितमन्यत्र निषिध्यत इत्यन्यथाख्यातिविशेषवादिनां मतम्। तदपेक्षाबुद्धीति। नानैकत्वसापेक्षबुद्धीत्यर्थः। 'अयमेकोऽ

नारायणी।

निषेधोस्तु तत्राह—न हीति। किमिति तत्राह—क्वचिदिति। क्वचिद्देशान्तरे क्वचिद् भ्रमाधिष्ठाने निषिध्यते भ्रमप्रसिद्धिमादायापीति भावः। भ्रमस्यान्यत्र प्रमामूलकत्वदर्शनात्तत्र तद्भ्रमप्रसिद्धिमादाय तस्य निषेधेऽन्यत्र प्रमितत्वावश्यकत्वान्न भ्रममात्रप्रसिद्धिमादाय तन्निषेधः तर्कसह इति भावः। अत एवानिर्वचनीयत्वमङ्गीक्रियत इत्यापातवेदान्तिनामुक्तिमात्रं न प्रामाणिकमित्यभिप्रेत्याह—तथा चेति। वास्तवाभावप्रतियोगित्वमेवानिर्वचनीयत्वम्, तज्ज्ञानं चाभावप्रतियोगिताज्ञानाधीनम्, प्रतियोगिज्ञानं च परोक्षं भ्रमात्मकं वा अन्यत्र प्रतियोगिप्रमाधीनम्, प्रमा च विषयसत्ताधीना ततश्च विषयस्य ब्रह्मणि निषेधेऽन्यत्र सत्त्वमवश्यमङ्गीकार्यम्, अन्यथा तन्निषेधानुपपत्तेरित्याद्यन्यत्र विस्तरः। 'एकधैवानुद्रष्टव्य'मिति श्रुतेर्निर्विकल्पात्मज्ञानमेव कारणं न द्वितीयाभावप्रकारकमतस्तज्ज्ञानार्थं प्रतियोगिसत्त्वापादनमनुपयुक्तमित्यभिप्रायकं न चैकमिति श्लोकं व्याचष्टे—एकत्वेति। अयमेकोयमेक'इति गणनव्यवहारासाधारणकारणमेकत्वसङ्ख्या तद्विशिष्टमित्यर्थः। तदपेक्षेति। अनेकैकत्वसापेक्षबु-

स्यात् ? द्वितीयं च तृतीयादीनामप्युपलक्षणम्। ननु 'एकमेवाद्वितीयमि'ति श्रुत्या एकत्वं प्रतिपाद्यते। नेत्याह-न वा केवलत्वमिति। केवलत्वम् एकत्वम्। तस्याविद्यकत्वात्। यद्यात्मन एकत्वं श्रुत्या न प्रतिपाद्यते, तर्हि प्रत्यक्षादिप्रमाणवशादनेकत्वमेव स्यादिति चेन्नेत्याह-न चाकेवलत्वमिति। अकेवलत्वम् अनेकत्वम्। 'नेह नानास्ति किञ्चन, एकमेवाद्वितीयं ब्रह्म, अथात आदेशो नेति नेतीत्यादिश्रुतिभ्यः। तर्हि सर्वप्रतिषेधाच्छून्यमेव स्यादिति नेत्याह-न शून्यमिति। 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्। अस्ति

न्यायरत्नावली।

यमेक' इत्येकत्वद्वयविषयकज्ञानेति यावत्। आविद्यकत्वात्-'अतोऽन्यदार्तमि'ति श्रुतिबाधितत्वात्। अनेकत्वं-द्वित्वसम्बन्धित्वम्। इह ब्रह्मणि नाना तद्भिन्नं किञ्चन नेत्यर्थः। 'विनञ्भ्यां नानाञौ न सह' इत्यनेन सूत्रेण नसहशब्दार्थे भेदादौ वर्तमानाभ्यां विनञ्भ्या-

नारायणी।

द्वीत्यर्थः। अयमेकोऽयमेक इत्येकत्वद्वयविषयकत्वज्ञानमिति यावत्। द्वितीयं कुतः स्यादिति। द्वितीयाऽप्रसिद्ध्या तदभावानिरूपणप्रसक्तिरिष्टैवेति भावः। नन्विति। आविद्यकत्वात्—धर्मरूपत्वेन तस्याविद्याकार्यत्वादित्यर्थः। तदप्याविद्यकं बाधितमिति भावः। अनेकत्वं-द्वितीयसम्बन्धित्वम्, इह-ब्रह्मणि, नाना-भिन्नम्, किञ्चन-किमपि, 'एकमेवाद्वितीयमि'ति सजातीयविजातीयस्वगतभेदरहितमित्यर्थः। अथेति। मूर्तामूर्तकथनानन्तरम्। आदेशः-अज्ञातार्थज्ञापनम्। नेति नेतीति। पूर्वोक्तं मूर्तामूर्तात्मकं नास्ति नास्तीत्यर्थः। 'असन्नेव स भवति'-पुमर्थसम्बन्धी न भवति, 'असद्ब्रह्मेति वेद चेत्' चेत्-यदि, असत्-अविद्यमानम्, ब्रह्म वेद-जानाति। शून्यसाक्षितयापि ब्रह्मणोऽस्तित्वमावश्यकमित्यभिप्रेत्याह—अस्ति ब्रह्मेति। अस्तीति वेद जानाति, चेत्-यदि, सन्तं-परमार्थसदात्मापन्नम्, एनम्-एवंविदम्, विदुः-ब्रह्मविदो ज्ञातवन्तः, तस्मादस्तित्वदर्शनात्सोऽन्येषां ब्रह्मविद्भिर्ज्ञेयो भवतीत्यर्थः।

ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदु'रिति, सत्यं ज्ञानमनन्तं ब्रह्म। 'सदेव सोम्येदमग्र आसी' दित्युपक्रम्य ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी'त्यादिश्रुतिभिः सत्यत्वप्रतिपादनात्, सर्वभ्रमाधिष्ठानत्वात्सर्वबाधावधित्वाच्च। तर्हि सत्यत्वज्ञानत्वादिधर्मवदपि

न्यायरत्नावली।

ब्दाभ्यां नानाङ्प्रत्ययौ भवत इत्यर्थकेन नञ्छब्दात् स्वार्थिकनाङ्प्रत्ययान्तात् नानापदनिष्पत्तेस्तस्य भेदार्थकत्वात्। ऐतदात्म्यम्–एतदात्मकम्, अशून्यं–सत्यत्वादेयुक्तम्। सर्वभेदेति। सजाती-

नारायणी।

श्रुत्यन्तरमाह—सत्यमिति। सत्यं-त्रिकालाबाधितम्, ज्ञानम्-ज्ञप्तिरूपम्, अनन्तं-न विद्यतेऽन्तः देशकालवस्तुपरिच्छेदलक्षणो यस्य तत्। श्रुत्यन्तरं–सदेवेति। इदं–नामरूपात्मकम्, अग्रे–सृष्टेः पूर्वं, सदेवासीत्–अधिष्ठानभूतसन्मात्रमासीदित्यर्थः। यथा घटःस्वोत्पत्तेः पूर्वं मृदेव तद्वदिति भावः। ऐतदात्म्यमिदम्–एतदात्मस्वरूपं सर्वं जगत्। सदेवेत्यादौ स्पष्टं (१)ब्रह्मात्मत्वं न लभ्यत इत्यत आह–इत्यादीति। 'ब्रह्मैवेदं विश्वम्' 'आत्मैवेदं सर्वमि'त्यादिश्रुतिभिरित्यर्थः। तथाचेयं श्रुतिः श्रुत्यन्तरेणैव व्याख्यातेति भावः। आत्मैवेदमित्यादौ श्रुत्यर्थस्तु यथा यो राधेयः स कौन्तेय इत्यादौ यथा राधापुत्रत्वेन प्रतीतः कर्णो न वस्तुतो राधापुत्रः किन्तु कुन्तीपुत्र इति, तथा नामरूपात्मना प्रतीतमिदं जगत् न वस्तुतोस्ति किन्त्वात्मैव सद्रूपः सर्वाधिष्ठानभूत इति बाधायां सामानाधिकरण्यम्,(२) अतो न सर्वाभेदकृतविकारित्वादिसंभावनापीति दिक्। श्रुत्या सत्यत्वं समर्थ्य युक्त्यापि तदाह—सर्वेति। सर्वभ्रमकारणीभूताज्ञानविषयत्वादित्यर्थः। एतदुक्तिकृत्यमाह—सर्वेति। सर्वबाधकप्रमाविषयत्वादित्यर्थः।

(१) ब्रह्मात्मत्वेन लभ्यते इति पाठः। परश्चासङ्गतत्वात् परिवर्तितः।

(२) अत एव न सर्वब्रह्मबोधकसर्वमिथ्यात्वश्रुत्योरन्योन्यं विरोधः, रज्जुरियं न सर्प इत्यादेरेवोपदेशभेदस्य भिन्नाधिकारिकस्य फलत एकार्थत्वात्। तथाहि छायादृष्टान्ते स्वरूपजिज्ञासुं प्रति प्रथमो भीतं प्रति द्वितीयस्तथा अत्रापि जगत्तत्त्वजिज्ञासुं प्रति प्रथमः संसाराद्भीतं प्रति द्वितीयः। तत्र प्रथमेन भावमुखतोऽर्थान्निषिध्यते द्वितीयेन साक्षादित्यर्थः। अतएव न सर्वाभेदकृतविकारित्वादिसम्भावनापीति दिक्। इति पाठोऽधिकः खपुस्तके।

स्यात्? नेत्याह—न चाशून्यमिति । एकमद्वितीयमिति पदद्वयेन सर्वभेदप्रतिषेधेऽप्येवकारेण धर्मधर्मिभावादिभेदप्रतिषेधात् । सर्वत्र हेतुमाह—अद्वैतकत्वादिति । द्विधा इतं द्वीतं तस्य भावो द्वैतम् । तदुक्तं वार्तिके—

द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते । इति ।

न विद्यते द्वैतं द्विधाभावो यत्र तदद्वैतमित्यक्षरार्थः। 'स-

न्यायरत्नावली ।

यविजातीयप्रतियोगिकभेदेत्यर्थः । धर्मधर्मिभावादीति । धर्मधर्मिभावादिप्रयोजकौ यौ भेदाभेदौ, तत्प्रतिषेधादित्यर्थः । भेदमात्रे स्वीकृते सामानाधिकरण्यप्रत्ययानुपपत्तेः । अभेदमात्रे स्वीकृते धर्मधर्मिभावानुपपत्तेः भेदाभेदौ स्वीक्रियेते । तत्र भेदस्य धर्मिप्रतियोगिभावादिसापेक्षत्वेन संसृष्टत्वेन च मिथ्यात्वादभेदस्यापि भेदाभावरूपत्वादिरूपेण तादृशत्वादेवकारेण निषेधः । तदुक्तं खण्डने-एकमद्वितीयमित्युक्त्वा यदेवकारमादत्ते श्रुतिस्तदात्यन्तिकाद्वैतं प्रतिपादयितुमिति । द्विधाभावः-प्रकारद्वयसत्ता । सद्रूपाधिष्ठानसंसर्गस्य घटादिरूपारोप्यस्य च 'सन् घट' इत्यादिभ्रमसिद्धस्य च सत्ता यत्र शुद्धे ब्रह्मणि न विद्यते, तदद्वैतम् । तत्त्वादिति हेत्वर्थः । सलिल इति । आचारार्थक्विबन्तत्वात् सलिलमिवाचरतीत्यर्थः, निर्मल इति यावत् । अत एव नपुंसकस्यापि

नारायणी ।

तथाच जगद्बाधान्यथानुपपत्त्या बाधकप्रमाविषयस्य तस्य सत्यत्वमावश्यकमेव शुक्तिरजतादौ अधिकसत्ताकगोचर प्रमाया एव न्यूनसत्ताकबाधकत्वदर्शनादिति भावः । सर्वप्रतिषेधेऽपि-सजातीयविजातीयनिराकरणेपि धर्मेति । धर्मधर्मिभावप्रयोजकौ यौ भेदाभेदौ तत्प्रतिषेधादित्यर्थः । भेदमात्रेऽङ्गीकृतेऽश्वमहिषयोरिव सम्बन्धानुपपत्तेः । भेदस्यानिर्वाच्यत्वेनाभेदस्यापि तदभावरूपस्यानिर्वाच्यस्वात्तयोर्द्वयोरपि निषेधः । सलिलमिव सलिलः, स्वच्छो निरुपाधिक इति यावत् । एकः सजातीयभेदशून्यः, अद्वैतः—विजातीयरहितः, तथापि प्रति-

लिल एको द्रष्टाद्वैत' इति श्रुतेः। प्रतियोगिज्ञानस्यैव लाघवेनाभावबुद्धौ कारणत्वात्, द्वैतस्यानिर्वचनीयत्वाङ्गीकारेण प्रत्यक्षादिवेद्यत्वान्निषेधोपपत्तिरित्यर्थः। त-

न्यायरत्नावली।

सलिलपदस्य पुंस्त्वोपपत्तिः। प्रतियोगीत्यादि प्रमितमेव निषिध्यते इति यद्दूषणमुक्तं तत् समाधत्ते—प्रतियोगीति। ज्ञानस्य—ज्ञानत्वेन। लाघवेन—प्रमात्वानिवेशलाघवेन। न च विशेषणतावच्छेदकप्रकारकधीविधया प्रतियोगिज्ञानस्य कारणत्वं वाच्यम्, तत्राप्रमात्वनिश्चये अभावज्ञानानुदयात् अनाहृतेन प्रतियोगिप्रमात्वेन हेतुत्वोक्तेरावश्यकत्वमिति वाच्यम्। तत्र प्रमात्वानिश्चयेसत्यप्यभावज्ञानोदयेनानाहृतप्रमात्वेन हेतुत्वास्वीकारात्, अनाहृतप्रमात्वीयप्रातीतिकसंसर्गस्य भ्रमेऽपि सत्त्वेनाप्रमात्वनिश्चयाभावकाले भ्रमादप्यभावबुद्धिसम्भवेन च भ्रमसाधारणकारणतासम्भवेनास्मदिष्टाविघाताच्च। ज्ञानस्यैव कारणत्वात् द्वैतस्य प्रत्यक्षादिवेद्यत्वाच्च निषेधोपपत्तिरिति योजना। ननु प्रत्यक्षादिप्रमाणवेद्यस्य कथं निषेधस्तत्राह—अनिर्वचनयित्वाङ्गीकारेणेति। मिथ्यात्वस्वीकारेणेत्यर्थः। तथा च प्रत्यक्षादीनां न तात्त्विकं प्रामाण्यं येन निषेधावरोधः, किन्तु व्यावहारि-

नारायणी।

-योगिज्ञानस्यावश्यकत्वमागतमेव ततश्च तद्दोषतादवस्थ्यमत आह—प्रतियोगीत्यादि। ज्ञानस्यैव न तु प्रमायाः। लाघवेन—प्रमात्वानिवेशलाघवेन, अगृहीताबाधितार्थज्ञानत्वरूपप्रमात्वापेक्षया ज्ञानत्वस्य लघुशरीरत्वादिति भावः। अत्र ज्ञानस्यैव कारणत्वात्, द्वैतस्य च प्रत्यक्षादिवेद्यत्वात् निषेधोपपत्तिरिति योजना। ननु प्रत्यक्षादिवेद्यस्य कथं निषेधस्तत्राह—अनिर्वचनीयेति।। मिथ्यात्वाङ्गीकारेणेत्यर्थः। तथाच प्रत्यक्षादीनां न तात्त्विकं प्रामाण्यं येन तत्सिद्धस्य निषेधोनुपपन्नः स्यात्, किन्तु व्यावहारिकम्, विशेष्ये विशेषणसंसर्गमात्रबोधजननादिति

